यद्वेवान्तरोपसदौ चिनोति । ( त्यं ) एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति त ऽएतान्वज्रानपश्यन्नुपसदो वज्रा वा ऽउपसदस्तान्प्रापद्यन्त तान्प्रपद्याभयेऽनाष्ट्र ऽएतमात्मानꣳ समस्कुर्वत तथो ऽएवैतद्यजमान ऽएतान्वज्रान्प्रपद्याभयेऽनाष्ट्र ऽएतमात्मानꣳ सꣳस्कुरुते ॥२॥

( त्ऽ ) एतदु ह यज्ञे तपः । ( पो ) यदुपसदस्तपो वा ऽउपसदस्तद्यत्तपसि वीयते तस्मात्तापश्चितस्तद्वै यावद्देवोपसद्भिश्चरन्ति तावत्प्रवर्ग्येण संवत्सरमेवोपसद्भिश्चरन्ति संवत्सरं प्रवर्ग्येण ॥ ३ ॥

( णा ) अहोरात्राणि वा ऽउपसदः । ( ऽ ) आदित्यः प्रवर्ग्यो ऽसुं तदादित्यमहोरात्रेषु प्रतिष्ठापयति तस्मादेषो ऽहोरात्रेषु प्रतिष्ठितः ॥ ४ ॥

---

यद्वेवान्तरोपसदौ चिनोति । एतद्वै देवा अबिभयुः—यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति । त एतान्वज्रानपश्यन्नुपसदः । वज्रा वा उपसदः—तान्प्रापद्यन्त । तान्प्रपद्याभयेऽनाष्ट्र एतमात्मानं समस्कुर्वत । तथैवैतद्यजमान एतान्वज्रान्प्रपद्याभयेऽनाष्ट्र एतमात्मानं संस्कुरुते ॥ २ ॥

एतदु ह यज्ञे तपो—यदुपसदः । तपो वा उपसदः । तद्यत् तपसि चीयते । तस्मात्तापश्चितः । तद्वै यावद्देवोपसद्भिश्चरन्ति—तावत्प्रवर्ग्येण । संवत्सरमेवोपसद्भिश्चरन्ति । संवत्सरं प्रवर्ग्येण ॥ ३ ॥

अहोरात्राणि वा उपसदः, आदित्यः प्रवर्ग्यः । अमुं तदादित्यमहोरात्रेषु प्रतिष्ठापयति । तस्मादेषोऽहोरात्रेषु प्रतिष्ठितः ॥ ४ ॥

---

प्रकारान्तरेण तत्काल स्तौति—यद्वेवान्तरोपसदौ चिनोतीति । वज्रा वा उपसद इति । शत्रुनाशकत्वादुपसदां वज्रत्वम् । शिष्टं पूर्ववद् व्याख्येयम् ॥ २ ॥

तापश्चितोऽग्निचयनस्य नाम दर्शयति—एतदु ह यज्ञे तपो यदुपसद इति । अत्र 'एतद् यज्ञे तपः' इत्यत्र तपःशब्दो भवति ; 'तपस्तापनिर्माणयन्ते' इत्यादिनियमविधान यासां तपस्त्वम्, यस्मात्तपसि दर्शनोत्पादकत्वात् तपसि चीयते तस्मादग्निस्तापश्चित इत्युच्यते । तत्र यावन्तमुपसद इत्याहुः तावद्भिः प्रवर्ग्यैश्चरेयुरित्यर्थः । उपसदन्तापश्चिते पक्षे सम्वत्सरमध्यमिना । तथा च कात्यायनः—" तापश्चिते दीक्षा संवत्सरमुपसदश्च तथा सुत्या । "—( का. श्रौ. सू. २४ । ६।१८ ) इति ॥ ३ ॥

उपसत्सु प्रवर्ग्यस्य प्रशंसति—अहोरात्राणि वा उपसद इति । अत्र तत्र तापश्चित 'उपसदः'—अत्र 'अहोरात्राणि' तत्र दैवैकस्मिन् दिने द्वे द्वे इति तयोरहोरात्ररूपत्वम् । तथा चैतरेयकम्—"यावेव पूर्वाह्णे उपसदमुपासते ते तेऽहोऽस्पृणुत, यावपराह्णे तया रात्रिम्—तस्मादहोरात्राणि ह्यन्तरायन्"—( ऐ. ब्रा. १।२।१२ ) इति । 'आदित्य' 'प्रवर्ग्य' तदात्मनोपासनत्वात् । तस्मादुपसत्सु प्रवर्ग्यचरणेन रात्र्यहसम्बन्धिषु 'अहोरात्रेषु' आदित्य प्रतिष्ठापितवान् भवति ॥ ४ ॥

(तोऽथ) अथ यदि चतुर्विंशतिः । (श्रु) चतुर्विंशतिर्वा अर्धमासा अर्धमासा उपसद आदित्यः प्रवर्ग्योऽमुं तदादित्यमर्धमासेषु प्रतिष्ठापयति तस्मादेषोऽर्धमासेषु प्रतिष्ठितः ॥ ५ ॥

(तोऽथ) अथ यदि द्वादश । द्वादश वै मासा मासाऽउपसदऽआदित्यः प्रवर्ग्योऽमुं तदादित्यं मासेषु प्रतिष्ठापयति तस्मादेष मासेषु प्रतिष्ठितः ॥ ६ ॥

(तोऽथ) अथ यदि षट् । षड्वाऽऋतवऽ ऋतवऽउपसद ऽआदित्यः प्रवर्ग्योऽमुं तदादित्यमृतुषु प्रतिष्ठापयति तस्मादेषऽऋतुषु प्रतिष्ठितः ॥ ७ ॥

(तोऽथ) अथ यदि तिस्रः । (श्रु) त्रयो वाऽइमे लोका ऽइमे लोका ऽउपसद ऽआदित्यः प्रवर्ग्योऽमुं तदादित्यमेषु लोकेषु प्रतिष्ठापयति तस्मादेष ऽएषु लोकेषु प्रतिष्ठितः ॥ ८ ॥

(तोऽथा) अथातश्चितिपुरीषाणामेव मीमाᳩंसा । मासं प्रथमा चिति-

---

अथ यदि चतुर्विंशतिः । चतुर्विंशतिर्वा अर्धमासाः । अर्धमासा उपसदः, आदित्यः प्रवर्ग्यः । अमुं तदादित्यमर्धमासेषु प्रतिष्ठापयति । तस्मादेषोऽर्धमासेषु प्रतिष्ठित ॥ ५ ॥

अथ यदि द्वादश । द्वादश वै मासाः । मासा उपसदः, आदित्यः प्रवर्ग्यः । अमुं तदादित्य मासेषु प्रतिष्ठापयति । तस्मादेष मासेषु प्रतिष्ठित. ॥ ६ ॥

अथ यदि षट् । षड्वाऽऋतव. । ऋतव उपसदः, आदित्यः प्रवर्ग्यः । अमुं तदादित्यमृतुषु प्रतिष्ठापयति । तस्मादेष ऋतुषु प्रतिष्ठितः ॥ ७ ॥

अथ यदि तिस्रः । त्रयो वा इमे लोकाः । इमे लोका उपसद', आदित्यः प्रवर्ग्य । अमुं तदा दित्यमेषु लोकेषु प्रतिष्ठापयति । तस्मादेष एषु लोकेषु प्रतिष्ठितः ॥ ८ ॥

अथातश्चितिपुरीषाणामेव मीमांसा । मासं प्रथमा चितिः । मास पुरीषम् । एतावान्वाऽसन्तिक ऋतौ कामः । तद् यावान्वाऽसन्तिक ऋतौ काम.–त तत्सर्वमात्मानमभिसञ्चिनुते ॥ ९ ॥

---

न केवलमेव तापश्चितौ किन्तु यत्र यत्राधिका न्यूना वा उपसद तत्र तत्र प्रवर्ग्यचरणादि यथावन्‌ कृत मवसीत्याह–अथ यदि चतुर्विंशतिरिति । क्रतुविशेषे चतुर्विंशतिसङ्ख्या ' उपसद ' कार्याः । संवत्सरस्य हि तावन्तोऽर्धमासा । तत्र प्रवर्ग्यचरणेन तेष्वर्धमासेष्वादित्य प्रतिष्ठापितवान् भवति ॥ ५ ॥

एवम्–अथ यदि द्वादश इति वाक्य योज्यम् । द्वादशाहे द्वादशोपसद ॥ ६ ॥

अथ यदि षडिति । सामा येन षडुपसदश्चित्याग्नेर्भवन्तीति ॥ ७ ॥

अथ प्रकृतौ तिस्र उपसद कार्या, तत्रापि प्रवर्ग्यचरणमिति दर्शयति–अथ यदि तिस्र इति । तिस्रणा मुपसदां लोकत्वात्मत्वं प्रागुक्तम् "इमानेव लोकान् पुरोऽकुर्वत' (ऐ. ब्रा ४ । ६ । २३) इति ॥ ८ ॥

एवमुपसदां मध्ये चयनमित्युक्तम्, तत्रोपसदां मध्येऽनुष्ठातव्यस्य चयनस्येष्टकाचितिपुरीषनिवपनयोरनुष्ठान

मा॒सं पु॑रीषमे॒तावा॑न्वासन्ति॒कऽऋ॒तौ का॒मस्त॒द्याव॑न्वासन्ति॒कऽऋ॒तौ का॒मस्तं॒ तत्सर्व॑मा॒त्मान॑मभि॒सं॑चिनुते ॥ ९ ॥

मा॒सं द्वि॒तीया । मा॒सं पु॑रीषमे॒तावा॑न्ग्रै॒ष्म ऽऋ॒तौ का॒मस्त॒द्याव॑न्ग्रै॒ष्म ऽऋ॒तौ का॒मस्तं॒ तत्सर्व॑मा॒त्मान॑मभि॒सं॑चिनुते ॥ १० ॥

मासं द्वितीया । मासं पुरीषम् । एतावान् ग्रैष्म ऋतौ कामः । तद् यावान्ग्रैष्म ऋतौ कामः—तं तत्सर्वमात्मानमभिसञ्चिनुते ॥ १० ॥

मासं तृतीया । मासं पुरीषमेतावानार्षिकेऽक्रतौ कामस्तद्यावानार्षिकेऽक्रतौ कामस्तं तत्सर्वमात्मानमभिसंचिनुते ॥ ११ ॥

मासं चतुर्थी । मासं पुरीषमेतावाञ्छान्दसेऽक्रतौ कामस्तद्यावाञ्छान्दसेऽक्रतौ कामस्तं तत्सर्वमात्मानमभिसंचिनुते ॥ १२ ॥

( तेऽय ) अथ पञ्चम्यै चितेः । ( २ ) असपत्ना विराजश्च प्रथमाहमुपदधाति स्तोमभागाऽएकैकामन्वहं ताः सकृत्ताऽउपयन्ति सकृत्सूददोहसाऽभिवदति तूष्णीं मासथं स्तोमभागाः पुरीषमभिहरन्त्येतावान्हैमन्तिकेऽक्रतौ कामस्तद्यावान्हैमन्तिकेऽक्रतौ कामस्तं तत्सर्वमात्मानमभिसंचिनुते ॥ १३ ॥

मासथं षष्ठी । मासं पुरीषमेतावाञ्छैशिरेऽक्रतौ कामस्तद्यावाञ्छैशिरेऽक्रतौ कामस्तं तत्सर्वमात्मानमभिसंचिनुतऽएतावान्तो द्वादशसु मासेषु कामः पर्यन्तेषु तद्यावान्द्वादशसु मासेषु कामः पर्यन्तेषु तं तत्सर्वमात्मानमभिसंचिनुते ॥ १४ ॥

---

मास तृतीया । मास पुरीषम् । एतावानार्षिके क्रतौ कामः । तद्यावानार्षिके क्रतौ कामस्तं तत्सर्वमात्मानमभिसंचिनुते ॥ ११ ॥

मास चतुर्थी । मास पुरीषम् एतावाञ्छान्दसे क्रतौ कामः । तद्यावाञ्छान्दसे क्रतौ कामस्तं तत्सर्वमात्मानमभिसंचिनुते ॥ १२ ॥

अथ पञ्चम्यै चितेः असपत्ना विराजश्च प्रथमाहमुपदधाति । स्तोमभागा एकैकामन्वहम् । ता सकृत्तादयति । सकृत्सूददोहसाऽभिवदति । तूष्णीं मास स्तोमभागाः पुरीषमभिहरन्ति । एतावान्हैमन्तिके क्रतौ कामः । तद्यावान्हैमन्तिके क्रतौ कामस्तं तत्सर्वमात्मानमभिसंचिनुते ॥ १३ ॥

मास षष्ठी मास पुरीषम् । एतावाञ्छैशिरे क्रतौ कामः । तद्यावाञ्छैशिरे क्रतौ कामस्तं

( १५४ ) अथ त्रीण्यहान्युपातियन्ति । यदहः शतरुद्रियं जुहोति यदह-रुपवसथो यदहः प्रसुतस्तद्यत्तेष्वहःसूपसदा चरन्ति तानि तस्य मास-स्याहोरात्राण्यथ यत्सर्वेण तदु तस्मिन्नृतावादित्यं प्रतिष्ठापयत्येतावान्वै त्रयोदशसु मासेषु कामः सप्तस्वृतुषु तद्यावांस्त्रयोदशसु मासेषु कामः सप्त-स्वृतुषु तं तत्सर्वमात्मानमभिसंचिनुते ॥ १५ ॥

स संवत्सरं प्रसुतः स्यात् । ( सः ) सर्वं वै संवत्सरः सर्वमेकशत-विधः सर्वेणैव तत्सर्वमाप्नोति यदि संवत्सरं न शक्नुयाद्विश्वजिता सर्व-

---

तत्सर्वमात्मानमभिसंचिनुते । एतावान्वै द्वादशसु मासेषु कामः षट्स्वृतुषु । तद् यावान्द्वादशसु मासेषु कामः षट्स्वृतुषु । त तत् सर्वमात्मानमभिसंचिनुते ॥ १४ ॥

अथ त्रीण्यहान्युपातियन्ति–यदहः शतरुद्रियं जुहोति, यदहरुपवसथः, यदहः प्रसुतः । तद् यत्तेष्वहःसूपसदा चरन्ति–तानि तस्य मासस्याहोरात्राणि । अथ यत्सर्वेण, तदु तस्मिन्नृता वादित्यं प्रतिष्ठापयति । एतावान्वै त्रयोदशसु मासेषु कामः सप्तस्वृतुषु । तद् यावांस्त्रयोदशसु मासेषु कामः सप्तस्वृतुषु । तं तत्सर्वमात्मानमभिसंचिनुते ॥ १५ ॥

स संवत्सरं प्रसुतः स्यात् । सर्वं वै संवत्सरः । सर्वमेकशतविधः । सर्वेणैव तत्सर्वमाप्नोति । यदि

---

चूडादृष्टिकानि षष्ठं चितिं सम्पादितेत्यर्थः । तदन्ते पुन्या पुरीषचितिरस्ति । तथा चाष्टमे काण्डे समाम्नातम्–" लोमभाजा उपधाय पुरीषं निवपति सा पञ्चमी चितिः " । " अथ यदत ऊर्ध्वमापुरीषात्सा षष्ठी " ( श. प । ८ । ५ । ४ । ७ । ८ ) इति । सर्वमात्मानमित्युक्त्वा सम्भूय प्रशंसति–एतावान् वै द्वादशसु मासेषु काम इति ॥ १४ ॥

अथ त्रीण्यहान्युपातियन्तीति । द्वादशस्य मासस्याष्टविंशतिसंख्याकैरहोभिः पुरीषनिवपनम् । तत उपरि द्वे अहनी पारिशेष्येण । एकमेव च सुत्यमहस्तथा संवत्सरो भवतीति तदेकमहरित्युच्यते । तानि त्रीण्यहानि पुरीषचितेरतिरिक्तानि भवन्ति । तान्यहानि विशिनष्टि–यदहः शतरुद्रियमिति । तेषु मध्ये प्रथमेऽहनि शतरुद्रियकर्मणोऽग्निविकर्षणान्तस्य प्रयोगं कुर्वन् । द्वितीयेऽहनि पञ्चगृहीताज्यहोमाद्यौपवसथ्यप्रयोगः । यस्मिन्नहनि प्रसुतः सोमोऽभिषुतो भवति तत्तृतीयमहः । " तमग्निं मासशोऽधिविपुरीषे " इति प्रकम्य सूत्रितम्–" नाकसत्प्रभृति मानं पुरीषं चोदनयोर्द्वादशकर्माणि पूर्वे " ( का. श्रौ. सू. १७ । १४८–१५४ ) इति । अयमर्थः–अग्निमत्सोमोपयोगिनोऽह्नो पूर्वेऽहनि विकर्षणादि कर्तव्यम् । अन्तिमेऽहनि पञ्चगृहीतादुपक्रम्य पारमावृत्तावत् तदादिविकल्पौपवसथ्यप्रयोग इति । तेष्वह सु यत्र-वर्गोपसदामनुष्ठानं तेन तस्य संवत्सराहन्तिमस्य त्रयोदशमासमकल्प्य सर्वस्मिन्नहोरात्रेषु आदित्यमकल्प्य स्थापनं कृतं भवतीत्यर्थः । उक्तत्रयोदशमासव्याहृत्येन पूर्वोक्तं सङ्ख्या प्रशंसति–एतावान् वै त्रयोदशस्विति ॥ १५ ॥

तत्र पुनरन्य सङ्ख्या विधत्ते–स संवत्सरं प्रसुतः स्यादिति । संवत्सरपर्यन्तं प्रसुतः सोमयागः स्यादिति

स ऋतुभिरेव सप्तविधः । षड्ऋतवः संवत्सर एव सप्तमी विधा तस्यै-
तस्य संवत्सरस्यैतत्तेजो य एष तपति तस्य रश्मयः शतं विधा
मण्डलमेवैकशततमी विधा ॥ २ ॥

स दिग्भिरेव सप्तविधः । (यो) ये प्राच्यां दिशि रश्मयः सैका विधा
ये दक्षिणायाᳬ सैका ये प्रतीच्याᳬ सैका य उदीच्याᳬ सैका य ऊ-
र्ध्वायाᳬ सैका येऽवाच्याᳬ सैका मण्डलमेव सप्तमी विधा ॥ ३ ॥

तस्यैतस्य परस्तात्कामप्रो लोकः । (कोऽमृ) अमृतं वै कामप्रममृत-
मेवास्य तत्परस्तात्तद्यत्तदमृतमेतत्तद्यदेतदर्चिर्दीप्यते ॥ ४ ॥

---

स ऋतुभिरेव सप्तविधः—षड्ऋतवः, संवत्सर एव सप्तमी विधा । तस्यैतस्य संवत्सरस्यैतत्तेजो—य एष तपति । तस्य रश्मयः शतं विधाः । मण्डलमेवैकशततमी विधा ॥ २ ॥

स दिग्भिरेव सप्तविधः, ये प्राच्यां दिशि रश्मयः सैका विधा । ये दक्षिणायां सैका । ये प्रतीच्यां सैका । य उदीच्यां सैका । य ऊर्ध्वायां सैका । येऽवाच्यां सैका । मण्डलमेव सप्तमी विधा ॥ ३ ॥

तस्यैतस्य परस्तात्—कामप्रो लोकः । अमृतं वै कामप्रम् । अमृतमेवास्य तत् परस्तात् । तद्यत्तद-मृतम्—एतत्तत्—यदेतदर्चिर्दीप्यते ॥ ४ ॥

---

संवत्सरस्यावर्तनादिति न पृथग्गणनेति तात्पर्यम् । एकस्मिन् मासि त्रिंशदहानि त्रिंशद्रात्रय इति षष्टिः सम्पद्यते । अर्धमासाश्चतुर्विंशतिः—मलिम्लुचसाहित्येन त्रयोदश मासाः । द्वौ द्वावृतू एकीकृत्य त्रय ऋतव इत्युक्तम् । एवं संवत्सरे शतं विधाः सम्पद्यन्ते संवत्सरः स्वयमेकशततमसंख्यापूरक इति तत्संख्यासम्पत्तिः ॥ १ ॥

तस्य संवत्सरस्यैकशतविधस्य सप्तविधाग्निना सम्पत्तिमृतुभिर्दर्शयति—स ऋतुभिरेव सप्तविध इति । 'षड्ऋतवः' ऋत्वात्मकः संवत्सरः सप्तम इत्यर्थः । सप्तविधस्याप्येकशतविधसंख्यासम्पत्तिमाह—तस्यैतस्येति । 'य' तपति स हि संवत्सरस्य तेजः, तस्य शतं रश्मयः, मण्डलमेकशततमसंख्यापूरकमिति तयोरन्योन्या-त्मकत्वम् ॥ २ ॥

प्रकारान्तरेण सम्पत्तिमाह—स दिग्भिरेव सप्तविध इति । तदुपपादयति—ये प्राच्यां दिशीति । प्राग्-दिग्भिश्चतसृभिर्विधाश्चतस्रः, ऊर्ध्वावाच्यौ द्वे, रश्मियुक्तं मण्डलं सप्तममित्युक्तसंख्यासम्पत्तिः ॥ ३ ॥

सप्तविधस्यैकशतपर्यन्तं प्रवदतः स्वर्गलोकः फलमिति दर्शयति—तस्यैतस्य परस्तात्कामप्र इति । 'एतस्य' संवत्सरमण्डलस्य 'परस्तात्' उपरिभागे सर्वकामपूरकः । 'अमृत' मरणधर्मरहितः 'लोक' अस्ति । अमृतलोकं विशिनष्टि—यदेतदर्चिर्दीप्यत इति । 'यदेतदर्चिः' तेजो 'दीप्यते' सोऽमृतलोक इत्यर्थः ॥ ४ ॥

तदेतद्वसु चित्रꣳ राधः । (स्तु) तदेष सविता विभक्ताभ्यः प्रजाभ्यो विभजत्यप्योषधिभ्योऽपि वनस्पतिभ्यो भूय ऽइव ह त्वेकाभ्यः प्रयच्छति कनीयऽ इवैकाभ्यस्तद्याभ्यो भूयः प्रयच्छति ता ज्योक्तमां जीवन्ति याभ्यः कनीयः कनीयस्ताः ॥ ५ ॥

(स्तु) तदेतदृचाऽभ्युक्तम् । (मि) विभक्तारꣳ हवामहे वसोश्चित्रस्य राधसः । सवितारं नृचक्षसमिति तदेतत्सर्वमायुर्दीर्घमनन्तꣳ हि तद्यदिदमाहुर्दीर्घं तऽआयुरस्तु सर्वमायुरिहीत्येष ते लोक ऽएतत्तेऽस्त्विति हैवैतत् ॥ ६ ॥

---

यदेतद् वसु चित्रं राधः । तदेष सविता विभक्ताभ्यः प्रजाभ्यो विभजति–अप्योषधिभ्यः, अपि वनस्पतिभ्यः । भूय–इव ह त्वेकाभ्यः प्रयच्छति, कनीय–इवैकाभ्यः । तद् याभ्यो भूयः प्रयच्छति–ता ज्योक्तमा जीवन्ति । याभ्यः कनीयः–कनीयस्ताः ॥ ५ ॥

तदेतदृचाऽभ्युक्तम्–" विभक्तारं हवामहे वसोश्चित्रस्य राधसः । सवितारं नृचक्षसम् "–( वा० सं० ३० । ४ ) इति । तदेतत्सर्वमायुर्दीर्घम् । अनन्तं हि तत् । यदिदमाहुः–" दीर्घं त आयुरस्तु । सर्वमायुरिहि "–इति । एष ते लोकः । एतत्तेऽस्त्विति हैवैतद् ॥ ६ ॥

---

आशिषोऽमृतफलत्वं सवितृसम्बन्धित्वं च प्रदर्शयति–तदेतद्वसु चित्रं राध इति । 'वसु' वासयोग्यं 'चित्रम्' नानाप्रकारं भूयोऽल्पभेदेन 'तदेतद्' अर्चीरूपं 'राधः' दीर्घायूरूपं फलम् 'एष सविता' आशिष्मान् 'विभक्ताभ्यः' स्थावरजङ्गमभेदेन तत्रापि मनुष्यपशुपक्ष्यादिरूपेण ओषधिवनस्पत्यादिरूपेण च 'विभक्ताभ्यः प्रजाभ्यः' विभज्य विभज्य प्रयच्छति । " अप्योषधिभ्योऽपि वनस्पतिभ्यः " इति ओषध्यादिभ्योऽपि प्रयच्छति । अनेन सर्वस्य विभज्य दानं कैमुतिकन्यायसिद्धमित्युक्तं भवति । तत्र दाने विशेषं दर्शयति–भूय इव ह त्वेकाभ्यः प्रयच्छतीति । 'ह तु' इति पदद्वयम् । इवशब्द एवार्थे । कतिपयाभ्यः प्रजाभ्यो 'भूयः' आयूरूपमेव राधः 'प्रयच्छति' । 'एकाभ्यः कनीयः' राधः । तत्र यासां भूयोदानम्, ताः 'ज्योक्तमाम्' चिरं जीवन्ति । आयुषो भूयस्त्वात्तद्भोगाय चिरकालजीवनम् । यासां कनीयःफलं, ता अल्पकालं जीवन्ति ॥ ५ ॥

सवितैव सर्वप्रजाभ्यो नानारूपं कामं ददातीत्यर्थं दाशतय्या मन्त्रसंवादेन द्रढयति–तदेतदृचाऽभ्युक्तमिति । अयमर्थः –'वसोः' वासयोग्यस्य 'चित्रस्य' नानाविधस्य 'राधसः' आयुर्लक्षणफलस्य विभक्तारं विभज्य प्रदातारम् । 'नृचक्षसम्' नृणां द्रष्टारं तत्कर्मसाक्षिणम् । यद्वा चष्टे, कर्मण्यसुन् । नृभिर्दृश्यमानं 'सवितारं हवामहे' । सर्वायुष्ट्वमिदानीमाह–तदेतत्सर्वमायुरिति । सर्वपदस्यार्थमाह–दीर्घमनन्तं हि तदिति । तदेतत् राधो लोकलक्षणं तत् सर्वायूरूपं दीर्घायूरूपमित्यर्थः । उक्तमर्थं लोकप्रसिद्ध्या द्रढयति–यदिदमाहुर्दीर्घं त आयुरिति । लोके पूर्ववयोभिरभिवादिना ज्यायांसः पुरुषा एतामाशिषं कुर्वन्ति–दीर्घं त आयु-

(त्पु) पुश्यन्ती व्वागवदति। तुदेतदेकशतविधेन वेवाऽऽसुव्यᳫँ शतायुतया वा य ऽ एवैकशतविधं व्विधत्ते यो वा शतं व्वर्षाणि जीवति सु हैवैतदमृतमाप्नोति तुस्माद्ये चैतद्विदुर्ये च न लोक्या शतायुतेत्येवाहुस्तुस्मादु ह नु पुराऽऽयुषः स्वकामी प्रेयादलोक्यᳫँ हैतऽउ वाव लोका यदहोरात्राण्यर्धमासा मासा ऽऋतवः संव्वत्सरः ॥ ७ ॥

(त्तु) तुद्येऽर्व्वाग्विᳫँशेषु व्वर्षेषु प्रयन्ति। ( न्त्य ) अहोरात्रेषु ते लोकेषु सज्यन्तेऽथ ये परोविᳫँशेष्वर्व्वाक्चत्वारिᳫँशेष्वर्धमासेषु तेऽथ ये परश्चत्वारिᳫँशेष्वर्वाक्षष्टेषु मासेषु तेऽथ ये परःषष्टेष्वर्व्वागशीतिष्वृतुषु तेऽथ ये पराऽशीतिष्वर्व्वाक्छतेषु संव्वत्सरे तेऽथ य ऽएव शतं व्वर्षाणि यो वा भूयाᳫँसि जीवति स हैवैतदमृतमाप्नोति ॥ ८ ॥

---

पश्यन्ती वागवदति। तदेतदेकशतविधेन वाऽऽसव्यम्, शतायुतया वा। य एवैकशतविधं विधत्ते। यो वा शतं वर्षाणि जीवति। स हैवैतदमृतमाप्नोति। तस्माद्ये चैतद् विदुः, ये च न–लोक्या–शतायुता इत्येवाहुः। तस्मादु ह न पुराऽऽयुषः स्वकामी प्रेयात्। अलोक्यं ह। एत उ वाव लोकाः–यदहोरात्राणि, अर्धमासाः, मासाः, ऋतवः, संवत्सरः ॥ ७ ॥

तद् ये–अर्वाग्विंशेषु वर्षेषु प्रयन्ति–अहोरात्रेषु ते लोकेषु सज्यन्ते। अथ ये परोविंशेष्वर्वाक् चत्वारिंशेषु–अर्धमासेषु ते। अथ ये परश्चत्वारिंशेष्वर्वाक्षष्टेषु–मासेषु ते। अथ ये परःषष्टेष्वर्वाग-

---

स्त्विति। सर्वमायुरिहीति च। इदि गच्छ। इगो लोकि स्पन्। इति यदिद लोक आयुस्तस्यायं श्रुतिस्वय दर्शयति–एष ते लोक इति। सर्वमायुरिहीति दीर्घं त आयुरस्त्वित्यनयो अयमर्थ–तत्र 'एष' लोक. सावित्रादिरूपोऽस्तु। 'ते' तव 'एतत्' मावित्र तत्र. 'अस्तु' भवत्विति ॥ ६ ॥–

'एतद्' अर्थजात 'पश्यन्ती' विचारयन्ती वाक् दीर्घं त आयुरस्त्वित्यादिका वदतीति। तस्यामृतत्वफलसाधनं दर्शयति–तदेतदेकशतविधेन वेवाऽऽसव्यमिति। 'एकशतविधेन' अग्निना 'तत्' अमृतत्वरूपं 'आसव्यम्' 'शतायुतया' शतवर्षजीवनेन वाऽऽसव्यम्' न साधनद्वयम्। उभाभ्यामपि तत् फलं लभ्यत इत्युक्तमाह–य एवैकशतविधं विधत्त इति। शतवर्षजीवनमपि पुण्यलोकहेतुरित्यत्र लोकप्रसिद्धिं दर्शयति–तस्माद्ये चैतद्विदुरिति। उक्तार्थज्ञा तदनभिज्ञाश्च 'शतायुता' शतवर्षजीवनं 'लोक्या' लोकहिता पुण्यलोकहेतुरित्याहुः। यस्मात् शतायुर्जीवनं लोकहितं तस्मादस्मादायुषः 'पुरा' पूर्वं 'स्वकामी' स्वहितमिच्छन् स्वेच्छया 'न प्रेयात्' न म्रियेत। तन्मरणम् 'अलोक्यम्' अमृतत्वफललोकप्राप्तौ न भवति। शतादर्वाचीनेषु वर्षेषु मरणं पुण्यलोकप्रापकं न भवतीत्यत्र [illegible]–एत [illegible]। अहोरात्रार्धमासमासर्तुसंवत्सरा यद्यपि 'लोकाः' तथापि 'अलोक्याः' अमृतत्वप्रापका न भवन्ति ॥ ८ ॥

तत्रैतादृशेषु वर्षेषु मरणमहोरात्रार्धमासमासात्मकलोकहेतु, न तु अमृतत्वप्रापकमित्याह–तद्येऽर्वाग्विंशेष्वित्या-

त्रीणि वाऽइमानि पञ्चविधानि । संवत्सरोऽग्निः पुरुषस्तेषां पञ्च विधाऽअन्नं पानꣳ श्रीर्ज्योतिरमृतं यदेव संवत्सरेऽन्नं तदन्नं याऽआपस्तत्पानꣳ रात्रिरेव श्रीः श्रियाꣳ हैतद्रात्र्याꣳ सर्वाणि भूतानि संवसन्त्यहर्ज्योतिरादित्योऽमृतमित्यधिदैवतम् ॥ १६ ॥

( मु ) अथाधियज्ञम् । यदेवाग्नावन्नमुपधीयते तदन्नं या ऽआपस्तत्पानं परिश्रित ऽएव श्रीस्तद्धि रात्रीणाꣳ रूपं यजुष्मत्यो ज्योतिस्तद्ध्यह्नाꣳ रूपमग्निरमृतं तद्ध्यादित्यस्य रूपमित्यु ऽएवाधियज्ञम् ॥ १७ ॥

( मु ) अथाध्यात्मम् । यदेव पुरुषेऽन्नं तदन्नं या ऽआपस्तत्पानमस्थी-

---

त्रीणि वा इमानि पञ्चविधानि-संवत्सरः, अग्निः, पुरुषः । तेषां पञ्च विधाः-अन्नम्, पानम्, श्रीः, ज्योतिः, अमृतम् । यदेव संवत्सरेऽन्नं तदन्नम् । या आपस्तत्पानम् । रात्रिरेव श्रीः । श्रियां हैतद्रात्र्यां सर्वाणि भूतानि संवसन्ति । अहः, ज्योतिः, आदित्यः, अमृतम् । इत्यधिदैवतम् ॥१६॥

अथाधियज्ञम्-यदेवाग्नावन्नमुपधीयते-तदन्नम् । या आपस्तत्पानम् । परिश्रित एव श्रीः । तद्धि रात्रीणां रूपम् । यजुष्मत्यो ज्योतिः । तद्ध्यह्नां रूपम् । अग्निरमृतम् । तद्ध्यादित्यस्य रूपम् । इत्यु एवाधियज्ञम् ॥ १७ ॥

अथाध्यात्मम्-यदेव पुरुषेऽन्नम्-तदन्नम् । या आपस्तत्पानम् । अस्थीन्येव श्रीः-तद्धि परि-

---

यदुक्त एकशतविध विधत्त इत्यत्राधिदैवाधियज्ञाध्यात्मत्रयविषये संवत्सराग्निपुरुषा इति, तत्र तेषां संवत्सराग्निपुरुषाणां पञ्चविधत्वमिदानीमाह-त्रीणि वा इमानि पञ्चविधानीति । अन्नपानादीनि पञ्च विधाः, तत्र अधिदैवत संवत्सरे अन्नादीनामर्थमाह-यदेवेति । यत् ' अन्नम् ' संवत्सरे समुत्पद्यते तदेवान्नशब्दवाच्यम् । या वृष्ट्या आपस्ता एव पानशब्दवाच्याः । रात्र्याः श्रीत्वं प्रतिपादयति-श्रियां हैतदिति । श्रयन्ति निवसन्त्यस्मिन् काल इति ' रात्रिः ' श्रीशब्दवाच्या । अह्नि प्रकाशसद्भावात् तदेव ' अहः ज्योतिः ' ' आदित्योऽमृतमित्यधिदैवतम् ' पञ्चविधार्थः ॥ १६ ॥

अथाधियज्ञमिति । चित्याग्नौ अन्नादीनामर्थ उच्यते, यदेव प्राक् सर्वौषधमुपधीयते तदेवान्नम् । प्रोक्षणार्था आपः पानम् । परिश्रितः श्रीशब्दवाच्याः । यजुष्मत्य इष्टका ज्योतिःशब्दवाच्याः । परिश्रितां रात्रिरूपत्वं, यजुष्मतीनामिष्टकानामहोरूपत्वम् ( श. प. १०।१।२।१० ) इति श्रवणात् प्रतिपादितम् । चित्याग्नेरशरीरनिर्मीयमाणोऽग्निरङ्गत्वेन एवामृतशब्दवाच्यः । अग्नेः कथममृतत्वमिति -तत्राह-तद्ध्यादित्यस्य रूपमिति । आदित्यस्य अमृतत्वं प्रागुक्तम्-" अमृतमेतद्यदेतदर्चिर्दीप्यते "-( श. प. १० । २ । ६ । ४ ) इति ॥ १७ ॥

अथाध्यात्ममिति । पुरुषेऽन्नादीनामर्थ उच्यते-'यदन्नम्' अद्यते तदेवान्नम्, 'याः' पीयन्ते ' तत् पानम् '

न्येव श्रीस्तद्धि परिश्रिताꣳ रूपं मज्जानो ज्योतिस्तद्धि यजुष्मतीनाꣳ रूपं प्राणोऽमृतं तद्धचस्रे रूपं प्राणोऽग्निः प्राणोऽमृतमित्यु वाऽआहुः ॥ १८ ॥

( ३ ) अन्नाद्वाऽअशनाया निवर्त्तते । पानात्पिपासा श्रियै पाप्मा ज्योतिषस्तमोऽमृतान्मृत्युर्नि ह वाऽअस्मादेतानि सर्व्वाणि वर्तन्तेऽप पुनर्मृत्युं जयति सर्व्वमायुरेति यऽएवं वेद तदेतदमृतमित्येवामुत्रोपासीतायुरितीह प्राण ऽइति हैकऽउपासते प्राणोऽग्निः प्राणोऽमृतमिति वदन्तो न तथा विद्यादध्रुवं वै तद्यत्प्राणस्तं ते विष्याम्यायुषो न मध्यादिति ह्यपि यजुषाऽभ्युक्तं तस्मादेतदमृतमित्येवामुत्रोपासीतायुरितीह तथो ह स सर्व्वमायुरेति ॥ १९ ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ १०–२–२ ॥ ( २. ६. ) ॥

इति द्वितीयोऽध्यायः समाप्तः ॥ १०–२ ॥

---

श्रितां रूपम् । मज्जानो ज्योतिः । तद्धि यजुष्मतीना रूपम् । प्राणोऽमृतम् । तद्धचग्ने रूपम् । प्राणोऽग्निः । प्राणोऽमृतम्-इत्यु वा आहुः ॥ १८ ॥

अन्नाद्वा अशनाया निवर्तते । पानात्पिपासा, श्रियै पाप्मा, ज्योतिषस्तमः, अमृतान्मृत्युः । नि ह वा अस्मादेतानि सर्वाणि वर्तन्ते, अप पुनर्मृत्युं जयति, सर्वमायुरेति-य एवं वेद । तदेतदमृतमित्येवामुत्रोपासीत आयुरितीह । प्राण इति हैक उपासते-प्राणोऽग्निः,प्राणोऽमृतमिति वदन्तः । न तथा विद्यात् । अध्रुवं वै तत्-यत्प्राणः । " तं ते विष्याम्यायुषो न मध्यात "-( वा. सं. १२ । ६९ ) इति ह्यपि यजुषाऽभ्युक्तम् । तस्मादेतदमृतमित्येवामुत्रोपासीत-आयुरितीह । तथो ह सर्वमायुरेति ॥ १९ ॥

---

'अस्थीन्येव' श्रीशब्दवाच्यानि, परिश्रयणहेतुत्वात् । मज्जैव ज्योति शब्दवाच्या । अस्थिमज्जरूपयो परिश्रिद्यजुष्मतीरूपत्वमुपपादितमधस्तात् ( श. प १०।१।४।१२१ ) । शरीरगत प्राण एवात्र अमृतशब्दवाच्य प्राण' । कथ प्राणस्यामृतत्वमिति, तत्र वेदवादिप्रसिद्धयोपपादयति-तद्धचग्ने रूपं प्राणोऽग्निरिति ॥ १८ ॥

अन्नादिपञ्चकेन निवर्त्यपञ्चक दर्शयति-अन्नाद्वा अशनायेति । ' अन्नात् ' ' अशनाया ' बुभुक्षा ' निवर्त्तते ' । पानात्पानेच्छा । श्रिया पाप्मा दारिद्यम् । ज्योतिष प्रकाशात् तमस्तिमिरम् । अमृतान्मृत्युर्मरण निवर्तते । अन्नादिपञ्चक विदुषा फलमाह-नि ह वा अस्मादेतानीति । य एवमन्नादिपञ्चकमधिदैवादित्रय वेद अस्माद्विदुः सकाशात् ' एतानि ' अशनायादीनि पञ्चानिष्टानि निवर्त्तन्ते । किञ्चामृतरूपाग्निमविधापरिज्ञानेन ' मृत्यु ' ' जयति ' ' सर्वम् ' अत्यन्तम् ' आयु ' अश्नुते । यदुक्तम् अमृतरूपत्वमविधापरिज्ञानेन मृत्यु जयति सर्वमायुः प्राप्नोतीति तद्विशदयति-तदेतदमृतमिति । अमुत्रादित्ये अमृतमित्येवोपासन कुर्यात् । इह

आयुरित्येवोपासन कुर्वीत, अतोऽग्नेरायुष्ट्वेनोपासनात् सर्वमायुः प्राप्नोति फलम् । एके वेदशाखाध्यायिनः विषयेऽन्तिमविषया निरूपणसमये " प्राणोऽस्मि प्राणोऽमृतम् " इति समाम्नानादमृतशब्दस्य प्राणोऽर्थ इति मत्वा तस्यैवोपासन कर्तव्यमिति मन्यन्ते तन्मतमनूद्य निराचष्टे—प्राण इति हैक इति । यस्मात् प्राण अध्रुव अनित्य तस्मात् 'प्राण' अमृतशब्दवाच्यो न भवति, प्राणस्यानित्यत्व यजुर्मन्त्र सवादयति—तं ते विष्याम्यायुषो न मध्यात् ( वा. स. १२ । ६६ ) इति । अयमर्थ —हे यज्ञ ' न नत्र आयुषो ' जीवनस्य मध्यात् त प्राण न विष्यामि न विनाशयामि, " षोऽन्तकर्मणि "—( धा पा दि प. ४१ ) श्यनि ( पा सू. ३ । १ । ६९ ) " ओत श्यनि '—( पा. सू ७ । ३ । ७१ ) इति लोप, छान्दस रूपम् । न विष्यामीति विनाशनिषेधात्स्या विनाशोऽस्तीति सम्भाव्यत इति यजुर्वाद । तस्मादुक्त प्राण इति निराकरोति—तस्मादेतदमृतमित्येवाग्नेरिति ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये दशमकाण्डे
द्वितीयेऽध्याये षष्ठं ब्राह्मणम् ॥ ( १०–२–६ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वर ॥ १ ॥

ब्रह्माण्ड गोसहस्र कनकतुलापुरुषौ स्वर्णगर्भं,
सप्ताम्भोनिधिकर्णारीत्रिदशतरुलताहेमधेनुरास्तुष्टी ।
रत्नोस्रा रुक्मवाजिद्विपमहितरथौ सप्तभि मिहिगार्रौ,
व्यश्रासनिद्विश्वचक्र प्रथितविनिहरण्यतुक्त घट च ॥
धान्यादि प्रयत्नमा निजवमतुल सर्वतो वर्त्तनुला,
कार्पासस्य क्षराज्यगुडकनकमयो रानत शर्करा ।
आज्योध प्राज्यजना लवणमयी शार्करा चार्मिता,
रत्नाद्या रत्नरूप गिरिमकृत मुदा पात्रसात्विङ्गमार्य ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
दशमकाण्डे द्वितीयोऽध्याय समाप्त ॥ ( १०–२ )॥



# अथ तृतीयेऽध्याये प्रथमं ब्राह्मणम् ।
# द्वितीयप्रपाठके च तृतीयं ब्राह्मणम् ।

प्राणो गायत्री । चक्षुरुष्णिग्वागनुष्टुम्मनो बृहती श्रोत्रं पङ्क्तिर्यऽएवायं प्रजननः प्राणऽएष त्रिष्टुबथ योऽयमवाङ्प्राण ऽएष जगती तानि वा ऽएतानि सप्त च्छन्दाᳬसि चतुरुत्तराण्यग्नौ क्रियन्ते ॥ १ ॥

---

प्राणो गायत्री, चक्षुरुष्णिग्, वागनुष्टुप्, मनो बृहती, श्रोत्रं पङ्क्तिः । य एवायं प्रजननः प्राणः–एष त्रिष्टुप् । अथ योऽयमवाङ् प्राणः–एष जगती । तानि वा एतानि सप्त छन्दांसि चतुरुत्तराण्यग्नौ क्रियन्ते ॥ १ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

चयने पक्वेष्टका किञ्चिदधिकैकादशसहस्रसम्मिता उपधेया । तथा च कात्यायनः–"अथातः सर्वासां पक्वेष्टकानां समासेन संख्याप्रमाणान्यनुव्याख्यास्यामः" "सहस्राण्येकादश सप्ततिश्च शतम्" (का. श्रौ. सू. परि० शुल्बसूत्र ९ । १–२) इति । यद्यपि दर्भस्तम्बपुष्करपर्णरुक्मपुरुषस्रुगुदूखलमुसलोख्यादिकूर्मादयो यजुष्मदिष्टकामध्ये परिगणितास्तथापि ते पक्वेष्टका न भवन्ति । अतो न तेषामत्र परिगणनम् । सप्तोक्तसंख्यानां मध्ये लोकम्पृणेष्टका अष्टशतोत्तरदशसहस्रसंख्याकाः । शिष्टा यजुष्मत्यश्च । तथा च कात्यायनः लोकम्पृणानां प्रतिचिति संख्याविशेषं वदन्नेतावत्य इति सूचितवान् । 'द्विसाहस्री प्रथमा लोकम्पृणानां पञ्चाशदूना," "उत्तराश्च" "त्रिसाहस्रयुत्तमा" "वज्रालिखितानां दक्षिणोत्तरे मध्य इतरासाम्" "षट्त्रिंशदूनस्था वा तृतीया" "अष्टादशशता इतरा" (का. श्रौ. सू. १७ । १९९–१९९) इति । अयमर्थः–प्रथमा चितिः पञ्चाशदूनद्विसहस्रलोकम्पृणेष्टकायुक्ता । एवमुत्तराभिस्तो द्वितीयाद्याः । एवं चतसृणां चितीनां सप्तसहस्राणि । पञ्चमी चितिस्त्रिसहस्रयुक्ता ऋजुमध्यदक्षिणरेखावदिष्टकायुक्ता इति लोकम्पृणानामष्टशतोत्तराणि दश सहस्राणि जातानि । अथवा षट्त्रिंशदूनसंख्याका तृतीया चितिः । इतरा अष्टादशशतसम्मिता इति । अत्रापि पक्षे प्रोक्तसंख्या सम्भवति । तत्र पञ्चम्यां चितावुपधेयानां लोकम्पृणानां त्रिसहस्रसम्मितानामृजुदक्षिणमध्यरेखासु समाम्नानम् अत्रैव काण्डे द्वितीयाध्याये "सहस्रमृज्वालिखिता इष्टका करोति सहस्रमित्यालिखिता सहस्रमित्यालिखिता." (श. प. १० । २ । १ । ८) इति, अत्र इतिशब्दोऽभिनयप्रदर्शकः । इति दक्षिणावृत्त्यावृतश्च आलिखिता इति रेखायुक्ता इत्यर्थः । आपस्तम्बेन तु स्पष्टमुक्तम्–"ऋजुरेखा दक्षिणावृत सव्यावृत" इति । ताश्च तत्रैवाध्याये (श. प. १० । २ । १ । ९–११) त्रिसहस्रसम्मिता सुवर्णचित्याग्नेर्मध्यदक्षिणोत्तरभागत्रये लोमस्थानत्वेन स्तुता इति

---

१–एतच्च सटीकस्याग्रे कात्यायनस्य शुल्बसूत्रे–अयुतं च प्रयुतं च सर्वं च सम्भवं तथा । एता पक्वेष्टका ज्ञेया अग्नौ वाजसनेयके ॥ तत्र–अयुतं च सहस्राष्टौ शता लोकम्पृणेष्टकाः । इताऽन्याश्च यजुष्मत्यन्तरकाः पञ्चविंशतिः ॥ शि । ११–१५ ॥

प्राणो गायत्रीति । तद्य ऽएव प्राणस्य महिमा यद्वीर्यं तदेतत्सहस्रं प्राणस्यैवैतद्वीर्यं यद्वचस्य चिन्वतः प्राण ऽउत्क्रामेत्तत ऽएवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष गायत्रीः संचितो भवति ॥ २ ॥

चक्षुरुष्णिगिति । तद्य ऽएव चक्षुषो महिमा यद्वीर्यं तदेतत्सहस्रं चक्षुष ऽएवैतद्वीर्यं यद्वचस्य चिन्वतश्चक्षुरुत्क्रामेत्तत ऽएवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष ऽउष्णिहः संचितो भवति ॥ ३ ॥

---

प्राणो गायत्रीति—तद् य एव प्राणस्य महिमा, यद्वीर्यम्—तदेतत्सहस्रम् । प्राणस्यैवैतद्वीर्यम् । यद्धचस्य चिन्वतः प्राण उत्क्रामेत्—तत एवैषोऽग्निर्न चीयेत, एतेनैवास्य रूपेण सहस्रम् एष गायत्री सञ्चितो भवति ॥ २ ॥

चक्षुरुष्णिगिति—तद् य एव चक्षुषो महिमा, यद्वीर्यम्—तदेतत्सहस्रम् । चक्षुष एवैतद्वीर्यम् । यद्धचस्य चिन्वतश्चक्षुरुत्क्रामेत्—तत एवैषोऽग्निर्न चीयेत । एतेनैवास्य रूपेण सहस्रम् एष उष्णिहः सञ्चितो भवति ॥ ३ ॥

---

तत्सहस्रत्र पादत्वेन च्छन्दसा स्वरूपेण शिरःप्रभृति पादपर्यन्तमुपहितानामेव शरीरत्वेन स्थितानां गायत्र्यादिछन्दोवीर्यत्वेन स्तुतिस्तुतीयाध्याये प्रथमब्राह्मणे क्रियते । यद्यप्यग्नौ शतान्यतिरिच्यन्ते तथापि सहस्रत्वेन स्तोतुमशक्यत्वात्तासां स्तुतिरत्र न क्रियते । यद्वा अष्टमकाण्डे चरमचितौ ' छन्दस्या उपदधाति " ( श० प० । ८ । ६ । २ । १–१९ ) इति मन्त्राणां छन्दसामुपधानमुक्तम् । तथा छन्दसां स्तुतिः— प्राणो गायत्रीति । चितात्मिकस्य प्रजापतेः 'प्राणः' 'गायत्रीति' गायत्री छन्दः, प्राणः प्राणनव्यापारस्थान नासिकोक्तः । शीर्षण्याः प्राणाश्चत्वार उक्ताः । द्वाववाञ्चावित्याह—य एवायं प्रजननः प्राण इत्यादिना । मनस्तु सर्वेन्द्रियसङ्गतमेकमिति सप्त प्राणा इत्यर्थः । पूर्वमपि प्रमाणमिति सप्तमि प्राणैः सप्तपुरुषात्मक एकः पुरुष सृष्ट इति विज्ञेयः सप्तावयवाः सप्त इति तात्पर्यम् । छन्दसामग्नौ प्रसक्तिं दर्शयति—तानि वा एतानीति । चतुरुत्तराणीति । गायत्र्याश्चतुर्विंशत्यक्षराणि, तस्याश्चतुरक्षराधिका उष्णिक् । तस्याश्चतुरक्षराधिकानुष्टुप् इति सप्तानि चतुरुत्तराणि सप्त छन्दांसि अग्नौ चीयन्ते छन्दस्येष्टकोपधानेष्टकारणमन्त्रतया ॥ १ ॥

एवं छन्दसां प्राणादिभावमुक्तम् । तत्र विद्वत्स्तोतुमनुवदति प्राणो गायत्रीति । 'य' 'प्राणस्य' 'महिमा' महत्त्वं 'यद्वीर्यं' च 'तदेतत्' इष्टका—'सहस्रं' प्राणवीर्यात्मकम् । तस्मात् प्राणात्मकत्वमेव व्यतिरेकमुखेनाह—यद्धचस्य चिन्वत इति । यदि 'चिन्वतो' यजमानस्य कर्ममध्ये प्राण उत्क्रान्तः स्यात् तर्हि एषोऽग्निर्न चीयेत । कर्तुः कर्मकरणस्यासम्भवात् । अतोऽग्नौ प्राणरूपगायत्रीछन्दोऽनुवचनेन अस्यानुक्रान्तप्राणस्य 'एतेनैव रूपेण' पुनः देहावस्थानलक्षणेन रूपेणोपेतः एष चीयत इति 'सहस्रं गायत्रीः' इष्टकाः 'संचितः' । एतावत्क्त । सञ्चितत्वात् व्याप्तवान् 'भवति' । छन्दस्योपधानस्तुतिप्रसङ्गे तदन प्राणतो सहस्रगुणानिति ॥ २ ॥

एवमुत्तरे चक्षुरुष्णिगित्यादय षट्पर्यायाः व्याख्येयाः । तत्र 'चक्षुरुत्क्रामेत्' " वागुत्क्रामेत् " " मन

वागनुष्टुबिति । तद्य ऽएव वाचो महिमा यद्वीर्यं तदेतत्सहस्रं वाच ऽएवैतद्वीर्यं यद्धयस्य चिन्वतो वागुत्क्रामेत्तत ऽएवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेषोऽनुष्टुभः संचितो भवति ॥ ४ ॥

मनो बृहतीति । तद्य ऽएव मनसो महिमा यद्वीर्यं तदेतत्सहस्रं मनस ऽएवैतद्वीर्यं यद्धयस्य चिन्वतो मन ऽउत्क्रामेत्तत ऽएवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष बृहतीः संचितो भवति ॥ ५ ॥

श्रोत्रं पङ्क्तिरिति । तद्यऽएव श्रोत्रस्य महिमा यद्वीर्यं तदेतत्सहस्रꣳ श्रोत्रस्यैवैतद्वीर्यं यद्धयस्य चिन्वतः श्रोत्रमुत्क्रामेत्तत ऽएवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष पङ्क्तीः संचितो भवति ॥ ६ ॥

यऽएवायं प्रजननः प्राणः । (ऽ) एष त्रिष्टुबिति तद्य ऽएवैतस्य प्राणस्य महिमा यद्वीर्यं तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य वीर्यं यद्धयस्य चिन्वतऽ एष प्राण ऽआलुभ्येत्तत ऽएवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष त्रिष्टुभः संचितो भवति ॥ ७ ॥

---

वागनुष्टुबिति–तद् य एव वाचो महिमा, यद्वीर्यम्–तदेतत्सहस्रम् । वाच एवैतद्वीर्यम् । यद्धयस्य चिन्वतो वागुत्क्रामेत्–तत एवैषोऽग्निर्न चीयेत । एतेनैवास्य रूपेण सहस्रम् एषोऽनुष्टुभः सञ्चितो भवति ॥ ४ ॥

मनो बृहतीति–तद् य एव मनसो महिमा, यद्वीर्यम्–तदेतत्सहस्रम् । मनस एवैतद्वीर्यम् । यद्धयस्य चिन्वतो मन उत्क्रामेत्–तत एवैषोऽग्निर्न चीयेत । एतेनैवास्य रूपेण सहस्रम् एष बृहतीः सञ्चितो भवति ॥ ५ ॥

श्रोत्रं पङ्क्तिरिति–तद् य एव श्रोत्रस्य महिमा, यद्वीर्यम्–तदेतत्सहस्रम् । श्रोत्रस्यैवैतद्वीर्यम् । यद्धयस्य चिन्वतः श्रोत्रम् उत्क्रामेत्–तत एवैषोऽग्निर्न चीयेत । एतेनैवास्य रूपेण सहस्रम् एष पङ्क्तीः सञ्चितो भवति ॥ ६ ॥

य एवायं प्रजननः प्राण एष त्रिष्टुबिति । तद् य एवैतस्य प्राणस्य महिमा, यद्वीर्यम् । तदेतत्सहस्रम् । एतस्यैवैतत्प्राणस्य वीर्यम् । यद्धयस्य चिन्वत एष प्राण आलुभ्येत्–तत एवैषोऽग्निर्न चीयेत । एतेनैवास्य रूपेण सहस्रम् एष त्रिष्टुभः सञ्चितो भवति ॥ ७ ॥

---

उत्क्रामेत् " " श्रोत्रमुत्क्रामेत् " " एषोऽग्निर्न चीयेत " इति पठ्यते । तस्यार्थः–अन्धमूकबधिरादीनां यजमानानां कर्मण्यनधिकारादग्निचयनं न स्यादिति । प्रजननः प्राण आलुभ्येदिति । प्रजननशक्तिरहितो भवेत् ।

( त्यु ) अथ योऽयमवाङ्प्राणः । ( ऽ ) एष जगतीति तद्य ऽएवैतस्य प्राणस्य महिमा यद्वीर्यं तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य वीर्यं यद्ध्यस्य चिन्वत ऽएष प्राणऽ आलुम्पेत्तत ऽएवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष जगतीः संचितो भवति ॥ ८ ॥

तानि वाऽएतानि । सप्त च्छन्दाᳬसि चतुरुत्तराण्यन्योऽन्यस्मिन्प्रतिष्ठितानि सप्तेमे पुरुषे प्राणा ऽअन्योऽन्यस्मिन्प्रतिष्ठितास्तद्यावन्तमेवंविच्छन्दसां गणमन्वाह च्छन्दसश्छन्दसो हैवास्य सोऽनूक्तो भवति स्तुतो वा शस्तो वोपहितो वा ॥ ९ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ १०-२-३ ॥ ( ३. १. ) ॥

---

अथ योऽयमवाङ् प्राण एष जगतीति—तद् य एवैतस्य प्राणस्य महिमा, यद्वीर्यम्—तदेतत्सहस्रम् । एतस्यैवैतत्प्राणस्य वीर्यम् । यद्ध्यस्य चिन्वत एष प्राण आलुम्पेत्—तत एवैषोऽग्निर्न चीयेत । एतेनैवास्य रूपेण सहस्रम् एष जगतीः सञ्चितो भवति ॥ ८ ॥

तानि वाऽएतानि सप्त च्छन्दांसि चतुरुत्तराण्यन्योऽन्यस्मिन्प्रतिष्ठितानि । सप्तेमे पुरुषे प्राणा अन्योऽन्यस्मिन्प्रतिष्ठिताः । तद् यावन्तमेवंवित् छन्दसां गणमन्वाह—छन्दसश्छन्दसो हैवास्य सोऽनूक्तो भवति । स्तुतो वा, शस्तो वा, उपहितो वा ॥ ९ ॥

---

' एषोऽग्निर्न चीयेत ' नानुसक्रम्य कर्मानधिकारात् । अवाङ्प्राण आलुम्पेदिति । दुश्चिकित्समूलरोगराजयक्ष्मादिग्रहीत पुरुष कर्मणि नाधिक्रियते ॥ ३-८ ॥

सम्भूय च्छन्दांसि प्रशंसति—तानि वा एतानि समेति । यत. ' छन्दांसि ' परस्परम् ' अन्योऽन्यस्मिन् ' प्रतिष्ठितानि गायत्र्याः तावत् सर्वाणि च्छन्दांसि तस्याश्चतुर्विंशत्यक्षराणां सर्वच्छन्दःस्वनुगमात् । तथा जगत्यामपि सच्छन्दांसि सर्वाणि गायत्र्यादिच्छन्दांसि प्रतिष्ठितानि सकलच्छन्दोऽक्षरसद्भावात् । एव मध्यमानि च्छन्दांस्यूह्यानि । एव पुरुषे वर्तमानाः ' सप्तेमे प्राणाः ' ' अन्योन्यस्मिन् ' ' प्रतिष्ठिताः ' तदुक्तं प्राक् " न वा इत्थ सन्तः शक्ष्याम. प्रजनयितुमिमान् सप्त पुरुषानेकं पुरुषं करवाम " (श.प.६।१।१।३) इत्यादिना । अत. समानां छन्दसामग्निरूपेण एकस्मिन् पुरुषे चित्याग्नौ सप्त प्राणान् प्रतिष्ठापितवान् भवतीति प्रकरणार्थः । वेदितु फलमाह—तद्यावन्तमेवंविदिति । विद्वान् पुरुषः गायत्र्यादीनां मध्ये ' यावन्तम् ' छन्दोगणमनुब्रूयात् तेनैवानुवचनेन तस्य विदुषः ' छन्दसश्छन्दसः ' सर्वच्छन्दसां गण. सम्यग् ' अनूक्तः ' सस्तुतः शस्तः सम्यगुपहितश्च भवतीत्यर्थः ॥ ९ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे तृतीयेऽध्याये प्रथमं ब्राह्मणम् ॥ ( १०-३-१ ) ॥

तदाहुः । किं छन्दः का देवताऽग्नेः शिर ऽइति गायत्री छन्दोऽग्निर्देवता शिरः ॥ १ ॥

किं छन्दः । का देवता ग्रीवा ऽइत्युष्णिक्छन्दः सविता देवता ग्रीवाः ॥२॥

किं छन्दः । का देवताऽनूकमिति बृहती छन्दो बृहस्पतिर्देवताऽनूकम्॥३॥

(क्कि) किं छन्दः । का देवता पक्षाविति बृहद्रथन्तरे च्छन्दो द्यावापृथिवी देवते पक्षौ ॥ ४ ॥

किं छन्दः । का देवता मध्यमिति त्रिष्टुप्छन्दऽइन्द्रो देवता मध्यम् ॥ ५ ॥

( क्कि ) किं छन्दः । का देवता श्रोणीऽइति जगती छन्दऽ आदित्यो देवता श्रोणी ॥ ६ ॥

किं छन्दः । का देवता यस्मादिदं प्राणाद्रेतः सिच्यतऽ इत्यतिच्छन्दाश्छन्दः प्रजापतिर्देवता ॥ ७ ॥

---

तदाहुः-किं छन्दः का देवताऽग्नेः शिर इति । गायत्री छन्दोऽग्निर्देवता शिरः ॥ १ ॥

किं छन्दः का देवता ग्रीवा इति । उष्णिक्छन्दः सविता देवता ग्रीवाः ॥ २ ॥

किं छन्दः का देवताऽनूकमिति । बृहती छन्दो बृहस्पतिर्देवताऽनूकम् ॥ ३ ॥

किं छन्दः का देवता पक्षाविति । बृहद्रथन्तरे छन्दो द्यावापृथिवी देवते पक्षौ ॥ ४ ॥

किं छन्दः का देवता मध्यमिति । त्रिष्टुप्छन्द इन्द्रो देवता मध्यम् ॥ ५ ॥

किं छन्दः का देवता श्रोणी इति । जगती छन्द आदित्यो देवता श्रोणी ॥ ६ ॥

किं छन्दः का देवता यस्मादिद प्राणाद्रेतः सिच्यत-इति । अतिच्छन्दाश्छन्दः, प्रजापतिर्देवता ॥ ७ ॥

---

एव चित्याग्नश्मश्रुरादिसतावयवाना छन्दोमयत्वमुक्तम् । अथ शिरोग्रीवादीना छ दोमयत्व वेदवादिप्रश्नोत्तराभ्यां निरूपयति-तदाहुः किं छन्दः का देवताऽग्नेः शिर इतीति । 'अग्ने' चित्यस्य 'शिर इति' यदस्ति तस्य किं छन्द का देवतेति प्रश्न । उत्तरम्-'गायत्री छन्दोऽग्निर्देवता'-"अग्निर्मूर्द्धा दिव ककुद्"-( वा स १५ । २० ) इत्यस्य छ दस्येष्टकोपधानमन्त्रस्य गायत्रत्वादाग्नेयत्वात्र ( श. प. ७।४।१।४१ ) शिरसस्तदुभयात्मकत्वम् ( श. प । ८ । ६ । २ । ६ ) अन्यत्र "गायत्र हि शिर" इति श्रूयते ॥ १ ॥

एव ग्रीवानूकपक्षादिषु तत्तच्छन्दोमयत्व तत्तद्देवतामयत्व च यथायोग म तव्यम् ॥ २ ॥

अनूकशब्दस्य पक्षयोर्मध्यदेहस्य सन्धि पुच्छमध्ययोश्च सन्धिरित्यर्थ ॥ ३-७ ॥

किं छन्दः । का देवता योऽयमवाङ्प्राणऽइति यज्ञायज्ञियं छन्दो वैश्वानरो देवता ॥ ८ ॥

किं छन्दः । का देवतोरूऽइत्यनुष्टुप्छन्दो विश्वे देवा देवतोरू ॥ ९ ॥

किं छन्दः । का देवताऽष्ठीवन्ताविति पङ्क्तिश्छन्दो मरुतो देवताऽष्ठीवन्तौ १०

किं छन्दः । का देवता प्रतिष्ठेऽइति द्विपदा च्छन्दो विष्णुर्देवता प्रतिष्ठे ११

किं छन्दः । का देवता प्राणाऽइति विच्छन्दाश्छन्दो वायुर्देवता प्राणाः १२

किं छन्दः । का देवतोनातिरिक्तानीति न्यूनाक्षरा च्छन्दऽ आपो देवतोनातिरिक्तानि सैषाऽऽत्मविद्यैवैतन्मयो हैवैता देवताऽएतमात्मानमभिसम्भवति न ह्यत्रान्या लोक्यतायाऽआशीरस्ति ॥ १३ ॥

इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ १०-२-४ ॥ ( ३. २. ) ॥

---

किं छन्दः का देवता योऽयमवाङ् प्राण इति । यज्ञायज्ञियं छन्दो वैश्वानरो देवता ॥ ८ ॥
किं छन्दः का देवतोरूऽइति । अनुष्टुप् छन्दो विश्वे देवा देवतोरू ॥ ९ ॥
किं छन्दः का देवताऽष्ठीवन्ताविति । पंक्तिश्छन्दो मरुतो देवताऽष्ठीवन्तौ ॥ १० ॥
किं छन्दः का देवता प्रतिष्ठे इति । द्विपदा च्छन्दो विष्णुर्देवता प्रतिष्ठे ॥ ११ ॥
किं छन्दः का देवता प्राणा इति । विच्छन्दाश्छन्दो वायुर्देवता प्राणाः ॥ १२ ॥
किं छन्दः का देवतोनातिरिक्तानीति । न्यूनाक्षरा छन्द आपो देवतोनातिरिक्तानि । सैषाऽऽत्मविद्यैव । एतन्मयो हैवैता देवता एतमात्मानमभिसम्भवति । न ह्यत्रान्या लोक्यतायाऽआशीरस्ति ॥ १३ ॥

---

यज्ञायज्ञियमिति । " यज्ञायज्ञा वो अग्नये "–( वा. स. २७ । ४२ ) इत्यत्रोत्पन्न ' यज्ञायज्ञिय ' तदेव छन्द बृहतीत्यर्थः ॥ ८ ॥ ९ ॥

' अष्ठीवन्तौ ' जानुप्रदेशावित्यर्थः ॥ १० ॥

' प्रतिष्ठे ' पादौ ॥ ११ ॥

विच्छन्दा इति । विविधच्छन्दस्का ऋक् विच्छन्दाः, तादृक् छन्दः ॥ १२ ॥

ऊनातिरिक्तानीति । उक्तेभ्योऽङ्गेभ्योऽन्यानि न्यूनाधिकपरिमाणान्यङ्गानि च किं छन्दस्कानि किं देवत्यानि– इति प्रश्न । उत्तरम्–न्यूनाक्षरा छन्दः, आपो देवतेति । " आपो वा इदं सर्वं विश्वा भूतान्यापः प्राणा वा आपः "–इति श्रुतेः अपां सर्वात्मकत्वात् न्यूनातिरिक्तान्यङ्गान्यब्देवत्यानीत्यर्थः । यदुक्तम्–अग्नेः शिरोग्रीवादि-परिकल्पनेन छन्दोदेवतासम्बन्धेन तदेतत् पुण्यलोकसाधनमग्निविदैवेति प्रशंसति–सैषाऽऽत्मविद्यैवेति । आत्मनः शरीरस्य छन्दोदेवतात्मकत्वेन विराडात्मकस्य सम्बन्धिनः तस्य विद्या । य एवंविधमग्निं चिनोति, वेद वा स एतन्मयः । अग्नेराग्निविद्यादिदेवतात्मकत्वात्, स ' एतमात्मानं ' एवंविधच्छन्दोदेवतात्मकावयवयुक्त

धीरो ह शातपर्णेयः । ( यो ) महाशालं जाबालमुपोत्ससाद तꣳ होवाच किं मा विद्वानुपोदसद इत्यग्निं वेदेति कमग्निं वेत्थेति वाचमिति यस्तमग्निं वेद किꣳ स भवतीति वाग्ग्मी भवतीति होवाच नैनं वाग्जहातीति ॥ १ ॥

वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसदऽइत्यग्निं वेदेति कमग्निं वेत्थेति चक्षुरिति यस्तमग्निं वेद किꣳ स भवतीति चक्षुष्मान्भवतीति होवाच नैनं चक्षुर्जहातीति ॥ २ ॥

वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसदऽइत्यग्निं वेदेति कमग्निं वेत्थेति मनऽइति यस्तमग्निं वेद किꣳ स भवतीति मनस्वी भवतीति होवाच नैनं मनो जहातीति ॥ ३ ॥

वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसदऽ इत्यग्निं वेदेति कमग्निं वेत्थेति श्रोत्रमिति यस्तमग्निं वेद किꣳ स भवतीति श्रोत्रवान्भवतीति होवाच नैनꣳ श्रोत्रं जहातीति ॥ ४ ॥

---

धीरो ह शातपर्णेयो महाशालं जाबालमुपोत्ससाद । तं होवाच—किं मा विद्वानुपोदसद इति । अग्निं वेदेति । कमग्निं वेत्थेति । वाचमिति । यस्तमग्निं वेद—किं स भवतीति । वाग्ग्मी भवतीति होवाच । नैनं वाग्जहातीति ॥ १ ॥

वेत्थाग्निमिति होवाच—किमेव मा विद्वानुपोदसद इति । अग्निं वेदेति । कमग्निं वेत्थेति । चक्षुरिति । यस्तमग्निं वेद—किं स भवतीति । चक्षुष्मान्भवतीति होवाच । नैनं चक्षुर्जहातीति ॥ २ ॥

वेत्थाग्निमिति होवाच—किमेव मा विद्वानुपोदसद इति । अग्निं वेदेति । कमग्निं वेत्थेति । मन इति । यस्तमग्निं वेद—किं स भवतीति । मनस्वी भवतीति होवाच । नैनं मनो जहातीति ॥ ३ ॥

वेत्थाग्निमिति होवाच—किमेव मा विद्वानुपोदसद इति । अग्निं वेदेति । कमग्निं वेत्थेति । श्रोत्रमिति । यस्तमग्निं वेद—किं स भवतीति । श्रोत्रवान्भवतीति होवाच । नैनं श्रोत्रं जहातीति ॥ ४ ॥

---

[illegible] ' [illegible] ' [illegible] । [illegible] भवति । न [illegible] । ' अत्र ' [illegible] ' [illegible] ' [illegible] ' [illegible] ' [illegible] ' आत्मा ' [illegible] नास्त्यन्यत् ॥ १३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये दशमकाण्डे तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ ( १०—३—२ ) ॥

*[illegible]*

[illegible] । [illegible]—धीरो ह शातपर्णेय इति । ' उपोत्ससाद ' [illegible] । तस्मात् [illegible] विद्या [illegible] । गुरु शिष्यस्य [illegible]-

वेत्थाग्निमिति होवाच । किमेव मा विद्वाननुपोदसदऽइत्यग्निं वेदेति कमग्निं वेत्थेति य ऽएतत्सर्वमग्निस्तं वेदेति तस्मिन्होक्तऽउपावरुरोहा-धीहि भोस्तमग्निमिति ॥ ५ ॥

स होवाच । प्राणो वाव सोऽग्निर्यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं मनः प्राणꣳ श्रोत्रं यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्तऽइत्यध्यात्मम् ॥ ६ ॥

---

वेत्थाग्निमिति होवाच–किमेव मा विद्वाननुपोदसद इति । अग्निं वेदेति । कमग्निं वेत्थेति । य एतत्सर्वमग्निस्तं वेदेति । तस्मिन्होक्तऽउपावरुरोह–अधीहि भोः–तमग्निमिति ॥ ५ ॥

स होवाच–प्राणो वाव सोऽग्निः । यदा वै पुरुषः स्वपिति–प्राणं तर्हि वागप्येति । प्राणं चक्षुः । प्राणं मनः । प्राणं श्रोत्रम् । यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्ते । इत्यध्यात्मम् ॥ ६ ॥

---

ष्मतमात्र दृष्ट्वा विद्यामुपदेष्टुं नार्हति, किंतु तस्य शुश्रूषाविशेषं परिज्ञाय वक्तुमुचित इति दर्शयितुं महाशालस्य वचनमाह–स होवाच किं मा विद्वानिति । स जानश्रुतिर्महाशालः 'तं' धीरमुपसन्नं शिष्यमुवाच–हे धीर ! 'किं विद्वान्' कमर्थं जानानो माम् 'उपोदसद' उपसन्नवानसीति । शिष्यस्योत्तरम्–'अग्निं वेद' जानामीति । वर्तमाने लिटो णलादेशो रूपम् । कमग्निं वेत्थेति । अग्निविशेषप्रश्नो महाशालस्य । वाचम् इति । वाग्रूपमग्निं वेदेति शिष्यस्योत्तरम् । अथ महाशालस्य वाग्रूपाग्निपरिज्ञाने किं फलमिति फलप्रश्नः–यस्तमग्निं वेद किं स भवतीति । अत्र वर्तमाने लट्प्रथमैकवचने लिटो णलादेशो रूपम् । अथ वाग्रूपफलकथनं वाग्मी भवतीत्यादिना । 'वाग्मी' प्रशस्तवाग्भवति इत्येवमुवाच धीरः । तदेव विवृणोति–नैनमिति । 'एनम्' वाग्रूपमग्निं विद्वांसं 'वाक् न जहाति' न त्यजति । सर्वत्र प्रश्नप्रतिवचनसमाप्तिद्योतका इतिशब्दाः ॥ १ ॥

वेत्थाग्निमिति होवाचेत्यादयो जाबालस्य धीरं प्रति कृताः प्रश्नाः, एवमुत्तरत्र वागाद्यग्निविशेषविषयप्रश्नप्रतिवचनरूपाः पर्याया व्याख्येयाः ॥ २–४ ॥

य एतत्सर्वमग्निस्तं वेदेति । पुनर्जाबालेन कीदृशमग्निं 'वेत्थेति' प्रश्ने कृते वागादिसर्वात्मकमग्निं जानामीति धीर उक्तवान् । अथैवमुक्ते सर्वात्मकमग्निमजानानो महाशालस्तस्माद्धीरात् सकाशादग्निं परिजिज्ञासितुमासनादुपावरुरोह इत्याह–तस्मिन् होक्त उपावरुरोहेति । हे धीर ! 'तं' सर्वात्मकम् 'अग्निम्' माम् 'अधीहि' अध्यापयेति उपसन्न इत्यर्थः ॥ ५ ॥

इदानीमस्याग्नेरध्यात्माधिदैवतभेदेन सर्वात्मकत्वं विशदयति–स होवाच प्राणो वाव सोऽग्निरिति । 'स' धीरः 'तम्' अग्निमुक्तवान् । 'सोऽग्निः' 'प्राणो वाव' प्राण एव । प्राणस्य सर्वात्मकत्वमाह–यदा वै पुरुषः स्वपितीति । सुषुप्त्यवस्थामनुभवति तदा वाक्चक्षुःश्रोत्रादीनि ज्ञानकर्मेन्द्रियाणि मनश्चान्तरमिन्द्रियं 'प्राणमप्येति'–प्राणे एकीभवति । केवलं प्राण एव वर्तत इत्यर्थः । अथ 'यदा' पुरुषः 'प्रबुध्यते' ज्ञानवान् भवति तदा प्राणादेवाधि पुनरिन्द्रियाणि जायन्ते अतः प्राणरूपोऽग्निः सर्वात्मक इत्यध्यात्मनिष्कर्षः ॥ ६ ॥

( मु ) अथाधिदेवतम् । या वै सा व्वागग्निरेव स यत्तच्चक्षुरसौ सऽआदित्यो यत्तन्मनऽएष स चन्द्रमा यत्तच्छ्रोत्रं दिशऽएव तदथ यः स प्राणोऽयमेव स व्वायुर्योऽयं पवते ॥ ७ ॥

यदा वाऽअग्निरनुगच्छति । व्वायुं तर्ह्यनूद्वाति तस्मादेनमुदवासीदित्याहुर्व्वायुᳫँ ह्यनूद्वाति यदाऽऽदित्योऽस्तमेति व्वायुं तर्हि प्रविशति व्वायुं चन्द्रमा व्वायौ दिशः प्रतिष्ठिता व्वायोरेवाधि पुनर्जायन्ते स यदैवंविदस्माल्लोकात्प्रैति व्वाचैवाग्निमप्येति चक्षुषाऽऽदित्यं मनसा चन्द्रᳫँ श्रोत्रेण दिशः प्राणेन वायुᳫँ सऽएतन्मय ऽएव भूत्वैतासां देवतानां यां यां कामयते सा भूत्वैलयति ॥ ८ ॥

इति द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ १०–२–६॥( ३. ३. )॥

---

अथाधिदेवतम्–या वै सा वाक्–अग्निरेव सः । यत्तच्चक्षुः–असौ स आदित्यः । यत्तन्मनः–एष स चन्द्रमाः । यत्तच्छ्रोत्रम्–दिश एव तत् । अथ यः स प्राणः–अयमेव स वायुः–योऽयं पवते ॥ ७ ॥

यदा वा अग्निरनुगच्छति–वायुं तर्ह्यनूद्वाति । तस्मादेनमुदवासीदित्याहुः । वायुं ह्यनूद्वाति । यदाऽऽदित्योऽस्तमेति–वायुं तर्हि प्रविशति । वायुं चन्द्रमाः । वायौ दिशः प्रतिष्ठिताः । वायोरेवाधि पुनर्जायन्ते । स यदैवंविदस्माल्लोकात्प्रैति–वाचैवाग्निमप्येति । चक्षुषाऽऽदित्यम् । मनसा चन्द्रम् । श्रोत्रेण दिशः । प्राणेन वायुम् । स एतन्मय एव भूत्वैतासां देवतानां यां यां कामयते–सा भूत्वैलयति ॥ ८ ॥

---

अधिदैवमाह–अथाधिदेवतमिति । ' या वै सा वागग्निरेव '–"अग्निर्वाग्भूत्वा मुखं प्राविशद्" ( ऐ. आ. २ । ४ । २ )–इति श्रुतेः । चक्षुर्मनःश्रोत्रप्राणानामादित्यचन्द्रदिग्वायुरूपत्वमैतरेयके समाम्नायते–"वायुः प्राणो भूत्वा नासिके प्राविशद्, आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्, दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्, चन्द्रमा मनो भूत्वा हृदयं प्राविशद् "–( ऐ. आ २ । ४ । २ ) इति । ' योऽयं पवते ' अन्तरिक्षे प्रवहति स वायुः प्राण इत्यर्थः ॥ ७ ॥

तेषामग्न्यादीनां वाय्वधीनतां दर्शयति–यदा वा अग्निरिति । ' यदाऽग्निः ' ' अनुगच्छति ' तदा ' वायुम् ' अनुलक्ष्य ' उद्वाति ' नश्यति । वायावग्निः वाति सति अग्निर्विनष्टो भवति । तस्मादेनं नष्टमग्निम् ' उदवासीदित्याहुः ' नष्टोऽनुगत उद्वात इति पर्याया इत्यर्थः । यदाऽऽदित्योऽस्तमेतीति । ' अस्तमेति ' इति पदेन तिरोभावो लक्ष्यते । आदित्यस्य वायौ लयः श्रूयते "ज्योतिष्यार्कः प्रवायन्तं तेजो वायौ प्रलीयते "–इति श्रुतेरवगम्यते । " वायौ ' सूक्ष्मरूपेण ' दिशः ' ' प्रतिष्ठिताः ' वर्तन्ते ।

श्वेतकेतुर्हारुणेयः । (यो) यक्ष्यमाण आस तᳪं ह पितोवाच कानृत्विजोऽवृथा इति स होवाचायं न्वेव मे वैश्वावसव्यो होतेति तᳪं ह पप्रच्छ वेत्थ ब्राह्मण वैश्वावसव्य ॥ १ ॥

चत्वारि महान्ती३ऽइति । वेद भो३ऽइति होवाच वेत्थ चत्वारि महतां महान्ती३ऽइति वेद भो३ऽइति होवाच वेत्थ चत्वारि व्रतानी३ऽइति वेद भो३ऽइति होवाच वेत्थ चत्वारि व्रतानां व्रतानी३ऽइति वेद भो३ऽइति होवाच वेत्थ चत्वारि क्यानी३ऽइति वेद भो३ऽइति होवाच वेत्थ चत्वारि क्यानां क्यानी३ऽइति वेद भो३ऽइति होवाच वेत्थ चतुरोऽर्कां३निति वेद भो३ऽइति होवाच वेत्थ चतुरोऽर्काणामर्कां३निति वेद भो३ऽइति होवाच ॥ २ ॥

---

श्वेतकेतुर्हारुणेयो यक्ष्यमाण आस । तं ह पितोवाच—कानृत्विजोऽवृथा इति । स होवाच—अयं न्वेव मे वैश्वावसव्यो होतेति । तं ह पप्रच्छ—वेत्थ ब्राह्मण वैश्वावसव्य ॥ १ ॥

चत्वारि महान्ती३ इति—वेद भो३ इति होवाच । वेत्थ चत्वारि महतां महान्ती३ इति—वेद भो३ इति होवाच । वेत्थ चत्वारि व्रतानी३ इति—वेद भो३ इति होवाच । वेत्थ चत्वारि व्रतानां व्रतानी३ इति—वेद भो३ इति होवाच । वेत्थ चत्वारि क्यानी३ इति—वेद भो३ इति होवाच ।

---

'पुनः' वायो सकाशादेव चन्द्रमो जायन्त इत्यभिप्रायमर्थः । वेदितुः फलमाह—न यदेवंविदस्माल्लोकात्प्रैतीति । वेदिता यदि म्रियेत तदा चन्द्रमुखादिभिरन्यादित्यादीननुप्रवेश्य 'एतन्मयो' देवतामयो भूत्वा 'एतासाम्' 'देवतानाम्' मध्ये या देवता भवन्ति इति मन्यते तत्र सा 'सा' देवता भूत्वा 'एतयति' सञ्चरति चेष्टत इत्यर्थः ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये दशमकाण्डे तृतीयेऽध्याये तृतीयं ब्राह्मणम् ॥ ( १०—३—३ ) ॥

उत्तरस्मिन्नोऽक्रियन्त्वादि त्यपुरुषगामनोपधि-अन्यानुपस्थाप्यतद्ब्राह्मणम् । न वेदविन्नन्यमध्यमेदकत्वेन स्तुतिः । तासां पुरुषस्मिन्सम्पत्ता च स्तुतिर्ऽत्र प्रश्नप्रतिवचनेन प्रतिपाद्यते । तौ प्रश्नप्रतिवचनौ दर्शयितुं तावदाख्यायिकामाह—श्वेतकेतुर्हारुणेय इति । पुरा 'श्वेतकेतुः' नाम 'यक्ष्यमाणो' बभूव । 'तम्' पुत्रं 'पिता' उक्तवान् । हे पुत्र ! 'कान्' कीदृशान् 'ऋत्विजः' वृतवानसीति—वितुर्वचनम् । स होवाच' इत्यादिना श्वेतकेतुः 'अयं न्वेव मे वैश्वावसव्यो होता' वैश्वावसव्यनामको होता वृत इत्युक्तवान् । 'तं ह पप्रच्छ वेत्थ ब्राह्मण' इत्यादिना होतारं प्रति पितुः प्रश्नः ॥ १ ॥

'चत्वारि' चतुःसङ्ख्यानि 'महान्ति' सर्वेभ्योऽपि महान्ति वस्तूनि हे होतः ! 'वेद' अपि जानासि

सर्व्वाऽ एवैता ऽइष्टकाः साहस्रीरुपासीत । रात्रिसहस्रेण रात्रिसहस्रेणैकैकां परिश्रितꣳ सम्पन्नामुपासीताहःसहस्रेणाहःसहस्रेणैकैकामहर्भाजमर्धमाससहस्रेणार्धमाससहस्रेणैकैकामर्धमासभाजं माससहस्रेण माससहस्रेणैकैकां मासभाजमृतुसहस्रेणर्तुसहस्रेणैकैकामृतुभाजं मुहूर्तसहस्रेण मुहूर्तसहस्रेणैकैकां मुहूर्तभाजꣳ संवत्सरसहस्रेण संवत्सरं ते यऽएतमेवमग्निꣳ संवत्सरेण सम्पन्नं विदुः सहस्रतमीꣳ हास्य ते कलां विदुरथ यऽएनमेवं न विदुर्न हास्य ते सहस्रतमीं चन कलां विदुरथ य ऽएवैवं वेद यो वैतत्कर्म कुरुते स हैवैतꣳ सर्व्वं कृत्स्नं प्राजापत्यमग्निमाप्नोति यं प्रजापतिराप्नोत्तस्मादेवंवित्तप ऽएव तप्येत यदु ह वाऽएवंवित्तपऽ एव तप्यतऽआ मैथुनात्सर्व्वꣳ हास्य तत्स्वर्ग्यं लोकमभिसम्भवति ॥ ४ ॥

---

सर्वा एवैता इष्टकाः साहस्रीरुपासीत । रात्रिसहस्रेण रात्रिसहस्रेणैकैकां परिश्रितं सम्पन्नामुपासीत । अहःसहस्रेण अहःसहस्रेणैकैकामहर्भाजम् । अर्धमाससहस्रेणार्धमाससहस्रेणैकैकामर्धमासभाजम् । माससहस्रेण माससहस्रेणैकैकां मासभाजम् । ऋतुसहस्रेण ऋतुसहस्रेणैकैकामृतुभाजम् । मुहूर्तसहस्रेण मुहूर्तसहस्रेणैकैकां मुहूर्तभाजम् । संवत्सरसहस्रेण संवत्सरम् । ते य एतमेवमग्निं संवत्सरेण सम्पन्नं विदुः, सहस्रतमां हास्य ते कलां विदुः । अथ य एनमेवं न विदुः, न हास्य ते सहस्रतमीं चन कलां विदुः । अथ य एवैवं वेद, यो वैतत्कर्म कुरुते—स हैवैतं सर्वं कृत्स्नं प्राजापत्यमग्निमाप्नोति । यं प्रजापतिराप्नोत् । तस्मादेवंवित्तप एव तप्येत । यदु ह वा एवंवित्तप एव तप्यते—आ मैथुनात्सर्वं हास्य तत्स्वर्ग्यं लोकमभिसम्भवति ॥ ४ ॥

---

म् १ । २ । १६ ) इति । 'सहस्रसंवत्सरायुःकेऽन्तिमे संवत्सरे ' सर्वोऽत्यपवत ' अत्यक्षरत् बहुमक्षरित । इत्यर्थः । स य सोऽत्यपवत अयमेव पवमानो वायुरासीत् । अथ यमेव त मृत्युरुप पाप्मानमत्यपवत तदिदं शरीरम् अतिद्रुत शरीरमेव तदानीं प्रजापतेर्गतमित्यर्थः । क उ तस्मै मनुष्य इत्यादिना । सहस्रोपासनायाः प्रसङ्गमाह ' य सहस्रसंवत्सरमेतदग्नौ व्रतीन ' जीवतीति शेषः । तस्मै सहस्रसंवत्सरजीवनाय को वा मनुष्यः शक्नुयात् '—मनुष्यायुषः परमावधि शतम्, अतो जीवता मनुष्येण सहस्रसंवत्सरा प्राप्तुमशक्या । तर्हि तेषां कथं प्राप्तिः तदुपायमाह—विद्यया ह वा इति ॥ ३ ॥

सहस्रसंवत्सरावरोधे मनुष्यस्य विद्यैव साधनं यतः, अतस्तामुपासनामाह—सर्वा एवैता इष्टका इति । सामान्येन सर्वा इष्टकाः साहस्रीः सहस्रसम्मिता इत्युपासीत । विशेषत आह—रात्रिसहस्रेणेति । एकैका परिश्रितं रात्रिसहस्रेण सम्पन्नां रात्रिभिः सहस्रसंख्याभिः सम्पन्नाम् उपासीत । कार्त्स्न्येन व्याप्तिः सर्वत्र वीप्सार्थः । परिश्रिद्यजुष्मतीलोकम्पृणानां रात्र्यहरर्धमासमासर्तुमुहूर्तात्मकत्वं ( श. प १० ४।२ ब्राह्मण ) प्रागुक्तम् । अहर्भाजमर्धमासभाजं मासभाजमृतुभाजमिति पदचतुष्टयस्याप्ययमर्थः—यजुष्मतीषु चतु-

तदेतदृचाऽभ्युक्तम् । ( ऋ ) न मृषा श्रान्तं यदवन्ति देवा ऽइति न हैवैवं-विदुषः किंचन मृषा श्रान्तं भवति तथो हास्यैतत्सर्वं देवा ऽअवन्ति ॥ ५ ॥

इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ १०-३-३ ॥ ( ४. ४. ) ॥

अथादेशा ऽउपनिषदाम् । (ब्रा) वायुरग्निरिति ह शाकायनिन ऽउपा-सतेऽआदित्योऽग्निरित्यु हैकऽआहुरथ ह स्माह श्रौमत्यो वा हालिङ्गवो वा वायुरेवाग्निस्तस्माद्यदेवाध्वर्युरुत्तमं कर्म करोत्यथैतमेवाप्येतीति ॥ १ ॥

---

तदेतदृचाऽभ्युक्तम्-" न मृषा श्रान्तं, यदवन्ति देवाः "-( ऋ. सं. २।४।२२।३ ) इति । न हैवैवं विदुषः किंचन मृषा श्रान्तं भवति । तथो हास्यैतत्सर्वं देवा अवन्ति ॥ ५ ॥

अथादेशा उपनिषदाम्—वायुरग्निरिति ह शाकायनिन उपासते । आदित्योऽग्निरित्यु हैक आहुः । अथ ह स्माह श्रौमत्यो वा हालिङ्गवो वा—वायुरेवाग्निः । तस्माद्यदेवाध्वर्युरुत्तमं कर्म करोति-अथैतमेवाप्येतीति ॥ १ ॥

---

रूनवत्सु शतसंख्यासु चतुष्कासु मध्ये पञ्चत्रिंशत्तमसंख्या अहोरात्रा । चतुर्विंशतिरर्द्धमासरूपा । द्वादश-वशिष्टा मासरूपा । ता एव द्वे द्वे भूत्वा षड् ऋतुरूपा । तदभिप्रायेण अहर्मासमित्युक्तम् संवत्सरेण सम्पन्ना-मुपासीत । एवमर्द्धमासमासानित्यादि व्याख्येयम् । मुहूर्तभागमिति लोकम्पृणानिष्टकाम् । संवत्सरसहस्रेण संवत्सरानिति । समष्टिरूपादि यानिष्टिपदम् । उपासन फलमाह—य एतमेवमग्निं संवत्सरेण सम्पन्नं विदुरिति । सहस्रतमीष्टिका यावानिष्टकानुभूतामग्निरूपज्ञानफलं विदुर्जानन्ति । येषां तादृशज्ञानाभावस्तेषां पापनरहेतुभूतोपायदर्शनाभावं इत्याह—अथ य एतमेवमिति । सर्वेषु व्यापारेष्वपि एतदुपासनं कर्तुं युज्यत इति वक्तुम् । अमिथुनादिति । मैथुनान्यव्यापारेषु सर्वेष्वपि एततत् अभिसत्त्वप्रधानां च सहस्राभिरूपज्ञानफल-करोति तस्मात्स्वर्गलोकप्राप्तिसर्वत्रैव पर्व ॥ ४ ॥

विदुषः किंचिदपि व्यापारमात्रं व्यर्थं न भवतीत्यर्थे मन्त्रं संवादयति—तदेतदृचाऽभ्युक्तं न मृषेति । अत्र "न मृषा श्रान्तं यदवन्ति देवा " इत्येतावान् पाद एव संवादः । उत्तरस्मिन्पादत्रये लोपामुद्राऽगस्त्यप्रतिपा-दकानि । अनवाव जयाव अभ्यजाविवेति त्रीणि द्विवचनान्तानि पदानि प्रयुक्तानि । तान्यत्र न सङ्गच्छन्त इति पाद एव संवादत्वेन पठितः । पादस्यार्थमाह—न हैवैवं विदुष इति । एवं जानानस्य पुरुषस्य किंचन किंचिदपि न मृषा श्रान्तं व्यर्थः श्रमो न भवति । एवं विद्वान् यः कुरुते तत्सर्वं यस्मात् देवा रक्षन्ति ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे चतुर्थेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( १० । ४ । ४ ) ॥

एवं प्रजापत्यात्मकनमष्टिरूपोपासनामभिधाय व्यष्टिरूपाग्निविषयामुपासनां वक्तुं प्रतिजानीते—अथादेशा उपनिषदामिति । ' अथ ' अनन्तरम् ' उपनिषदां ' रहस्यार्थानाम् ' आदेशाः ' उपदेशाः वक्ष्यन्त इत्यर्थः । तत्र वाय्वादिरूपत्वेनाग्न्युपासने सम्प्रदायमाह—वायुरग्निरिति । शाकायनिन आचार्याः चित्याग्निं वायु-

चतुर्थी, सर्वे कामाः पञ्चमी । इमांश्च लोकान्त्संस्कुर्वे । आत्मानं च, सर्वांश्च कामानित्येव विद्यादिति ॥ ३ ॥

---

शाण्डिल्यपुत्रवंशजेन मार्गेणेमाह—'इमे' त्रयो लोका 'एव' अग्ने स्वयमातृण्णावत्य—तिस्रश्चितय स्वयमातृण्णानाम सहजच्छिद्रयुक्तपाषाणेष्टका । ताश्च तिसृषु प्रथममध्यमोत्तमासु चितिषु उपधीयन्ते । 'यजमान' एव चतुर्थी चितिः । सर्वे कामा पञ्चमी चितिः । एवमिमांस्त्रीँल्लोकान् सर्वान् कामान्, आत्मानं, पञ्चचित्यात्मना संस्कुर्वे इति ध्यायेदिति ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
दशमकाण्डे चतुर्थेऽध्याये पञ्चमं ब्राह्मणम् ॥ ( १०–४–५ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्ड गोसहस्र कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताम्भोन्धिप्रधानीरीत्रिदशतरुलताधेनुमौवर्णभूमी ।
रत्नोस्रा हेमबाजिद्विपमहितरथौ सायणि सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक् घटं च ॥
धान्याद्रिं धन्यजन्मा तिलमवमतुलं स्वर्णजं वर्गमुख्यं,
कार्पासीयं कृपावान्युदकलमजडो राजनं राजमूल्यम् ।
आज्यीयं प्राज्यजन्मा लवणजमनृणं शार्करं चार्कतेजा,
रत्नाद्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
दशमकाण्डे चतुर्थोऽध्यायः समाप्तः ॥ ( १०–४ ) ॥



# अथ पञ्चमेऽध्याये प्रथमं ब्राह्मणम् ।
# तृतीयप्रपाठके च पञ्चमं ब्राह्मणम् ।

तस्य वाऽएतस्याग्नेः ( र्वा ) र्वागेवोपनिषद्वाचा हि चीयतऽऋचा यजुषा साम्नेति नु दैव्याऽथ यन्मानुष्या र्वाचा हेतीदं कुरुतेतीदं कुरुतेति तद्द ह तया चीयते ॥ १ ॥

सा वाऽएषा र्वाक्त्रेधा विहिता । ( तर्चो ) ऋचो यजूꣳषि सामानि तेनाग्निस्त्रेधा विहित ऽएतेन हि त्रयेण चीयतेऽथ हैवं त्रेधा विहितऽइत्थꣳ ह त्वेवापि त्रेधा विहितो यदस्मिंस्त्रेधा विहिताऽइष्टका ऽउपधीयन्ते पुन्नाम्न्य स्त्रीनाम्न्यो नपुꣳसकनाम्न्यस्त्रेधा विहितान्युऽएवेमानि पुरुषस्याङ्गानि पुन्नामानि स्त्रीनामानि नपुꣳसकनामानि ॥ २ ॥ ( शतम् ९४०० )

---

तस्य वा एतस्याग्नेर्वागेवोपनिषद् । वाचा हि चीयते, ऋचा, यजुषा, साम्नेति नु दैव्या । अथ यन्मानुष्या वाचा हेति । इदं कुरुतेति, इदं कुरुतेति । तद्द ह तया चीयते ॥ १ ॥

त्रयीमयादित्याग्न्युपासनं ब्राह्मणम् ।

सा वा एषा वाक् त्रेधा विहिता—ऋचः, यजूंषि, सामानि । तेनाग्निस्त्रेधा विहितः । एतेन हि त्रयेण चीयते । अथ हैवं त्रेधा विहितः—इत्थं ह त्वेवापि त्रेधा विहितः । यदस्मिंस्त्रेधा विहिता इष्टका उपधीयन्ते—पुन्नाम्न्यः, स्त्रीनाम्न्यः, नपुंसकनाम्न्यः । त्रेधा विहितान्यु एवेमानि पुरुषस्याङ्गानि—पुन्नामानि, स्त्रीनामानि, नपुंसकनामानि ॥ २ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

पूर्वम् "आदित्योऽग्निरित्युहैक आहुः" ( श. प. १० । ४ । ५ । १ ) इत्युक्तं तत्र त्रयीमयादित्येऽग्न्युपासनाऽस्मिन् ब्राह्मणे वक्ष्यते । अथ तस्याग्नेस्त्रयीमयत्वं दर्शयति—तस्य वा एतस्याग्नेरिति । 'वागेवोपनिषद्' रहस्यं स्वरूपम् । यतोऽग्निः ऋग्यजुः—सामरूपया दैव्या 'वाचा' चीयते, 'मानुष्या' मनुष्यसम्बन्धिन्या 'वाचा' अपि चीयते । तामेवाभिनयेनाह—इतीदं कुरुतेति 'इति इदं कुरुतेति' ॥ १ ॥

वाचस्त्रैविध्यादग्निरपि तथा वितस्त्रिविध इत्याह—सा वा एषा वाक् त्रेधा विहितेति । तेनाग्निस्त्रेधा विहितः अग्निवायुसूर्यात्मनेत्यर्थः । अथ हैवं त्रेधा विहित इत्यनेन वेदत्रयद्वाराऽग्नेरुक्तत्रैविध्योपसंहारः । इत्थं ह त्वेवापि त्रेधा विहित इत्यनेन वक्ष्यमाणत्रैविध्यप्रतिज्ञा । 'यत्' यस्मात् 'अस्मिन्' अग्नौ 'त्रेधा विहिता इष्टका उपधीयन्ते' । 'पुन्नाम्न्यः' पुंलिङ्गशब्दाभिधेया स्तोमाख्या । "स्तोमानुपदधाति"—

सोऽयमात्मा त्रेधा विहित एव । सोऽनेन त्रेधा विहितेनात्मनैतं त्रेधा विहितं दैवममृतमाप्नोति ता उ सर्व्वा इष्टका इत्येवाचक्षते नेष्टक इति नेष्टकमिति वाचो रूपेण वाग्घ्येवैतत्सर्व्वं यत्स्त्री पुमान्नपुꣳसकं वाचा ह्येवैतत्सर्व्वमाप्तं तस्मादेनाऽअङ्गिरस्वद्ध्रुवा सीदेत्येव सर्व्वाः सादयति नाङ्गिरस्वद्ध्रुवः सीदेति नाङ्गिरस्वद्ध्रुवꣳ सीदेति वाचꣳ ह्येवैताꣳ सꣳस्कुरुते ॥ ३ ॥

सा या सा वागसौ स ऽआदित्यः । स ऽएष मृत्युस्तद्यत्किं चार्व्वाचीनमादित्यात्सर्व्वं तन्मृत्युनाऽऽप्तꣳ स यो हैनमतोऽर्व्वाचीनं चिनुते

---

सोऽयमात्मा त्रेधा विहित एव । सोऽनेन त्रेधा विहितेनात्मनैतं त्रेधा विहितं दैवममृतमाप्नोति । ता उ सर्वा इष्टका इत्येवाचक्षते–नेष्टक इति, नेष्टकमिति । वाचो रूपेण । वाग्घ्येवैतत्सर्वम्–यत् स्त्री, पुमान्, नपुंसकम् । वाचा ह्येवैतत्सर्वमाप्तम् । तस्मादेना " अङ्गिरस्वद्ध्रुवा सीद " ( वा. सं. १२ । ५३ ) इत्येव सर्वाः सादयति । नाङ्गिरस्वद्ध्रुवः सीदेति । नाङ्गिरस्वद्ध्रुवं सीदेति । वाचं ह्येवैताः संस्कुरुते ॥ ३ ॥

सा या सा वाक्–असौ स आदित्यः । स एष मृत्युः । तद् यत्किंचार्वाचीनमादित्यात्–सर्वं तन्मृत्युनाऽऽप्तम् । स यो हैनमतोऽर्वाचीनं चिनुते–मृत्युना हैनं स आप्तं चिनुते । मृत्यवे ह स

---

( श. प. । ८ । ४ । १ । ४–६ ) इति श्रुते । ' स्त्रीनाम्न्य ' स्त्रीलिङ्गशब्दाभिधेया अषाढाच्छन्दस्याविकृत्यादयः । ' नपुंसकनाम्न्य ' नपुंसकशब्दाभिधेया पशुशीर्षाद्या यः । " पशुशीर्षाण्युपदधाति "–( श. प. । ७ । ५ । २ । १ ) इति श्रुते । यथा लिङ्गत्रयशब्दाभिधेया इष्टका लिङ्गत्रयशब्दाभिहिता–एव पुरुषस्याङ्गानि लिङ्गत्रययुक्तशब्दाभिधेयानि । यथा कर्ण, पाणि, पाद, इति पुंलिङ्गशब्दाः । नासिका, जङ्घा, इति स्त्रीलिङ्गशब्दाः । लोचन, वपु, शिर, इति नपुंसकलिङ्गशब्दाः ॥ २ ॥

' सोऽयमात्मा ' पुरुषस्त्रेधा विहित, लिङ्गत्रयशब्दाभिहिताङ्गयुक्त । अनेन त्रेधाविहितेनात्मना त्रिविधेष्टकाचितेन त्रेधा विहितम्, अग्निपुरुषात्मना त्रिविधं दैवममृतमाग्निमात्मानमाप्नोति तदुदीष्टकानां स्त्रीपुंनपुंसकलिङ्गशब्दाभिधेयत्वे सति तथैव कथमिष्टकाशब्दस्य लिङ्गत्रयव्यवहारो नास्तीत्याशङ्क्य वाग्रूपत्वेन परिहरति–ता उ सर्वा इष्टका इत्येवाचक्षत इति । स्त्रीलिङ्गशब्देनैव व्यवह्रियन्ते न तु पुंनपुंसकलिङ्गाभ्यामिति । तदाह–नेष्टक इति, नेष्टकमिति । किमर्थमेव ' वाचो रूपेण ' वाचः स्त्रीलिङ्गत्व एतत् । सादनमन्त्रेऽपि स्त्रीलिङ्गत्वमेवेत्याह–तस्मादेना अङ्गिरस्वद् ध्रुवा सीदेति । ध्रुवाशब्दात् स्त्रियां टाप् प्रत्ययः । पुंनपुंसकलिङ्गं ध्रुवपदेन सादनं दर्शयति निराकरणाय–नाङ्गिरस्वद् ध्रुवः सीदेति । नाङ्गिरस्वद् ध्रुवं सीदेति । ध्रुव इति पुंलिङ्गत्वं ध्रुवमिति नपुंसकत्वम् इत्येवमर्थवादेनानुक्तम् ॥ ३ ॥

वाच आदित्यात्मत्वमाह–सा या सा वागसौ स आदित्य इति । ' यत्किंचार्वाचीनम् ' अर-

मृत्युना ह्येनथ्ँ स ऽआप्तं चिनुते मृत्यवे ह स ऽआत्मानमपिदधात्यथ य ऽएनमत ऽऊर्ध्वं चिनुते स पुनर्मृत्युमपजयति विद्यया ह वाऽअस्यै-षोऽत ऽऊर्ध्वं चितो भवति ॥ ४ ॥

सा वाऽएषा वाक्त्रेधा विहिता । (तृचो) ऋचो यजूथ्ँषि सामानि मण्ड-लमेवऽर्चोऽर्चिः सामानि पुरुषो यजूथ्ँष्यथैतदमृतं यदेतदर्चिर्दीप्यतऽइदं तत्पुष्करपर्णं तद्यत्पुष्करपर्णमुपधायाग्निं चिनोत्येतस्मिन्नेवैतदमृतऽऋ-ङ्मयं यजुर्मयथ्ँ साममयमात्मानथ्ँ सथ्ँस्कुरुते सोऽमृतो भवति ॥ ५ ॥

इति तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ १०–३–५ ॥ ( ५. १. ) ॥

---

आत्मानमपि दधाति । अथ य एनमत ऊर्ध्वं चिनुते—स पुनर्मृत्युमपजयति । विद्यया ह वा अस्यैषोऽत ऊर्ध्वं चितो भवति ॥ ४ ॥

सा वा एषा वाक् त्रेधा विहिता—ऋचः,यजूंषि, सामानि । मण्डलमेवऽर्चः, आर्चिः सामानि, पुरुषो यजूंषि, अथैतदमृतम्—यदेतदार्चिर्दीप्यते । इदं तत्पुष्करपर्णम्—तद् यत्पुष्करपर्णमुपधायाग्निं चिनोति—एतस्मिन्नेवैतदमृतऽऋङ्मयम्, यजुर्मयम्, साममयमात्मानं संस्कुरुते । सोऽमृतो भवति ॥ ५ ॥

---

१ स्तन भूतजात तत्सर्वं मृत्युनाऽऽप्तम् । न हि सूर्यप्रकाशानाक्रान्त वस्त्वस्ति । अत सूर्यादर्वाचीन चिनुते । मृत्युनाऽऽक्रान्तमेव विचिन्वन्यजमान स्वात्मानमपि मृत्यवे अर्पितवान् भवति । यत एवम्, अत सूर्यादूर्ध्वे चयने मृत्युकर्तृकाक्रमणस्याभावात् पुनर्मृत्युजय फल भवति । तत्कथ सूर्यादूर्ध्वं चयनमसम्भवपरिहतत्वा-दित्याशङ्क्य तत्राप्युपाय दर्शयति—विद्यया ह वा इति । यद्यपि वस्तुस्थित्या आदित्यस्योपरि चयनाभावस्त-थापि ज्ञानेनोर्ध्वचयनं सम्पादयितुं शक्यते । अतस्तथोपासनायां पुनर्मृत्युजय फल भवतीत्यर्थ ॥ ४ ॥

यदुक्त विद्यया अस्यादित्यस्योर्ध्वमग्निश्चितो भवतीति तद्विशदयति—सा वा एषा वाक् त्रेधा विहितेति । सूर्यमण्डले तावत्त्रीणि विद्यन्ते ज्योतिर्मयमण्डलम्, अर्चींषि, तदन्तर्वर्ती पुरुष, इति । चयनेऽपि वेदत्रय-मस्ति तत्र 'मण्डलमेव' ऋग्रूपत्वेनोपासनीयम्, 'अर्चि' एव सामरूपत्वेन, अन्तर्वर्ती अग्निपुरुष एव यजूरूप-त्वेन । 'अर्चिर्दीप्यते' इति यत् तद् 'एतदमृत' 'तत् पुष्करपर्णं' । यत "अपां पृष्ठमसि"—( वा. स. । १३ । २ । ) इति मन्त्रेण प्रथम पुष्करपर्णमुपधाय तस्योपर्यग्नेश्चयनम् । अतस्तदात्मकेऽमृते-ऽर्चिर्मये आदित्येऽप्युपासिता स्वीयमात्मान वेदत्रयरूप चित्याग्निरूप सदर्चिर्न् 'अमृत' मृत्युबाधारहित मूर्त्यात्मको भवतीत्यर्थ ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्य

दशमकाण्डे पञ्चमेऽध्याये प्रथम ब्राह्मणम् ॥ ( १०–५–१ ) ॥

यदेतन्मण्डलं तपति । तन्महदुक्थं ता ऽ ऋचः स ऽ ऋचां लोकोऽथ यदे-
तदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि स साम्नां लोकोऽथ य ऽएष ऽएत-
स्मिन्मण्डले पुरुषः सोऽग्निस्तानि यजूꣳषि स यजुषां लोकः ॥ १ ॥

मण्डलपुरुषोपासनं ब्राह्मणम् ।

यदेतन्मण्डलं तपति—तन्महदुक्थम्, ता ऋचः, स ऋचां लोकः । अथ यदेतदर्चिर्दीप्यते तन्महा-
व्रतं तानि, तानि सामानि, स साम्नां लोकः । अथ य एष एतस्मिन्मण्डले पुरुषः—सोऽग्निः, तानि
यजूंषि, स यजुषां लोकः ॥ १ ॥

अथ मण्डलब्राह्मणं व्याख्यायते—सूर्यमण्डलादि पुरुषत्रयस्याधिदैवाधियज्ञाध्यात्मपरत्वेनार्थ उच्यते । तत्रा-
धिदैवमयमर्थः—तपनगतमहदुक्थमहाव्रतादित्रय क्रमेण मण्डलादि पुरुषरूपत्वेनोपासनीयमिति । अधियज्ञम-
यमर्थः—तपनगतरुक्मपुष्करपर्णहिरण्मयपुरुषाणां मण्डलादित्रयरूपत्वेनोपासनमिति । अध्यात्ममपि मण्डलादि-
त्रयमेव दक्षिणाक्षिगतशुक्लकृष्णवर्णतदन्तर्वर्तिपुरुषाणां मण्डलादित्रयरूपत्वेनोपासनमिति । लोचने हि शुक्लरूपं

अथ पण्डितमण्डनं नाम मंडलब्राह्मणभाष्यम् ॥

विचार्य सर्वविदाने. सचार्य हृदयाम्बुजे । प्रचार्य सर्वलोकेषु ह्याचार्यं शंकरं भजे ॥ १ ॥
पद्मपादो विश्वरूपो हस्तामलकतोटकौ । अद्वैतदीक्षागुरवः साचार्याः पान्तु पञ्च माम् ॥ २ ॥
नारायणेन्द्रपादाब्ज विदिंद्रचरणाम्बुजम् । नृसिंहेन्द्रपदाम्भोज कैवल्येन्द्रपदाम्बुजम् ॥ ३ ॥
एतानि पञ्चरत्नानि चत्वारि हृदयाम्बुजे । मामकाने प्रकाशन्तां भुक्तिमुक्तिप्रसिद्धये ॥ ४ ॥
नारायणेन्द्रपादाब्जनिर्भिन्दीकृतमानसः । श्रीराघवेन्द्रो जयति राजहंसपरानिधिः ॥ ५ ॥
योगसंतर चास्य राजहंससरस्वती । षड्दर्शनी प्रवक्ताऽयमिति य जानते बुधाः ॥ ६ ॥
माध्यंदिनानां शाखायां पौरुषेयत्ववर्जिते । चतुर्दशमहाकाण्डे मङ्गले तु शतायने ॥ ७ ॥
त्रिलोकीनायकाकठ्याभिमानपद्मश्रुतेः । सार्गैर्वेदैः सहोपागैर्गोपमानपदाश्रुतेः ॥ ८ ॥
त्रिलोकीनयनाब्जस्य त्रयीनूर्तेर्महौजसः । आंगनावालगोपालप्रसिद्धस्यामितद्युतेः ॥ ९ ॥
स्वरूपज्ञापक पुण्यं मंडलं ब्राह्मणं शुभम् । वर्तेते यत्तदधुना पदवाक्यप्रमाणगतः ॥ १० ॥
व्याख्यायते यथाशक्ति यथाबुद्धि यथायथम् । मुहुर्मुहुर्विचार्येतत्सूर्यभक्तिधुरन्धरैः ॥ ११ ॥
व्याख्यार्थश्रवणाद्यो हि वेदपाठो महाफलः । वाक्यार्थं मनसा ध्यायन् देवतामुपतिष्ठते ॥ १२ ॥
यदस्य पुण्यमाहात्म्यं शेषो वक्तुं न पार्यते । यत एव ततो विद्वद्भिर्वाक्यार्थः सुविचार्यताम् ॥ १३ ॥

तथाच सामब्राह्मणं—" यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति " ( छां.
उ. १ । १ । १० ) इति अस्य ब्राह्मणस्य मण्डलब्राह्मणमिति नामधेयम् । यतो मध्याह्नमध्यागतप्रीयतादि
" मित्रादित्यद्युपाक्युत्थसूक्तादिपतलमण्डलब्राह्मणोपादित्यमुपस्थाय " ( का. शिक्. मा. सू. २ । ५ ) इति
सूत्रेणेदं ततो मण्डलब्राह्मणमादित्योपस्थाने विनियुक्तं इत्यध्यवसितमस्माभिः । नामार्थस्तु—मण्डलस्यावबोधकं ब्राह्मणं
मण्डलब्राह्मणमिति । शाकपार्थिवादिगणपाठात् उत्तरपदलोपेन सिध्यते । औपस्थानिकार्थाः पुरुषस्यावबोधक इत्यपि

कृष्णरूप चास्ति तदन्तर्वर्ती पुरुषश्च दृश्यते । एतत्प्रसङ्गेन सव्यलोचनगतपुरुषस्य मिथुनत्वसम्पादनम् । अथ पुरुषस्य मृत्युत्वमुपजीव्य मृत्युगनैकत्वबहुत्वान्तिकत्वदूरत्वमीमांसा । तस्यैव पुरुषस्य बहुधोपासन तत्फलमिति मण्डलब्राह्मणप्रतिपादितार्थसङ्ग्रहः । अक्षरार्थो व्याख्यायते–यदेतन्मण्डलं तपति तन्महदुक्थमिति । यदुक्त तन्मण्डलत्वेन ध्येयम् । एव महाव्रतचि याग्नी अर्चि पुरुषात्मना ध्येयौ, वेदत्रयस्याग्निवायुसूर्यात्मकत्वेन त्रयो वेदा देवतानीति वक्तु प्रयुज्यते । अतो मण्डलस्य बृहदुक्थद्वारा ऋग्वेदात्मकत्वोपासनमिति । उत्तरत्राधियज्ञपर्याये, माक्सामादयो यज्ञावयवरूपविशेषा इति । नोध्यात्माधियज्ञयो स्तेषामुपास्यार्थता । तन्महदुक्थं ता ऋचः स ऋचां लोक इति । उक्थस्य, ऋक्सङ्घात्मकत्वात्, तस्य च मण्डलात्मकत्वोपासनात् 'ऋचां लोक ' ऋग्वेदरूपेण मण्डलमुपासनीयम्, मण्डलरूपेण वा ऋग्वेद उपासनीय, तदुभयात्मना महदुक्थमुपासनीयम्, उभयथा व्याख्यातत्वात् । एवमुत्तरत्र महाव्रत सर्वसाम्ना मकमर्चीरूपमिति सामवेदात्मना वा ध्यानमर्चिषः । अग्निर्मण्डलस्थपुरुषरूप, अग्निश्च यजुर्मन्त्रसाध्य इति तस्य पुरुषत्वोक्त्या यजुर्मन्त्रसाध्यत्वोक्त्या च यजुर्वेदात्मकत्वम् । एवमुक्थमहाव्रतचित्याग्नीनां मण्डलार्चि पुरुषात्मकत्वेन तस्य मण्डलादित्रयस्य, ऋग्यजु सामरूपत्वम् ॥ १ ॥

---

विज्ञायताम् । तथा मूलग्रंथे विरहीन प्रतिभानात् । तत्रादौ भगवतस्त्रैलोक्यनायकस्यादितेयाग्रगण्यस्यादित्यस्य दिव्यगृहस्थानीय मडल तोष्टूयते श्रुत्या । तत्स्तुतौ मडलस्तित्वाधिक्योपपत्ते । यथा हि लोके राजन्यस्येद हर्म्यतल रम्य बहुमूल्य चेत्युक्ते राजन्यो बहुधनो महाभाग्य इत्यर्थासिध्यति तथैवात्रापि विज्ञायताम् । अर्चि स्तुत्यादौ पुरुषस्तुत्यादौ च अथशब्दपाठात् एतत्प्रथमकण्डिकादौ मडलस्तुत्यारम्भेऽपि उत्तरत्रस्यो अथशब्दो अनुषजनीय । प्राय पाठसामर्थ्यात् अध्याहारो मूलबाह्य । अनुषगस्तु मूले एकत्र पठितस्यापरत्र नयनम् । अनुषजितो अथशब्दो मगलार्थ । तथाच स्मृतिः–ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मण पुरा । कंठं भित्त्वा विनिर्यातौ तस्मान्मांगलिकावुभौ" ( ब्र.सू. १।१।१ इत्यत्र भाष्ये रत्नप्रभायां ) । इतरावयवशब्दावानन्तर्यार्थौ । तत्र प्रतिपदव्याख्यानकाले स्पष्टीकरिष्यते । अध्याहारानुषगौ वेदेऽपि प्रथितौ । यथा 'इषे त्वा' ( वा. स १ । १ । १ ) इत्यत्र छिनद्मीति । यथा वा तैत्तिरीयके ' तेषाꣳसहस्रयोजनेऽवधन्वानि तन्मसि ' ( तै. स. ४ । ५ । ११) इति ऋगुत्तरार्द्धस्य उत्तरत्रोन्नयन । संप्रति कंडिका व्याख्यायते । अनुषजिताथशब्देन मगलमनुष्ठाय भागवती श्रुतिर्मंडलस्य सर्वात्मकत्व निरूपयति–यदेतन्मंडलमिति । ' एतत् ' सर्वप्राणिचक्षुर्गोचर मडल वर्तुलाकार मडयति भूषयत्यम्बरमिति मडल । ' मडिभूषणे ' । ' यत्तपति ' तन्मडल ' महत् ' सर्वजगत्पूज्य ' उक्थ ' बृहतीसहस्रत्वेन प्रसिद्धो होत्रे शस्त्रविशेष । तथाच ऋग्वेदारण्यक 'उक्थमुक्थमिति वै प्रजा वदति' ( ऐ. आ. २ । १ । २ । १ ) इति । किंच ' ता ' प्रसिद्धा ' अग्निमीळे पुरोहितम् ' ( ऋ. स. १ । १ । १ । १ ) इत्याद्या ऋचोऽपि मडलमेव । ' स ' प्रसिद्ध ऋचामध्ययनफलीभूतो लोकोऽपि मडलमेव । औपलक्षण्येन सर्वात्मक मडलमिति भाव । यद्वा मडले महदुक्थत्वर्ग्वेदलोकत्वदृष्टि कार्या । सर्वात्मकत्वबुध्योपासितव्यमिति वा । एव कैमुतिकन्यायेन मडलाधिष्ठातार स्तोतु मडलमभिष्टूय पुनस्तेनैव न्यायेनार्चिरभिष्टवीति–अथेति । अथ मडलस्तुत्यनतर ' एतत् ' सार्वजनीन ' नु ' प्रसिद्ध ' यत् अर्चि ' त्रैलोक्यप्रकाशक सौर तेज दीप्यते ' तदर्चि ' 'महाव्रत' क्रतुविशेष । तथा च ऋग्वेदारण्यकम् । ' अथ महाव्रतमिंद्रो वृत्र हत्वा महानभवत्, यन्महानभवत्तन्महाव्रतस्य महाव्रतत्वम् ' ( ऐ. आ. १ । १ । १ ) इत्यादि ' तानि '

---

१—' नाधिदैवाधियज्ञयो समानार्थता तेषामुपास्यतेति '–क्वचित्पुस्तके पाठभेद ।

सैषा त्रय्येव विद्या तपति । तद्धैतदप्यविद्वाᳫँस आहुस्त्रयी वा एषा विद्या तपतीति वागेव तत्पश्यन्ती वदति ॥ २ ॥

---

सैषा त्रय्येव विद्या तपति । तद्धैतदप्यविद्वास आहुः–त्रयी वा एषा विद्या तपतीति–वागेव तत्पश्यन्ती वदति ॥ २ ॥

---

सैषा त्रय्येव तपतीति । ' त्रयी ' वेदत्रयम् ' एव ' ' तपति ' । उक्तार्थे लोकसम्मतिमाह–तद्धैतदप्यविद्वास आहुरिति । ' ह ' प्रसिद्धम् । ' अविद्वांस ' ' अपि ' ' एतद् ' ' आहु '–' एषा ' ' त्रयी ' ' एव ' ' विद्या ' ' तपतीति ' । एतदुक्तमर्थस्वरूप ' पश्यन्ती ' पर्यालोचयन्ती ' वाग् ' ' वदति '–' त्रय्येव विद्या तपतीति ' ॥ २ ॥

---

प्रसिद्धानि बृहद्रथन्तरमित्यादीनि सामानि आर्चिरेव ' स ' प्रसिद्ध साम्नामध्ययनफलीभूतो लोकोऽपि आर्चिरेव सर्वात्मकमिति यावत् । अर्थान्तर पूर्ववत् । यदर्थमेतदुभय श्रुत्वा अभिष्टुत सोऽय भगवानादित्यो अभिष्टूयते–अयेति । अथ मण्डलार्चिषो स्तुतेरूर्ध्व मण्डलाभिमानी आर्चिष्मामहोक्रियत इति शेष । ' एष ' प्राणिमात्रानुभूयमान ' य ' एतस्मिन्पूर्वोक्ते मण्डले तदभिमानी पुरुषो वर्तते । ' स ' अग्नि अत्युपलक्षित-समस्तदेवतात्मक । ' तानि ' प्रसिद्धानि इषे त्वत्यादीनि यजूषि पुरुष एव । ' स ' प्रसिद्ध । यजुषामध्ययनफलीभूतो लोकोऽपि पुरुष एव सर्वात्मक सर्वान्तर्यामीति भाव । तथा च मन्त्र –' सूर्य आत्मा जगतस्तस्थुषश्च ' ( वा स. ९ । ४२ ) इति । पुरुषशब्दो बहुधा व्युत्पाद्यते । पूरयति स्वतेजसा भुवनत्रयमिति पुरुष । तथा च मन्त्र –' आ प्रा द्यावापृथिवी अन्तरिक्षम् ' ( वा. स. ७ । ४२ ) इति । सर्वप्राणिशरीरेषु शेते इति वा पुरुष । तथा च श्रुति –' सर्वासु पूर्षु शेते ' ( श. प १४ । २ । ५ । १८ ) इति । ' पुरुषविधब्राह्मणे तु–' सर्वान्पाप्मन औषत्तस्मात्पुरुष ' ( श. प. १४ । १ । २ । २ ) इति । अन्यत्सर्व पूर्ववत् ॥ १ ॥

आद्यकण्डिकायां मण्डलस्य महदुक्थाद्यात्मकत्वदृष्टिमुपदिश्य द्वितीयकण्डिकायां केवलवेदत्रयात्मकत्वमुपदिशति–सैषेति । यदेतत्तपति तन्मण्डल न भवति किंतु ' सा ' प्रसिद्धा ' एषा ' श्रीगुरुभि छात्रप्रछात्रोपछात्रद्वारा अध्याप्यमाना त्रयी विद्या तपति । एवकारो मण्डलत्वबुद्धिं दूरीकरोति । त्रयीशब्दो वेदत्रयवाचक वेदत्रयमेव तपति न मण्डलमिति इममर्थं कैमुतिकन्यायेन द्रढयति–तद्धैतदिति । तद्धेति पदच्छेद । ह किल तदेतत् पूर्वोक्तार्थजात ' अविद्वांस ' बालगोपालादयोऽपि आहु । किल किमिति त्रयी वै प्रसिद्धा । एषा विद्या तपति न मण्डलमिति । किमुत शास्त्रजन्यपरिज्ञाना महान्त इति भाव । ननु–यद्यपि अज्ञप्राज्ञप्रसिद्धिरस्ति तथापि वेदप्रसिद्ध्या भवितव्यमिति, आशङ्क्य, साऽप्यस्तीत्याह–वागेवेति । ' तत् ' विद्यात्मत्वलक्षण ' पश्यन्ती ' वीक्ष्यमाणा वेदलक्षणा वाक् वदति । किमिति–' त्रयी वा एषा विद्या तपतीति ' देहलीप्रदीपन्यायेनान्वीयते । ' ह एव ' आभ्यां निपाताभ्यां वेदा प्रमाण विद्वदविद्वदनुभवश्च प्रमाण इति सोऽसूच्यते । यत एव ततो मण्डले वेदत्रयीत्वदृष्टि कर्तव्येति भाव ॥ २ ॥

---

१–पुरेषु शरीरेषु इत्यर्थ । २–पाप्मनो धक्षदित्यर्थ । ३–औषद् दग्धवानित्यर्थ ।

स॒ऽ ए॒षऽ ए॒व मृ॒त्युः । ( यं॒ ) य॒ऽ ए॒षऽए॒तस्मि॒न्म॒ण्डले पु॒रु॒षो॒ऽथै॒तद॒मृतं॒ य॒दे॒तद॒र्चि॒र्दी॒प्यते त॒स्मान्मृ॒त्यु॒र्न॒ म्रि॒यते॒ऽमृते॒ ह्य॒न्तस्त॒स्माद्उ॒ न॒ दृ॒श्यते॒ऽमृ॒ते॒ ह्य॒न्तः ॥ ३ ॥

( स्तु ) त॒दे॒ष श्लो॒को भवति । ( त्यु ) अ॒न्तरं मृ॒त्योर॒मृ॒तमि॒त्यव॒रꣳ

---

स एष एव मृत्युः, य एष एतस्मिन्मण्डले पुरुषः । अथैतदमृतं यदेतदर्चिर्दीप्यते । तस्मान्मृत्युर्न म्रियते—अमृते ह्यन्तः । तस्माद्उ न दृश्यते—अमृते ह्यन्तः ॥ ३ ॥

तदेष श्लोको भवति । "अन्तरं मृत्योरमृतम्"—इति । अवरं ह्येतन्मृत्योरमृतम् । "मृत्या-

---

अथ मण्डलस्थपुरुषस्य मृत्युरूपत्वमर्चिषोऽमृतरूपत्वं चाह—स एष एव मृत्युरिति । 'यः' 'एतस्मिन्मण्डले,' 'पुरुषः' 'सः' 'मृत्युः' । 'यत्' 'एतदर्चिर्दीप्यते ' तदमृतम् । यत. ' अमृते ' मरणरहिते, अर्चिषि ' अन्तः ' मध्ये वर्तते । अतो ' मृत्युर्न म्रियते ' । न ह्यमृतमध्यवर्ती विनश्यति । तथापि विनाशेऽमृतत्वप्राप्तिः स्यात्तद्भावेनोत्पत्तिरुपपन्नेति तात्पर्यम् । अन्तर्वर्तित्वमेव विशदयति—तस्माद्उ न दृश्यतेऽमृते ह्यन्तरिति । मृत्युरूपः पुरुषोऽमृतरूपेणार्चिषा परिवेष्टित इत्युक्तेऽग्निवर्गेऽर्चिराख्यमण्डलस्य पुरुषाधिष्ठितत्वम् ॥ ३ ॥

पुरुषार्चिषोरमर्त्यमण्डलमेव प्रतिष्ठेत्यस्मिन्नुक्ते चार्थे मन्त्रं संवादयति—तदेष श्लोको भवतीति । 'श्लोकः'

---

इय द्वितीयकण्डिकाया मण्डलस्य वेदत्रयरूपत्वमुदित्य रूपान्तरमुदित्य अथ पुरुषस्योद्देशत्वं तथापि प्रथमकण्डिकोक्तक्रमसंगत्या होमाद्यन्वयेन "अर्थक्रमो बलवान् पाठक्रमात्" । य एष एतस्मिन्मण्डले पुरुषोऽभिमानी वर्तते । स एष एव मृत्युः । एतत्कारणं आद्यकण्डिकोक्तान्वादाम मण्डलं निवर्तते मृत्युश्च च द्वौ क्रियते । ननु—अयमर्चिरामूर्तिर्मृत्युरन्यः कथमत्र सूर्यो मृत्युरस्ति श्रुतिर्वदतीति चेत्; मैवं ब्रह्मोपासनक्रमात्सूर्यविशुपासनपूर्वकपरिवत्सरादेव कालादिरूपेणाभ्यावर्तमानः प्राणिनां पुरुषायूंषि क्षपयति तस्मात्सूर्यो मृत्युरिति नास्ति विरोधः । अर्चिषो रूपान्तरमुदाहरति—अथेति । अथ मंडलवर्तिनो मृत्युत्वोद्देशादूर्ध्वं ' यदेतदर्चिर्दीप्यते ' ' तदर्चिरमृतम् ' । अर्चिषि अमृतबुद्धिः कर्तव्येति यावत् । मृत्युशब्दस्य मारयतीत्यर्थात्, म्रियते वा स्वयमिति, निरुक्तिद्वयमस्ति । तत्र द्वितीयामादाय सूर्यस्यानित्यत्वमाशंक्य परिहरति—' तस्मादिति ' हि यस्मात् अमृते अर्चिषि अन्तः सूर्यो वर्तते इति शेषः । तस्मान्मृत्युः सूर्यो न म्रियते । नहि अमृतमध्यवर्तिनो मृतिरस्ति अमृतवीर्यस्याबाधप्रसङ्गात् । ननु—अर्चिर्नाम सूर्यरश्मिप्रकाशकप्रतिबिम्बः, तथा सति कथं स तत्र वर्तते इत्युच्यते । सत्यं, लोके कुत्रचित् स्थापितस्य मणेः प्रभा परितः प्रसरति यदा तदा मणिः प्रभायामध्यवर्तीव प्रतिभाति । तथा अयमर्चिष्मान् सूर्यः अर्चिर्वर्तीव, इति भाव. । ननु—मंडलमेवोपलभामहे ननु ततो व्यतिरिक्तं पुरुषं इत्यत आह—तस्माद्उ—इति । इतिशब्दोऽनुविधेयः । हि यस्मात् अमृते अर्चिषि अंतरस्ति मायान्तर्वा तस्मादस्माभिर्न दृश्यते । नहि केनचिदाच्छादितं वस्तु दृश्यमानं लोकैः । अतएव सर्वज्ञान् तस्मात् सूर्यं मृत्युत्वं अर्चिषि अमृतत्वं सूर्ये नित्यत्वं च, ध्यातव्यमिति भावः ॥ ३ ॥

दर्शितकण्डिकोक्तेऽर्थे प्रमाणत्वेन मन्त्रमुदाहरति—तदेष श्लोक इति । तदित्यस्य तत् तस्मिन् दर्शितकण्डि-

ह्येतन्मृत्योरमृतं मृत्यावमृतमाहितमित्येतस्मिन्हि पुरुषऽएतन्मण्डलं प्रतिष्ठितं तपति मृत्युर्विवस्वन्तं वस्तऽ इत्यसौ वाऽआदित्यो विवस्वानेष ह्यहोरात्रे विवस्ते तमेष वस्ते सर्वतो ह्येनेन परिवृतो मृत्योरात्मा विवस्वतीत्येतस्मिन्हि मण्डलऽएतस्य पुरुषस्यात्मैतदेष श्लोको भवति ॥ ४ ॥

अमृतमाहितम् "-इति । एतस्मिन् हि पुरुष एतन्मण्डलं प्रतिष्ठितं तपति । मृत्युर्विवस्वन्तं वस्ते " इति । असौ वा आदित्यो विवस्वान्, एष ह्यहोरात्रे विवस्ते । तमेष वस्ते सर्वतो ह्येनेन परिवृतः । " मृत्योरात्मा विवस्वति " इति । एतस्मिन् हि मण्डल एतस्य पुरुषस्यात्मा । तदेष श्लोको भवति ॥ ४ ॥

मन्त्र पादबद्धत्वसाम्यात् । मन्त्रपाठस्त्वेवम्-' अन्तरं मृत्योरमृतं, ' 'मृत्यावमृतमाहितं,' 'मृत्युर्विवस्वन्तं वस्ते,' ' मृत्योरात्मा विवस्वति ' इति । अयमर्थः -मृत्यो पुरुषस्यामृतमर्चिरन्तरं व्यवधायकम् । अमृतमध्यवर्तित्वात्पुरुषस्येतरैर्जीवैरदर्शनात् अमृतमेव तस्यान्तरमित्युक्तम् । मृत्यौ पुरुषे अमृतं अमृतरूपार्चिरधिकरणं मण्डलम् , 'अन्तरम्' अवरं तदपेक्षयाऽधरत्वात् । 'आहितं 'प्रतिष्ठितम् । 'विवस्वन्तम्' 'अहोरात्रे' विवासयति-इदमहरेषा रात्रिरिति विभजति-पुनः पुनः करोतीति वा ' विवस्वान् ' आदित्यमण्डलमित्यर्थः । तं ' मृत्युः ' 'वस्ते' आच्छादयति-'सर्वतः ' स्वतेजसा परिवृणोति । 'मृत्योः ' पुरुषस्य, 'आत्मा विवस्वति' मण्डले प्रकाशत इति । अत्र वेदान्तिनो ' मण्डलस्थः पुरुष ईश्वर इति ' मण्डलं केवलं न तपति, किन्तु तन्मध्यवर्तिनी पुरुषतेजसीति प्रतिपादयन्ति । ईश्वरस्य च मृत्युरूपत्वम्, "अन्तस्तद्धर्मोपदेशात् '-( वे. सू.१।१।६२।२ ) ' ज्योतिषि भावाच्च"-(वे. सू.१।३।९।३२ ) " अत्ता चराचरग्रहणात् '-( वे सू. १।२।२।९ ) इत्येतैरधिकरणै । अत्रापि तन्मतानुसारेण मण्डलवर्तिनः पुरुषस्य मृत्युरूपत्वम् । मण्डलं च तत्राधिष्ठितं तस्य च मण्डलमेव प्रतीतिस्थानत्वेन प्रतिष्ठा-इति । पूर्वमुक्तं मन्त्रं प्रतिपादमनूद्य व्याचष्टे-अन्तरं मृत्योरमृतमित्यवरं ह्येतन्मृत्योरमृतमि-

कर्षे एष वक्ष्यमाणः श्लोको मन्त्रः प्रमाणं भवति । " श्लोको यशसि मन्त्रे च "-( २ । ३ । २ । ) इत्यमरः । ननु-मन्त्रब्राह्मणयोरुभयोरपि अपौरुषेयत्वाविशेषात् कथं ब्राह्मणेन मन्त्रः प्रमाणत्वेनोदाह्रियत इति चेत्, आकर्णय-उपदिशामि वेदपुरुषगर्भस्थं रहस्यं यद्यपि मन्त्रब्राह्मणे उभे परमात्मनः निःश्वसिते अनादिनी तथापि अस्ति कश्चिद्विशेषः -मन्त्रो मूलं ब्राह्मणं व्याख्यानं मन्त्रार्थप्रकाशकत्वात् । मन्त्रविनियोजकमपि कल्पसूत्रं मन्त्रविनियोगस्य ब्राह्मणेन प्रदर्शितत्वात् । तर्हि किं कल्पसूत्रैरिति चेत् न विनियोगस्फुटत्वस्य प्रयोजनत्वात् । तथाच सति मन्त्रब्राह्मणयोर्मूलमूलित्वात् मूलिनमपेक्ष्य मूलस्य प्राबल्यं भवति निर्धाय मूलिना मूलं प्रमाणत्वेन लिख्यते । एवमेव लोकव्यवहारस्य शिष्टगीयत्वात् । इयमेव समस्तशाखासु ब्राह्मणग्रन्थेषु मन्त्रोदाहरणानि बहुलमुपलभ्यन्ते । केचित्तु मन्त्रब्राह्मणाभ्यामनुपात्तो व्यतिरेकोऽर्थो दृढीभवतीति सङ्गिरन्ते । तर्हि सर्वशाखासहिता-

१-अमरकणनु-" यश यासि च अ क ' इति पाठोऽस्ति । वस्तुत यश श्लोक मन्त्र इत्युच्यन्त इति भाव- ।

२१००

(भ) अथाधियज्ञम् । यदेतन्मण्डलं तपत्ययᳪं स रुक्मोऽथ यदेतद्-र्चिर्दीप्यत ऽइदं तत्पुष्करपर्णमापो ह्येता ऽआपः पुष्करपर्णमथ यऽ

---

अथाधियज्ञम्-यदेतन्मण्डलं तपति-अयं स रुक्मः । अथ यदेतदर्चिर्दीप्यते-इदं तत्पुष्करप-र्णम् । आपो ह्येताः । आपः पुष्करपर्णम् । अथ य एष एतस्मिन्मण्डले पुरुषः-अयमेव स योऽयं

---

अधियज्ञं वक्तुं प्रतिजानीते-अथाधियज्ञमिति । अत्र रुक्मपुष्करपर्णहिरण्मयपुरुषाणां मण्डलार्चिःपुरु

---

विकथयितव्यम् । परशब्देन पित्राचार्यस्वात्मव्यतिरिक्तास्त्रिवर्णिका उच्यन्ते तेभ्यो न शंसेत् । पित्रे आचार्याय स्वात्मने च शंसितव्यम् । तथा च ऋग्वेदारण्यके प्रतिप्रसवः श्रूयते-" तस्मादेव विद्वान् परस्मा अग्निं चिन्वानाय परस्मै महाव्रतेन स्तुवीत न परस्मा एतदहः शंसेत्काम पित्रे वाऽऽचार्याय वा शंसेदात्मन एवास्य तत्कृतं भवति " ( ऐ. आ. ३ । २ । ४ । १० ) इति । उपासकाभिप्रायमाह । नेदेताम् इति । न इत् एताम् इति पदच्छेदः । इत् इवार्थे । अहमुपासक एतां मण्डललक्षणां परमपुरुषप्रतिष्ठां न, छिनदै न छेदं करवै इति मनसि निधाय परस्मै न शंसेदेव इति पूर्वेणान्वयः । निषेधमुखेन प्रोक्तमर्थं विधिमुखेन प्रदर्शयति । एताꣳ हेति । य उपासकः कर्मकरः सन् महदुक्थं परस्मै शंसति स एतां प्रतिष्ठां छिन्ते ह छेदं कुर्यादित्यर्थः । तथाचोपासनीयः पुरुषः उपासकदृष्ट्या निष्प्रतिष्ठः सन् नोपकुर्वीतेति भावः । यस्मादेव तस्माद्याज्ञिका उक्थं शंसतीति उक्थशंसः, तं-कथशंसं शंसेः क्विप् पचादिर्वा । उक्थशासनकर्तारं होतारं ' भूयिष्ठम् ' अधिकतरं अध्वर्युप्रभृतिभ्यः ' परिचक्षते ' परितः कथयति । ' बहोर्लोपो भू च बहोः ' ( पा. सू. ६।४।१५८ ) इति इष्ठनि परे भू आदेशः । किंच याज्ञिका मिथो वदति । यदि वयमादित्योपासितारमृत्विक्त्वेन वृण्महे, सोऽपि दक्षिणावशेन वृतो भविष्यत् । तदा प्रतिष्ठां छिनत्तीति प्रतिष्ठाछिद्भवति । इदमस्माकमपि हानिकरमेव । तस्मात्प्रतिष्ठाछिन्नो भवतु न भवतु । इति हृदि निधाय याजुका अपि उपासितारं न वृणुयुः । ' हि ' एव । उक्थस्वरूपं ऋग्वेदे बहुधा प्रसिद्धम् । उक्थस्यैव शस्त्रस्य निष्कैवल्यमिति नाम । एतदेवोक्थं बहुधा उपासितव्यत्वेन बह्वृचब्राह्मणे तैत्तिरीयारण्यके । ( ऐ. आ. २ । ३ । ४ । १६ इत्यत्र सायनभाष्ये ) प्रपञ्चितम्, तेषां ब्राह्मणं तु पक्षित्वेन विस्तृतम्, तथाहि-' इन्द्रमिद्गाथिन ' इत्यादि मन्त्रजालं उक्थलक्षणपक्षिणः शिरः । ' अभि त्वा शूर नो नुमः ' इत्यादि दक्षिण पक्षः । ' त्वामिद्धि हवामहे ' इत्यादि उत्तर पक्षः । ' इमा नु कं भुवनानाम् ' इत्यादि पुच्छम् । ' तदिदास ' इत्यादि मध्यमशरीरम् । ' महाँ इन्द्रो य ओजसा ' इत्यादि गायत्री तृचाशीतिः ' विष्णोर्नुकम् ' इत्यादि बृहती तृचाशीतिः ' योऽपि यऽइन्द्रसोमपातम ' इत्यादि उष्णिगशीतिः आहृत्य निष्को ऽशीतय शस्त्रपक्षिणो अन्नम् । एवमादिर्महान्प्रपञ्चो उक्थशस्त्रस्य ऋग्वेदग्रन्थे परिशीलनीयः । बृहदारण्यके तु-" उक्थं प्राणो वा उक्थं प्राणो हीदं सर्वमुत्थापयति " ( बृ. उ ५ । १३ । १ ) इत्युक्तम् । यद्वा । उक्थशब्देन क्रतुविशेष उच्यते-' अग्निष्टोम अत्यग्निष्टोम उक्थ ' इत्यादिना सोमसंस्थासु पाठात् । तथाच प्रकृतब्राह्मणे तद्धित-पल्लोपश्छांदसः । अथेदानीं प्रकारान्तरेण कथितकथ्यमानोपासनाविभागं प्रतिजानीते-' इत्यधिदैवतमिति ' देवतामधिकृत्य प्रवृत्तमुपासनमधिदैवतमिति पूर्वोक्तरीत्यासप्रपञ्चं निरूपितमिति शेषः ॥ १ ॥

पूर्वोक्तमेवोपासनं विधान्तरेण प्रतिजानीते-अथाधियज्ञमिति । अथ अधिदैवतोपासनानन्तरं यज्ञमधिकृत्य

एषु ऽएतुस्मिन्मुण्डले पुरुषोऽयुमेव सु योऽयुछं हिरण्मुयः पुरुषस्तदे-
तुदेवैतुत्त्रयुछं सछंस्कृत्येहोपधत्ते तुद्यज्ञस्यैवानु सछंस्थामूर्ध्वमुत्क्रामति
तुदेतमुप्येति युऽएष तुपति तुस्मादग्निं नाद्रियेत परिहन्तुममुत्र ह्येषु
तदा भवतीत्युऽएवाधियज्ञम् ॥ ६ ॥

हिरण्मयः पुरुषः । तदेतदेवैतत्त्रयं संस्कृत्येहोपधत्ते । तद् यज्ञस्यैवानु संस्थामूर्ध्वमुत्क्रामति । तदेतमप्येति—य एष तपति । तस्मादग्निं नाद्रियेत परिहन्तुम् । अमुत्र ह्येष तदा भवतीत्यु एवाधियज्ञम् ॥ ६ ॥

आत्मनोपासनमित्यधियज्ञवाक्यस्य तात्पर्यम् । अक्षरार्थस्तु—' यत् ' ' मण्डलं तपति ' ' अयम् ' अत्रोपहितो रुक्मः ' यत् ' ' अर्चिर्दीप्यते ' तत् रुक्मपुरुषयोरधस्तादुपहितं ' पुष्करपर्णम् ' । कथमर्चिषः पुष्करपर्णात्मत्वं तत्राह—आपो ह्येता आपः पुष्करपर्णमिति । आर्चिषो ह्यापः, सूर्यकिरणानामेव वृष्टिकर्तृत्वात्, कार्यकारणयोरभेदेन अर्चिरेव आप इत्युक्तम् । पुष्करपर्णमपि अप्सु उत्पन्नत्वात्तदात्मकमित्यर्थः । मण्डलमध्यवर्ती पुरुष एवात्रोपहितो हिरण्मयः पुरुषः । एवमेतत् रुक्मादित्रयं मण्डलाद्यात्मना ' संस्कृत्य ' भावयित्वा इहाग्नावुपधत्ते । तदा यज्ञस्य सर्वां समाप्तिम् ' अनु ' ऊर्ध्वम् ' उत्क्रामति '—उत्क्रामन् यजमानः ' एतं ' मण्डलादिरूपेण त्रिविधमादित्यम् ' अप्येति ' प्राप्नोति । ' य एष तपति ' । अत्र कश्चिद्धर्ममाह—तस्मादग्निं नाद्रियेत परिहन्तुममुत्र ह्येष तदा भवतीति । यतोऽस्मिन्नग्निं चितवान् परत्रादित्यो भवति—अतः ' अग्निं ' ' परिहन्तु ' ' नाद्रियेत '—चितमग्निमिष्टकाविशेषेण नाशयितुमादरं न कुर्यात् । कुतः एषोऽग्निरमुत्र भवति परलोके यजमानशरीरात्मनोत्पद्यत इति । यद्वा परिहन्तु प्रातु स्प्रष्टुमित्यर्थः । चित्याग्निस्पर्शने दोषश्रवणात् । एवमधियज्ञमर्थो व्याख्यातः ॥ ६ ॥

प्रवर्तिष्यमाणमुपासनमधियज्ञं निरूपयिष्यत इति शेषः[1] । अस्ति कश्चित् चयनक्रतौ सम्प्रदायः । यदा इष्टका उपधीयन्ते तदा पूर्वं यजनैः संस्कारैर्भूमिं शोधयित्वा शोधितभूमौ माषत्रयपरिमाणं सुवर्णं निक्षिप्य तदुपरि पद्मिनीपत्रं संस्थाप्य अद्भिः प्रोक्ष्य तदुपरि सौवर्णीं पुरुषाकृतिमावाह्य अथ इष्टका उपधीयते । ततो अग्निप्रतिष्ठेति । तदेतत्सर्वं मण्डलादौ उपास्यते उपासनाय यदेतन्मंडलमिति । एतत् प्रत्यक्षं यन्मंडलं तपति । तत् सोऽयं रुक्मश्चयनयागीयः । मंडले रुक्मदृष्टिः कार्या अपरिपतिसाम्यात् । अथ तद्दृष्टयनंतरं यदेतदर्चिर्दीप्यते तदिदं पुष्करपर्णं चायनपद्मिनीपत्रम् । तत्र तद्दृष्टिः क्रियतां उपरितनसाम्यात् । हिरण्मयो निशादानपर्यायः । तद्दृष्टयनंतरं एताः सूर्यमंडलस्थाः आपः पुष्करपर्णरूपेण पुष्करपर्णे प्रोक्षणनिमित्तेन स्थिता आपः, तत्र तद्दृष्टिः कार्या ' अथ ' तद्दृष्टयनंतरं ' य एष एतस्मिन्मंडले पुरुषः '—अयमेव सः ' कः ' योऽयं हिरण्मयः, चायनः पुरुषः, तत्र तद्दृष्टिः क्रियतां सर्वशरीरसाम्यात् । ' तदेतदेवैतत्त्रयं ' रुक्मपुष्करपर्णस्वरूपं संस्कृत्य इह एतत्त्रियपोरारि सुवर्णमयसर्वावयवं परमपुरुषोऽस्मीत्युपासीत इति भावः । अथर्ववेदमुपासनयज्ञमधिकृत्य प्रवचं इत्यवोचाम । सूर्यमंडले आपः सन्तीति सर्ववेदप्रवादोयः । तथा च तैत्तिरीयका आमनन्ति—' यानिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति ( तै. आ. ४ अ. अनु. ) इति । स्मृतिरपि—

१—एतत्सम्पादकलेखनीो ग्रन्थस्तुत्येन ' हिरण्मयः ' इति पाठः । एवमेतदपि ।

(स) अथाध्यात्मम् । यदेतन्मण्डलं तपति य एवैष रुक्मः ऽइदं तच्छुक्लमक्षन्नथ यदेतदर्चिर्दीप्यते यदेवैतत्पुष्करपर्णमिदं तत्कृष्णमक्षन्नथ य ऽएष ऽएतस्मिन्मण्डले पुरुषो य ऽएवैष हिरण्मयः पुरुषोऽयमेव स योऽयं दक्षिणेऽक्षन्पुरुषः ॥ ७ ॥

---

अथाध्यात्मम् यदेतन्मण्डलं तपति, यश्चैव रुक्मः-इदं तच्छुक्लमक्षन् । अथ यदेतदर्चिर्दीप्यते, यश्चैतत्पुष्करपर्णम्-इदं तत्कृष्णमक्षन् । अथ य एष एतस्मिन्मण्डले पुरुषः, यश्चैव हिरण्मयः पुरुषः । अयमेव स योऽयं दक्षिणेऽक्षन्पुरुषः ॥ ७ ॥

---

'अथाध्यात्मम्' प्रदर्श्यते इतिशेषः । अत्राय विशेषः—मण्डलादित्रयस्याधियज्ञिकरुक्मपुष्करपर्णहिरण्मयपुरुषत्रयस्य च दक्षिणाक्षिगतशुक्लकृष्णवर्णद्वयतदन्तर्वर्तिपुरुषेषु तादात्म्येनोपासनमिति । अक्षन्निति । अक्षिशब्दात् । "अस्थिदधि" (पा, सू ७ । १ । ७५)—इत्यादिना अनङ् 'सुपां सुलुक्'—(पा सू, ७ । १ । ३९) इति सप्तम्या लुक् । एवं मण्डलादित्रयस्य लोचनगतशुक्लादित्रयस्य च तादात्म्येन ध्यानमुक्तम् । पुरुषस्य च द्वे चक्षुषी—तत्र यथा दक्षिणे तथा सव्यलोचनेऽपि पुरुषो दृश्यते ॥ ७ ॥

---

'आदित्याज्जायते वृष्टिः' (म. स्मृ ३ । ७६) इति । यदि मडलं निर्जलमभविष्यत् तर्हि कथमवर्षिष्यदादित्यः । हिरण्मय इति वक्तव्ये 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि' (पा. सू. ६ । ४ । १७५) इति निपातनान्मयडादिलुप्तिः । यस्मादेवं तस्मात्तन्मडलार्चिरुदकपुरुषाणां चतुष्क यज्ञस्य चयनाद्यस्य सर्वा स्थितिः अनु पश्चात् चयनयागीयरुक्मादुपमितः सन् ऊर्ध्वं नभोमडलोपरि उत्क्रामति निर्गच्छति स्म इति एवकारेणावधार्यते । तत्तस्मात्कारणात् तं आदित्यपुरुषं उपासकः अप्येति प्राप्नोति इति फलनिरूपणम् । एतं ह य एष तपति तमित्यन्वयः । यस्मादेवं तस्मान्मडलादौ चयनीयपदार्थदृष्ट्युपासको अग्निं नाद्रियेत चयनादिकर्मसु न श्रद्धां बध्नीयादिति भावः । तत्र हेतुमाह—परिहृतमिति । हि यस्मात् एष उपासको यदा आदित्यमुपास्ते तदा 'अमुत्र' परलोके आदित्यमडले इति यावत् 'भवति' वर्तते । किमर्थं 'परिहृत' परितो गतः सूर्यैकभावेन गतः । हृतिरत्र गत्यर्थः, गतिः प्राप्त्यर्थः । इत्थं खलु मर्यादा यो यदुपास्ते स तदात्मा सन्नप्येति । तथा च सति आदित्योपासक, 'अमुत्र भवतीति' श्रुत्या उक्तम् । उक्तमर्थमुपसंहरति—इत्यु एवाधियज्ञमिति । पूर्वोक्तरीत्या अधियज्ञमेवोपासनं प्रपंचितं नान्यत् । उनिपातः प्रकरणविभागप्रयोजनः ॥ ६ ॥

प्रकारांतरेण उपासनांतरं प्रतिजानीते—अथाध्यात्ममिति । अथाधियज्ञोत्तरं आत्मानं शरीरमधिकृत्य प्रवृत्तमुपासनं अध्यात्मं कथयिष्यत इति शेषः । दक्षिणेऽक्षन्निति । कण्डिकांते पाठात् मध्यमध्येऽपि दक्षिणपदं विशेषणीयम् । दक्षिणे अक्षन् अक्षिणि । विभक्तेर्लोपः । 'तच्छुक्ल'ं धवलभागः तदिदं शुक्लं रुक्मं मडलवर्ती पुरुष एव । य एष यागीयरुक्मदृष्टांतः तद्दृष्टिं दक्षिणनेत्रस्यशुक्लं कुर्यात् । यदेतं मडलं तपति तद्दृष्टिं च दक्षिणनेत्रे कुर्यात् । रुक्माकारं मडलं शुक्लाकारं नयनं इत्युपमानात् । अपेक्षभावनादूर्ध्वं दक्षिणेऽक्षन्नक्षिणि 'तच्छुक्ल' शुक्लभागमध्यस्थं तदिदं तत्पुष्करपर्णं यागीयं रुक्मोपरिस्थं यत् तत्र तद्भावनां कुर्यात् । 'यदेतदर्चिर्दीप्यते' तद्दक्षिणनेत्रमिति भावयेत् आधाराधेयभावसाम्यात् उपरितनसाम्याच्च । शुक्लोपरि कृष्णं रुक्मोपरि पर्णमिति भावः ।

यत्पत्नी " (तै. सं. ६।१।८)—इति तैत्तिरीयश्रुतेः । यतोऽहंमत सव्याक्षिपुरुषो नातिरिक्त इत्यर्थः । 'यदा' आत्मा 'मिथुनेन' युक्त 'तदा' 'सर्व' 'कृत्स्न' सम्पूर्णं । पुरुषद्वय मिथुनात्मना स्तौति—तद्यत्ते द्वे भवत इति । 'यत्' यदा 'ते द्वे' 'भवत' तदा 'कृत्स्नताये' पूर्णत्वाय द्वे इति व्यक्त्यपेक्ष नपुंसकलिङ्गत्वम् । यत पुरुषयो 'द्वन्द्व' यत सूर्याग्निके 'लोकपृणे' 'द्वे द्वे' 'उपधीयेते' " मिथुन लोकपृणासु मन्त्रो दश सु च द्वयोर्वा दशस्वेकस्यां च " (का. श्रौ. सू. १७।१७) इति लोकम्पृणोपधानप्रस्तावे सूत्रम् । अष्टमकाण्डे लोकम्पृणाप्रस्तावे द्वादश उपधानमुक्तम् । अथ तत्र या द्वितीया 'मिथुन' तत् 'अर्धमु हैतदात्मनो यन्मिथुनं' " स यस्यां सक्त्या प्रथमे उपदधाति ततो दशभिर्दशभि सञ्चादयति" ( श. प. ८।७।२।१२) इति । द्वित्वमेवमन्यत्रापि दर्शयति—तस्माद् द्वाभ्यामिति । तस्मादेव द्वाभ्यां द्वाभ्यां यजुष्मतीलोकम्पृणाभ्यां 'चितिं' 'प्रणयन्ति' ॥ ८ ॥

---

" स यश्चायं पुरुषे यश्चासावादित्ये स एक " ( तै. उ. भ. व. २ । ८ ) इति । द्युलोकादित्ययोर्मिथुनत्व सप्तान्नब्राह्मणे प्रमाणित—" तावती द्यौस्तावानसावादित्यस्तौ मिथुनं समैतां तत प्राणोऽजायत " ( बृ. उ. १ । ५ । १२ ) इति । एतत्प्राक्तनकण्डिकोक्तमध्यात्माधिदैवतभेदाभाव स्थूणानिखननन्यायेन प्रबलयति । तस्येति । 'योऽयं सव्ये अक्षन्' अक्षिणि पुरुषो वर्तते । तस्यैव 'एतन्मिथुन' मिथुनत्वनिरूपणमिति भाव । सव्य दक्षिणमिति सव्यापसव्यप्रकरणे दर्शनात् । स्त्रीपुंसयोरन्योन्यात्मकत्व स्फोतयति । 'अर्द्धमुह' इति यन्मिथुनमस्ति 'एतदात्मन' आत्मन परस्परस्यार्द्ध । उ ह निपाताभ्यां प्रसिद्धि प्रकाश्यते । तथाच बृहदारण्यकम्—" तस्मादिदमर्द्ध बृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाश स्त्रिया पूर्यते " ( बृ. उ. १ । ४ । ३ ) इति स्थलान्तरेऽपि । "अर्द्धो वा एष आत्मनो यत्पत्नी" ( तै. स. ६ । १ । ८ ) इति । इत्थ उपतिभ्यां द्युलोकद्युमणिभ्यां जगदुत्पत्तिमाचष्टे । यदेति । यदा यस्मिन् काले मिथुनेन " व्यत्ययो बहुलम् " ( पा. सू. ३ । १ । ८५ ) इत्यनुशासनात् । मिथुन प्राक्कथित सह एकीभावेन मिलति । वै वाक्यालङ्कारे । अथ तदानीं सर्वश्चतुर्दशभुवनसमूह गगनादिभूतसमूहो वा जायते । अथ लोकजनेरूर्ध्वं 'कृत्स्न' सुरासुरदिपशुमनुष्यपक्षिसर्पादिसमूह समभवदिति शेष । लोकसृष्ट्यनन्तर प्राणिसृष्टि बृहदारण्यके प्रमाणीकृता—" आत्मा वा इदमेक एवाग्र आसीत् " ( बृ. उ. १ । ४ । १ । ) इत्यादिना । लोकोत्पत्ति भावयित्वा—"स ईक्षते मेऽनु लोकाश्च लोकपालान्नमेभ्य सृजा इति" ( ऐ. आ. २।४।२१) इति लोकपालाद्युत्पत्तेस्तत्र भाषितत्वात् । पञ्चभूतोत्पत्तेरनन्तर प्राण्युत्पत्ति तित्तिरी रोरवीति—" आत्मन आकाश सम्भूत "( तै. उ. भ. व १ ) इत्यादिना भूतसर्गं समाप्य " ओषधिभ्योऽन्न अन्नात्पुरुष " ( तै. उ. भ. व. १ ) इत्यादिना पुरुषोपलक्षितप्राणिमात्रसर्गसमाषणात् । यथा द्युलोकद्युमणी मिथुनीभूय कृत्स्न जनयत । तथा लोकेऽपीत्याह—कृत्स्नतायै इति । 'तत् यत्' तत् व्यत्ययेन तौ द्वौ कृत्स्नतायै स्वार्थे तल् । कृत्स्नाय कृत्स्नसर्गायेत्यर्थ । द्वद्व भवत । हि एव सत् तस्मात् लोकेऽपि प्राणिमात्र सत् प्रजनयतीति । प्रजननमुत्पादनसमर्थं भवति । न एकैकश । तदेतत् सर्व पुरुषविधब्राह्मणे ( बृ. उ. १ । ४ ) आलोचनीयम् । यस्मादित्थ तस्मात् चयनेऽपि 'द्वे द्वे' इष्टके उपधीयेते अ वयुंगा । कथभूते इष्टके 'लोकपृणे' व्युत्पत्ति प्राग्वत् । औत्सर्ग्येण दर्शादावपि द्वद्वशः पात्रासादन इत्यादि बोध्य । 'तस्मात्' तस्मादेव कारणात् 'द्वाभ्या द्वाभ्याम्' इष्टकाभ्यां 'चितिं' चयन कर्तो 'प्रणयति' याज्ञिका निष्पादयति । सर्वथाऽपि द्वद्वमेव कार्यक्षमम् । नैकाकी नैकाकिनी वा इति भाव ॥ ८ ॥

स॒ ए॒ष ए॒वेन्द्रः॑। (इन्द्रो॑) यो॒ऽयं दक्षि॒णेऽक्ष॒न्पुरु॑षो॒ऽथे॒यमि॑न्द्रा॒णी ताभ्यां॑ दे॒वा ए॒तां वि॒धृति॑मकुर्व॒न्नासि॑कां त॒स्माज्जा॒याया॒ऽअन्ते॒ नाश्नी॑या॒द्वी॒र्य्य॑वान्हा॒स्माज्जा॑यते वी॒र्य॑वन्तमु ह॒ सा ज॑नयति य॒स्याऽ अन्ते॒ नाश्ना॑ति ॥ ९ ॥

त॒दे॒तद्दे॑वव्र॒तम्। (ब्रु॒) रा॒ज॒न्यब॑न्धवो मनु॒ष्या॑णामनु॒तमां॑ गो॒पाय॑न्ति त॒स्मादु॑ ते॒षु वी॒र्य॑वाञ्जायते॒ऽमृत॒वाका॑ व॒यसा॒ꣳ सा क्षि॒प्रऽये॒नं॒ जन॑यति १०

स एष एवेन्द्रः-योऽयं दक्षिणेऽक्षन्पुरुषः। अथेयमिन्द्राणी ताभ्यां देवा एतां विधृतिमकुर्वन्-नासिकाम्। तस्माज्जायाया अन्ते नाश्नीयाद्। वीर्यवान्हास्माज्जायते। वीर्यवन्तमु ह सा जनयति-यस्या अन्ते नाश्नाति ॥ ९ ॥

तदेतद्देवव्रतम्। राजन्यबन्धवो मनुष्याणामनुतमां गोपायन्ति। तस्मादु तेषु वीर्यवाञ्जायते। अमृतवाका वयसाम्-सा क्षिप्रऽयेनं जनयति ॥ १० ॥

यदुक्तमक्षिद्वये पुरुषद्वन्द्वं मिथुनमिति तदेव स्त्रीपुंलिङ्गेन्द्रेन्द्राणीशब्दाभ्यां विशदयति-स एष एवेन्द्र इति। दक्षिणाक्षिपुरुष इन्द्र इत्युच्यते। सव्याक्षिपुरुष इन्द्राणीत्युच्यते। इन्द्रस्य स्त्री इन्द्राणी। "इन्द्रवरुणभव०", (पा. सू. ४।१।४९) इत्यादिना ङीषानुकौ। 'ताभ्यां' स्त्रीपुंसाभ्यामिन्द्राणीन्द्राभ्यामर्थे 'एतां' 'नासिकां' 'विधृतिं' व्यवधायकत्वलक्षणस्थानं नाम 'अकुर्वन्' यत स्त्रीपुरुषयोर्मध्ये 'देवा' 'विधृतिं' कृतवन्तः। अत 'जायाया अन्ते नाश्नीयात्'-स्त्रिया समीपे स्त्रियं पश्यन् भोजनं न कुर्यादित्यर्थः। स्त्रीसमीपे भोजनाकरणस्य फलं दर्शयति वीर्यवान्हास्मादिति। अस्मात् स्त्रीसमीपे भोजनमकुर्वतो 'वीर्यवान्' सुतो जायते। यस्याः समीपे न भुङ्क्ते 'सा उ ह' साऽपि 'वीर्यवन्तम्' उत्पादयति ॥ ९ ॥

एतद् व्रतमनुतिष्ठता वीर्यवत्पुत्रोत्पत्तिर्भवतीत्याह-तदेतद्देवव्रतं राजन्यबन्धव इति। यदुक्तं 'जायाया

अक्ष्णोः विधान्तरेण मिथुनत्वं कल्पयन्ने-स एष इति। 'यो अयं दक्षिणे अक्षन्' अक्षिणि 'पुरुष' अस्ति। 'स एष एवेन्द्र' 'परमैश्वर्यमण्डलपुरुषाभिन्नवान्।' 'अथ' अनन्तरं 'इयं' वामाक्षिनिष्ठकनीनिका 'इन्द्राणी' अनुपदमुक्ता इन्द्रपत्नी। एतयोर्नामद्वयम् बृहदारण्यके-"इन्धो ह वै नाम"-(बृ. उ. ४।२।२) इति। द्वितीयकण्डिकायां सव्यनेत्रस्यस्येन्द्रत्वं स्पष्टं च "अथैतद्वामेऽक्षिणि पुरुषरूपमेषाऽस्य पत्नी"-(बृ. उ. ४।२।३) इति तृतीयकण्डिकायां वामसव्यनेत्रस्थकनीनिकया पत्नीरूपत्वं प्रतिपादितम्। यतोऽनयोर्दाम्पत्यं अत एतयोः यथा दर्शनं नास्ति जातुचिदेव दर्शनम् तथा मर्यादा अपेक्षिता। तामाचष्टे-ताभ्यामिति। 'देवा' इन्द्रादयः। ताभ्यां तादर्थ्ये चतुर्थी। तयोरर्थाय 'एतां' अग्रतोभां 'नासिकां' नयनरोर्मध्ये 'विधृतिं' मर्यादाम् 'अकुर्वन्' चक्रुः। विशेषेण धारयति व्यवस्थापयतीति विधृतिर्मर्यादा। यस्मात् स्त्रीपुंसयोः सर्वदा मर्यादा देवैः कृता 'तस्मात् जायायाः' 'अन्ते' समीपे दृष्टिगोचरे जायायाः भोजनस्थाने वा 'नाश्नीयात्' न भुञ्जीत। यदि 'ह' तर्हि 'अस्मात्' तथा अभोक्तुः सकाशात् 'वीर्यवान्' 'पुत्र' 'जायते'। 'सा' अपि जाया 'वीर्यवन्तम्' आत्मजं 'जनयति' प्रसूते। 'उ ह' निश्चये। सा का? 'यस्या अन्ते नाश्नाति' पतिः। अन्यथा नियमिनो भवतीति व्यतिरेको बोध्यः ॥९॥

अनुपदमुक्तां शिक्षां लोकानुभवेन प्रशंसति-तदेतद्देवव्रतमिति। यद्यपि पचाग्निकाण्डे-"राजन्यबन्धु-

तौ हृदयस्याकाशं प्रत्यवेत्य । मिथुनीभवतस्तौ यदा मिथुनस्यान्तं गच्छतोऽथ हैतत्पुरुषः स्वपिति तद्यथा हैवेदं मानुषस्य मिथुनस्यान्तं गत्वाऽसंविद इव भवत्येवꣳ हैवैतदसंविद इव भवति दैवꣳ ह्येतन्मिथुनं परमो ह्येष आनन्दः ॥ ११ ॥

---

तौ हृदयस्याकाशं प्रत्यवेत्य मिथुनीभवतः । तौ यदा मिथुनस्यान्त गच्छतः अथ । हैतत्पुरुषः

---

अन्त नाश्रीयात् ' इति ' तत् ' इद दवकल्पित व्रतम् ' एतत् ' ' मनुष्याणा ' म ये ' राजन्यबन्धव ' 'अनुतमा गोपायन्ति ' अनुतमाम् अ यर्थं रहस्य व्रत कुर्वन्ति । ' तस्मात् ' ' उ ' तस्मादेव ' तेषु ' ' वीर्यवान् ' पुत्रो जायत ' वयमा ' पक्षिणां मध्ये ' अमृतवाका ' नाम पक्षिजातिरेतद्व्रत गोपायति, अत. ' सा ' ' क्षिप्रश्येन ' शीघ्रगामिन श्येननामक पक्षिण ' जनयति ' ॥ १० ॥

अथेन्द्रेन्द्राणीनाम्नो स्त्रीपुरुषयो सङ्गमस्य स्थान तल्लक्षणानि चाह—तौ हृदयस्याकाशमित्यादिना । स्त्रीपुरुषौ हृदयाकाश दहर प्राप्य ' मिथुनीभवत ' मिथुनकर्म सम्भोग कुरुत इत्यर्थ । ' तौ ' ' यदा ' मैथुन-

---

प्राक्षीत् " ( छा. उ. ५.३.५. ) इति पितर गौतम प्रति श्वेतकेतूक्तौ राजन्यो बधुरस्यासौ राजन्यबधु । न तु स्वय राजन्य इति का दूक्त्या राजन्याधमपरत्वेन परमहंससाम्राज्यधुरंधुरै नारायणेन्द्रसरस्वतीभिर्व्याख्यात, जैवलराजन्यनिन्दाया श्वेतकेतुना अभिप्रेतत्वात् । तथाऽपि प्रकृते राजन्य एव बधुर्यस्येति अवधारणापूर्वपदसमासे स्वभ्य राजन्यतमत्व प्रतिभाति । अन्यथा स्वस्याधमत्व कथमवधारण स्वामिनामुक्तौ अवधारणाभावात् कर्मधारयो वा । बधुत्वमपि सौहार्दादिना बोद्धव्यम् । ननु एवप्रयासे को हेतुरिति चेत् निदाघा अभाव । तेषु वीर्यवान् जायत इति वीर्यवत्पुत्रलाभश्च हेतुरिति वद्पुम्षानरस्थ जानीहीति दिक् । यदेतदेवैर्निर्मित व्रत देवव्रत जायातेऽनशनादि । तदेतत् 'मनुष्याणा' मध्ये 'राजन्यबधव ' पुष्पवन्तोरन्ववायजयध्वजा । 'अनुतमा' अतितरा 'गोपायति' रक्षति स्म यस्मात् 'तस्मात् उ' एव कारणात् 'तेषु' राजन्यश्रेष्ठेषु पुष्पवद्वंशमणिषु 'वीर्यवान्' पुत्रो 'जायते' । अनुभवसिद्धमेतत् सूर्याचन्द्रमसोरन्ववाये । अपि च 'मृतवाका' मृता वाका वर्णव्यत्ययेन पाका. यस्या सा मृतवाका मृतवध्या । पाका पुत्रा । वर्णव्यत्यय "ऐलबृदा आयुर्युध " इत्यत्र ( वा.म.१६।६० उवट भाष्ये ) ऐलभृत इति भाष्यकारै परोऽक्षवृत्त्या अगीकृत । व्यत्ययसूत्रे ( पा सू. ३।१।८५ ) पतञ्जलिना अपि । ' सा ' मृतवध्या अपि तादृग्व्रतधारिपतिका सती मनुष्यमध्ये वार्यवत पाक ' जनयति । कमिव ' क्षिप्रश्येनम् ' क्षिप्रगामी श्येन क्षिप्रश्येन तमिव । लुप्तोपमानमेतत् । ' वयसा ' पक्षिणा मध्ये यथा श्येन प्रतापप्रभावाभ्यां पक्षिमात्रतिरस्कर्ता । तथा तेज शौर्याभ्यां मनुष्यमात्राभिभवितार पुत्र तादृशभर्तृका मृतवध्याऽपि प्रसूते । इतरा प्रसूत इति वा कथंति भाव ॥ १० ॥

पुनरपि अध्यात्म मिथुनवृत्तान्त कथयति । 'अभिद्रवत कथितप्रायमेव भेदाभावात् इति मन्वानो वेदपुरुष आह—ताविति । " पुमान् स्त्रिया " ( पा. सू. १ । २ । ६७ ) इत्येकशेषसूत्रात्, सा च स च ताविति

---

१—राजहंससरस्वतीभिस्तु 'मृतवाका' इति पद छदमगोहस्य व्याख्यातम् । २—सर्वनन्दय इत्यर्थ । ३—सूर्यचन्द्रवशाभिप्रायः ।

( स्तु ) तस्मादेवंवित्स्वप्यात् । ( लो ) लोकयथ्यँ हैतेऽएव तद्देवते मिथु-
नेन प्रियेण धाम्ना समर्धयति तस्माद् ह स्वपन्तं धुरेव न बोधयेन्नेदेते
देवते मिथुनीभवन्त्यौ हिनसानीति तस्माद् हैतत्सुषुपुषः श्लेष्मणमिव

स्वपिति । तद् यथा हैवेदं मानुषस्य मिथुनस्यान्तं गत्वाऽसंविद इव भवति-एवं हैवैतदसंविद् इव भवति । दैवं ह्येतन्मिथुनम् । परमो ह्येष आनन्दः ॥ ११ ॥

तस्मादेवंवित्स्वप्यात् । लोकयं हैते एव तद्देवते । मिथुनेन प्रियेण धाम्ना समर्धयति । तस्माद् ह स्वपन्तं घुरेव न बोधयेत् । नेदेते देवते मिथुनीभवन्त्यौ हिनसानीति । तस्माद् हैतत् सुषु-

कर्मण 'अन्तम्' अवसानं गच्छति तदानीमेव पुरुष जीवात्मा स्वर्गे लोके मानुषस्य मैथुनस्यान्ते गत्वा असंविद अजानानेव स्त्री भवति । एवं तदा तयोर्मिथुनभावे पुरुष 'असंविद इव भवति' अजानन्निव भवति । "विदि इगुपधलक्षण"-( पा. सू. ३।१।१३५ ) इति क प्रत्यय । 'हि' यत 'एतन्मिथुनम्' इन्द्रे-न्द्राण्योरिन्द्र दैवं दिव्यनिर्मितम्-अनयोर्मिथुनभावे 'परम' 'आनन्द' भवति ॥ ११ ॥

'तस्मात्एव' जानान स्वापेन तयोर्मिथुनकर्म समर्धयति 'परमानन्दयुक्तं करोति । अत्र कश्चिद्धर्ममाह-तस्माद् ह स्वपन्तं धुरेवेति । यत स्त्रीपुंसयोर्मैथुनेन पुरुष स्वपिति तस्मात् स्वापं कुर्वन्त 'घुरेव' पीडयि

सनाम । 'तौ' प्राकथितौ अपत्ये जाग्रदवस्थायां स्वस्थानयो स्थित्वा सुप्तौ 'हृदयस्य' हृदयकमलस्य मध्यमभाग-स्थानकाश । "दहर उत्तरेभ्य" ( ब्र. सू. १।३।५।१।१४-१८ ) इत्यधिकरणद्वयसिद्धदहर-शब्दवाच्यम् 'आकाश' 'प्रत्यवेत्य' सम्प्राप्य 'मिथुनीभवत' । एकदेहाभवत । एकदेहीभूय 'तौ' 'यदा' यस्मिन् काले 'मिथुनस्य' मन्मथधर्मस्य 'अन्त' समाप्ति गच्छतमिति भाव । 'गच्छत' । 'अथ' तदा 'ह' किल । 'एत पुरुष' एष चासौ पुरुषश्च इत्यभेदसनाम । 'स्वपिति' रतिश्रमनिवृत्तये साऽपि स्वपितीति बोध्य । तथाच बृहदारण्यक-"तयोरेष सस्तावो य एषोऽन्तर्हृदय आकाश" ( बृ. उ. ४।२।३ ) इति । 'तत्' तस्मात् यथैव 'ह' किल 'इदं' प्रत्यक्ष 'मानुषस्य मिथुनस्य' व्यत्ययेन मानुषं मिथुनम् । स्त्रीपुंसलक्षण 'अन्त' रतिसमाप्ति 'गत्वा' न विद्यते संवित् व्यवहारज्ञान यस्य तत् इति वक्तव्ये 'आप चैव हलन्ताना' ( पा. सू. २।४।८२ सि. कौ. ) इति न्यायेन आपमगीकृत्य । पुनर्न विद्यते संविदा यस्य मिथुनस्य तत् 'असंविद' । व्यत्ययेन असंविदमिव 'भवति' । एवमेवाह किल 'एतद्दैवं मिथुनं' 'असंविद इव' असंविदमिव भवति । इदमत्राकूतम्-यथा स्त्रीपुंसौ रत्यते श्रान्तौ सन्तौ निद्राणौ भवत न किंचिज्जानत इव । इवशब्देन यत्किंचित् ज्ञानमुच्यते । एवं दैवमिथुन जाग्र-द्व्यवहारकेन्द्राक्षिस्थ सत् सुप्तौ हृदयकोशे लीन सत् निर्विज्ञानमुत्प्रेक्ष्यते । ननु-तथा चेत् दैवमानुषमिथुनयो-को भेद ? इत्यत्राह-दैवमिति । 'हि' यस्मात्, एतन्मिथुन दैवं हि तस्मात् 'एष' मिथुनसमव 'आनन्दोऽपि परम' । एतेन मानुषमिथुनजानन्दस्तुच्छ इत्युक्त भवति ॥ ११ ॥

अथेदानीं दिव्यमिथुनदर्शनविदुपासकस्य कंचिन्नियमविधिं विवक्ते वेद -तस्मादेवंविद् इति । यस्मात्प्रागीरित दहर हृदयाकाशे दम्पती सुप्तावेकीभूय रमेते न जानीत तस्मात् एवंवेत्त्येवंवित् उपासक 'स्वप्यात्' यदपि प्राणि-

सऽ एषऽ एव मृत्युः । (थं) यऽ एषऽ एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषस्तस्य हैतस्य हृदये पादावतिहितौ तौ हैतदाच्छिद्योत्क्रामति स यदोत्क्रामत्यथ हैतत्पुरुषो म्रियते तस्मादु हैतत्प्रेतमाहुराच्छेद्यस्येति ॥ १३ ॥

( त्ये ) एषऽ उऽ एव प्राणः । ( ऽ ) एष हीमाः सर्वाः प्रजाः प्रणयति तस्यैते प्राणाः स्वाः स यदा स्वपित्यथैनमेते प्राणाः स्वाऽअपियन्ति

---

स एष एव मृत्युः-य एष एतस्मिन्मण्डले पुरुषः । यश्चायं दक्षिणेऽक्षन्पुरुषः-तस्य हैतस्य हृदये पादावतिहितौ । तौ हैतदाच्छिद्योत्क्रामति । स यदोत्क्रामति-अथ हैतत् पुरुषो म्रियते । तस्मादु हैतत्प्रेतमाहुः-आच्छेद्यस्येति ॥ १३ ॥

एष उ एव प्राणः, एष हीमाः सर्वाः प्रजाः प्रणयति । तस्यैते प्राणाः स्वाः । स यदा स्वपिति-

---

एवं प्रासङ्गिकं परिसमाप्य मण्डलस्थपुरुषामनोऽमनीतस्य दक्षिणाक्षिपुरुषस्य मृत्युरूपत्वमेवाह-स एष एव मृत्युर्य एष एतस्मिन्मण्डल इति । 'तस्य' एतस्याक्षिपुरुषस्य 'पादौ' 'हृदये' 'अतिहितौ' न्यस्तौ कालितौ भवतः । 'तौ' 'यदा' 'पादौ' 'आच्छिद्योत्क्रामति' पुरुषशरीरात् तदानीमेव पुरुषो म्रियते । यस्मादाच्छिद्य गतस्तस्मादिमं प्रेतमित्याहुः । प्रशब्देऽत्र क्तप्रत्यये रूपं प्रेत इति ॥ १३ ॥

ननु कथमक्षिपुरुषनिर्गमे पुरुषस्य मरणं यत्र प्राण प्रमुत्क्रान्तस्तत्-" तस्मिन्नुत्क्रान्ते " इत्यादिना प्राणनिर्गमादनन्तरमेव शरीरपात इत्याशङ्क्य तस्यैवाक्षिपुरुषस्य प्राणात्मकत्वमाह-एष उ एव प्राण इति ।

---

अथेदानीं सिद्धवन्नोक्तन्यायेन प्रागुक्तं सर्वेन्द्रियं अक्षपुरुषनिर्देशस्या न्विददति-स एव एवेति । अस्यां कण्डिकायां व्यवहितान्वयः । 'य एव एतस्मिन्मण्डले पुरुषः यश्चायं दक्षिणेऽक्षन् पुरुषः' विद्यते स स्थानद्वयस्थो एक एव मृत्युः । तस्यैतस्य पुरुषस्य हृदये एतत् स्थानद्वयस्थस्य 'आच्छिद्य उत्क्रामति' देहवान् पारवश्येन निष्क्रामति । 'स यदा उत्क्रामति' 'अथ' तदा 'एतत् पुरुषः' इत्यत्र 'यत् यदा देहेन वियुज्यते तदा 'अस्य' मृतस्य 'पादौ' अतिहितौ हतौ निश्चेष्टौ 'तौ' प्रसिद्धौ करावपि औचित्यायेन समन्तात्तदा व्याहन्यते । यस्मादेव 'तस्मात्' 'एतत्' प्राणनिर्मुक्तकलेवरं 'प्रेतमाहुः' इति तत्र प्रयोगाभ्यः । 'अस्य' कलेवरं मृत्युना 'आच्छेदि' । विच्छिन्नम् । छिनत्ति यदि आह । उपासकजीवो नियमेनैतदुपासनया मृत्युपाशमतिक्रम्य सन्निहितः सन्नपि पुनरावृत्तिलक्षणं निर्वाणं आदित्यलोके गत्वा प्राप्नोतीति फलावाप्तिप्रदर्शनम् । एतदर्थ एव बहु निरूपणम् ॥ १३ ॥

अधुना आदित्यस्यैव गुणान्तरमुपदिशति-एष इति । 'हि' यस्मात् । 'एष' आदित्यः उदयास्तमयरूपवत् प्राणिनां तत्तत् सर्वाः उद्यद्वृत्तिप्रेरकः 'इमाः प्रजाः प्रणयति' प्रकर्षेण इतोऽन्यत्र...

तस्मात्स्वाप्ययः स्वाप्ययो ह वैतꣳ स्वप्नऽइत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाः ॥ १४ ॥

---

अथैनमेते प्राणाः स्वाः अपियन्ति । तस्मात्स्वाप्ययः । स्वाप्ययो ह वैतं स्वप्न इत्याचक्षते परोऽक्षम् । परोऽक्षकामा हि देवाः ॥ १४ ॥

---

' एष. ' अक्षिपुरुष. ' एव प्राण. ' । निर्वचनमाह–हि यत. ' एष. ' इमाः प्रजाः ' सर्वा. ' ' प्रणयति ' लोकान्तरं प्रापयति ' तस्मात् ' एष एव प्राणः । तस्याक्षिपुरुषस्य प्राणरूपस्य ' एते ' ' प्राणा. ' प्राणाद्यात्मकाः चक्षुरादय. पञ्च प्राणा. ' स्वा. ' ज्ञातय. प्राणत्वेन समानजातीया इत्यर्थः । ' स ' अक्षिपुरुषः ' यदा ' ' स्वपिति ' निद्रीयते तदा ' एतम् ' ' एते ' ' स्वाः ' ' प्राणा. ' ' अपियन्ति ' प्राप्नुवन्ति अनुलीयन्त इत्यर्थः । स्वानामप्यय इति ,' स्वाप्यय ' स्वाप्यय ' स्वप्न इत्याचक्षते ' परोऽक्षेण । यतो हि ' परोऽक्ष-कामा. ' ' देवा ' ॥ १४ ॥

---

पैशाचुर्द्धनयति प्रापयति । नयतिर्द्विकर्मा । 'ट' तस्मात् एष आदित्य प्राण एवेति ध्यायेत् । प्र आ इत्यस्मादुप-पदात्. " अन्येष्वपि दृश्यते "–( पा. सू. ३।२।१७ ) इति ड प्रत्यये "रषाभ्यां०"–(पा. सू. ८।४।१।) इति णत्वे च प्राण इति रूपम् । अत एव प्राणिनयनानयनसाम्यात् आदित्ये सर्वेन्द्रियराज मुख्यप्राणदृष्टिं कुर्वीतेति श्रुतेरभिप्रायः । अत एव "प्राणस्तथाऽनुगमात्"(ब्र.सू. १।१।११।२८) इत्यधिकरणसिद्धप्राणशब्द-पर्यालोचने ' तस्यैते प्राणा स्वा. ' इति इन्द्रियसाहचर्यादुपपत्तिः । ज्येष्ठश्रेष्ठत्वाङ्गीकरणेन (छ. उ. ५।१) मुख्यप्राणस्य सकलेन्द्रियप्रमाणात् ज्येष्ठत्वात् श्रेष्ठत्वाच्च पाप्मना मृत्युना अनाहतत्वात् सकलानुपनिषत्सु बहुधा उपास्यत्वेन प्रतीयमानत्वाच्च मुख्य. प्राणः एष आदित्य. इति विज्ञानीयात् । अत एव एते समस्त-प्राणिशरीरस्था. ' प्राणा ' इन्द्रियाणि तस्यादित्यस्य ' स्वाः ' स्वकीया. । अत एव ' स ' आदित्यो मुख्यप्राणात्मा सन् ' यदा स्वपिति ' ' अथ ' तदा एते स्वा ' स्वकीयभूता. ' ' प्राणाः ' इन्द्रि-याणि 'एत' सूर्यं 'अपियन्ति' प्राप्नुवन्ति । मुख्यप्राणरूपे रवौ स्वाप यातं सति सर्वाणीन्द्रियाणि स्वपन्ति इतीदं उक्तं भवति इत्यर्थः । अत्र मान.–इयाहउक्तेः ( बृ. उ. १।३।१।० ) गतेषु इतरेन्द्रियेषु मृत्युग्रस्तेषु सत्सु मुख्य प्राण. " अश्मलोष्ट " न्यायेन मृत्युं विध्वस्य विजयते स्म । त विजयमानं दृष्ट्वा अनेकनामानं मुख्यमपि-कामचारिणं इतरेन्द्रियाणि सेवकत्वमिष्य, तद्रूपता मनुः नद्रूपेण, इदेव तत्त्वेन महीय आपादत् तदनु-सारीणि अभवन् । अथनैवेतिहासो मानतरेण ज्येष्ठत्वाख्यानेऽपि विदितः । अत्रैव–"ते हेमे प्राणाः अह श्रेयसे विव दमाना ब्रह्म जग्मु " ( बृ. उ. ६।१।८ ) इति दर्शनात् प्राणशब्देन इन्द्रियाण्यपि उच्यते । एवं सति यो अत्र प्राणस्य प्राणना च व्यवहार स सर्वोऽपि प्राणात्मिकत्वेन उपास्यत्वात् आदित्यस्य प्राणनां च उच्यत. । तस्मादेव तस्मात् स्वा प्राणा. अपियन्ति य । ' असौ ' स्वाप्ययो रवि. । पुनरुक्तिः ' ह वा ' निपातौ च आदरार्थौ. । यद्यपि इत्थमस्य आदित्यस्य स्वाप्ययः इति यावत् नाम तथापि ' एत ' त्रिलोकीस्थितं देवोत्तमं ' स्वप्न. ' इति नाम्ना देवा ' परोक्ष ' यथा तथा शब्दज्ञा ' आचक्षते ' । तत्र निदान ' हि ' यस्मात् ' देवा. परोक्षकामा. ' । तथाच श्रुते ( बृ. उ. ४।२।२। ) ' इध. ' इति वक्तव्ये -इन्द्र इत्यवोचि । सर्वेन्द्रियजनिस्थितिविनष्टिहेतुरादित्य इति वेदपुरुषहृदयगतो भावः ॥ १४ ॥

सुऽ एतैः सुप्तः । ( सो ) न कस्य चन वेद न मनसा संकल्पयति न वाचाऽन्नस्य रसं विजानाति न प्राणेन गन्धं विजानाति न चक्षुषा पश्यति न श्रोत्रेण शृणोत्येतᳫँ ह्येते तदाऽपीता भवन्ति सुऽ एषऽ एकः सन्प्रजासु बहुधा व्याविष्टस्तस्मादेका सती लोकम्पृणा सर्वमग्निमनुविभवत्यथ यदेकऽएव तस्मादेका ॥ १९ ॥

---

स एतैः सुप्तो न कस्य चन वेद न मनसा सङ्कल्पयति । न वाचाऽन्नस्य रसं विजानाति । न प्राणेन गन्धं विजानाति । न चक्षुषा पश्यति । न श्रोत्रेण शृणोति । एतं ह्येते तदाऽपीता भवन्ति । स एष एकः सन्प्रजासु बहुधा व्याविष्टः । तस्मादेका सती लोकम्पृणा सर्वमग्निमनुविभवति । अथ यदेक एव । तस्मादेका ॥ १९ ॥

---

तस्मिन् सर्वेषां प्राणानामप्यय विशदयति—स एतैः सुप्तो न कस्य चन वेदेति । निमान्योक्त विवृणोति—न मनसेति । सङ्कल्पो नामाध्यवसाय 'वाचा' रसनया । 'प्राणेन' नासिकया । वस्तुत एतस्यैवाग्निपुरुषस्य नानाप्रजास्वावेशाद्बहुत्वमित्याह—स एष एकः सन् प्रजास्विति । तस्मात् 'लोकम्पृणा' सर्वपुरुषात्मिका वस्तुत आत्मा एकाऽपि सती 'सर्वमग्निमनुविभवति' व्याप्नोति । अथ यत 'एक एव' पुरुषः 'तस्मादेका' लोकम्पृणा ॥ १९ ॥

---

अथ सम्प्रति सर्वप्राणसहिते मुख्यप्राणरूपे स्वौ स्वाप याते सति जीवावस्थामाचष्टे—स एतैरिति । 'स' अग्निरूपः प्राणः 'एतैः' प्राणैः सह यदा 'सुप्तः' तदा जीवो 'न कस्य चन' कर्मणि षष्ठी 'न' किञ्चित् 'वेद' 'न मनसा' धर्ममधर्मं वा 'सङ्कल्पयति' सर्वत्र करणार्थे तृतीया । कर्ता जीवः । वाक्शब्देन रसना लक्ष्यते । वाक्करत्वे रसज्ञानानुपपत्तिर्भ्रमात्वे । एकाधिकरणस्वरूपः शब्दस्तत्रोऽपि विद्यते । वागिन्द्रिय-पदेनैकजिह्वाप्रवर्तितत्वात् । 'वाचा' रसनया 'अन्नस्य' गुडादेश्च 'रसं' मधुरादिं 'न विजानाति' 'प्राणेन' घ्राणेन्द्रियेण 'गन्धं न विजानाति' । तदन्तर्गतं जिघ्रति इत्यर्थः । " प्राणो वै ग्रहः " ( बृ.उ. ३।२।२ ) इति ग्रहातिग्रहवाक्ये प्राणो घ्राणेन्द्रियमिति नारायणेन्द्रसरस्वतीभिर्विवृतम् । 'न चक्षुषा' पीतादिरूपं 'पश्यति' 'न श्रोत्रेण' वर्णध्वनि शब्दं 'शृणोति' तत्र निदानम् । 'हि' यस्मात् 'एते' मनआदिप्राणा उपलब्धिसाधनाः 'तदा' सुप्तौ 'एतं' भास्करम् 'अपीताः' लीनाः 'भवन्ति' । अपिपूर्वं इणोर्गत्यर्थः । गतिः प्राप्तिः । इत्थं महता प्रबन्धेन प्रविष्टमनस्तानिडाण्डं जनितब्रह्माण्डं मार्तण्डं स्तुति । वक्षिरमीषितिनीत तोषूयोगमन्वतेन प्रतिपाद्य च अथ इदानीं सर्वेश्वरमुक्तरहस्यमुपदिशति—स एष इति । 'स एष एकः सन्' 'प्रजासु' जरायुजादिचतुर्विधासु 'बहुधा' तत्तन्नेत्रयन्त्र धार धार तत्तद्देश प्राप्य तत्तद्दिशं पाटं पाटं तत्तद्भाव भाव वाद वाद तत्तच्छिरो लेख लेख तत्तत्क्रिया कार कार सुखदुःखान्यनुभवन् सुप्तसुप्ति विदिषन् इत्याद्यन्वि निवसन् ससारीव मुच्यन् शिक्षाशिक्षादिश्च 'व्याविष्टः' प्रविष्टः । तथाच ऋग्वेदः—" अथातो विभूतयोऽस्य पुरुषस्य " ( ऐ. आ. २।१।७ ) इत्यादिना सर्वं जगदिमुरिति दर्शयति—" एक एवाग्र आसीत् " ( ऐ. आ. ४।१।२१ ) इति । " तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभवदिति " ( तै. उ. ब्र. व. ७।६ ) इति च तित्तिरिः । छान्दोग्यम्—' सर्वं खल्विदं ब्रह्म ' ( छा. उ. ३।१४।१ ) इति " अनेन जीवेना-

तदाहुः । ( ३ ) एको मृत्युर्बहवा३ ऽइत्येकश्च बहवश्चेति ह ब्रूयाद्यदहा-सावमुत्र तेनैकोऽथ यदिह प्रजासु बहुधा व्याविष्टस्तेनो बहवः ॥ १६ ॥

---

तदाहु-एको मृत्युर्बहवा ३ इति । एकश्च बहवश्चेति ह ब्रूयात् । यदहासावमुत्र-तेनैकः, अथ यदिह प्रजासु बहुधा व्याविष्टस्तेनो बहवः ॥ १६ ॥

---

एव मण्डलमध्यवर्ति पुरुषा मनोपासनीयस्य दक्षिणाक्षिपुरुषस्य मृत्युरूपत्व प्राणरूपत्व चोक्तम् । तत्र मृत्योरेकत्व बहुत्व चति प्रश्नोत्तराभ्यामाह–तदाहुरेको मृत्युरिति । एको मृत्युर्बहवश्च । बहवा ३ इयत्र विचारार्थे प्लुति, ' असावमुत्र ' लोके आदित्यमण्डलमध्यवर्ती पुरुष एक । ' इह ' भूलोके ' प्रजासु ' मनुष्यपश्वादिष्वन्तरावेशाद् ' बहव ' मृत्यव ॥ १६ ॥

---

त्मनाऽनुप्रविश्य नामरूपे व्याकरोत् " ( छा उ. ६ । ३ । २ ) इति च । वाजसनेयिन –" इन्द्रो मायाभि पुरुरूप ईयते " ( बृ० उ. २ । ५ । १९ ) इति, अतर्यामिब्राह्मणादिकमपि ( बृ.उ. ३ । ७ ) । सूत्राणि च– " जन्माद्यस्य यत " ( ब्र सू. १ । १ । २ । १ ) इत्यादीनि । जगद्विवर्तोपादानब्रह्म ब्रह्माभिन्न जगत् । " क्षेत्रज्ञ चापि मां विद्धि " ( भ. गीता १३।२ ) " वासुदेव सर्वम् " ( भ गीता ७ । १९ ) इत्यादि प्रमाणजालमुदाहियता । एतत्सर्व "तमेतमग्नि " इत्यादिना विशतितमकण्डिकायां चतुरतर चर्चयिष्यामहे इत्यल नारायणेन्द्रसरस्वतीचरणसरसीरुहमधुपानमदविभ्रान्तलालनविलासै । यस्मादेव ' तस्मात् ' भगवती सूर्यदेवता स्वयम् ' एका सती लोकम्पृणा ' चतुर्दशलोकव्यापिनी वर्तते । अद्भुतमेतत् । पावनम् कामित सुख-प्रदानम् । तथा कठा आमनन्ति–" एको बहूनां यो विदधाति कामान् " ( कठ. उ. २ । ५ । १३ ) इति । किंच ' अग्नि ' तदुपलक्षितदेवतामात्र ' सर्व अनु ' दृश्य ' बिभर्ति ' बिभर्ति । " त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा " (बृ. उ. ३ । ९ । १) इति शाकल्यब्राह्मणोक्तसंख्यासद्भ्यैवदेवतासार्वभौमो जग-द्व्यापकता प्राणिमात्राक्षिमण्डलमधिशयानो देव इति श्रुतिमृगीद्दगतरग । अग्निशब्दस्योपलक्षणत्वे सर्वमितिविशेषण निदान । एतदेव प्रकटीक्रियते–अथेति । 'यत' यस्मात् 'एक एव' सूर्य तजस्वितम ' तस्मात् एका ' सूर्यदेवता सर्वानुप्रविष्टा इति उपसहार ॥ १९ ॥

अनुपदकण्डिकोक्तमेकत्व सिद्धान्तयितु प्रश्नादिना चर्चामुत्थापयति–तदाहुरिति । किं 'मृत्यु ' मृत्युशब्दवाच्यो जगद्भक्षु 'एक' उत अहो ' बहव ' मृत्यव इति । तत् तस्मिन् पूर्वोक्तार्थे केचन महर्षय आहु कथन ब्रह्म-विद्व प्रमच्छुरित्यर्थ । प्लुति सशयद्योतिका । एव सशयाने पृष्ट कश्चिद्विज्ञातसर्वरहस्य ' एकश्च ' मृत्यु 'बहवश्च' मृत्यव 'इति' 'ह' किल 'ब्रूयात्' प्रत्युत्तर दद्यात् पृच्छामगीकुर्यादित्यर्थ । पक्षद्वय समर्थयति । 'यत्' यस्मात् 'असौ' सूर्यरूप परमात्मा 'अमुत्र' सर्वनाम्नां बुद्धिस्थवाचकत्वात् अनेकार्थत्वाच्चाव्ययानामुक्तो ' अह ' " सुपां सुलुक् " (पा. सू. ७ । १ । ३९ ) इत्यादिना लोलोपे अह, इति किमपि इति ह हतर्डे न ह अह अहता इत्यर्थ । स्वव्यतिरिक्ताभावात् सर्वं स्वयमेवेति सूर्य किं हन्यात् न किंचित् अत अय वह एकाकी इति ध्वनितोऽर्थ । तेन कारणेन मोक्षावस्थाया अयम् 'एक' । नन्विय क्लिष्टकल्पना, न, श्रीगुरूपदेशगम्यत्वादस्यार्थवादस्य । 'अथ' पक्षान्तरे । 'यत्' येन कारणेन 'इह' भूमण्डे ' प्रजासु बहुधा व्याविष्ट ' । 'तेन' कारणेन 'बहव ' 'उ' शब्देन बहुत्वस्य वास्तवत्वमपाक्रियते । चन्द्रस्य अनेकजलाशयप्रवेशात् बहुत्व न

**( सु ) अथाध्यात्मम् । ( मि ) इदमेव शरीरमन्नमथ योऽयं दक्षिणेऽक्षन्पुरुषः सोऽत्ता स एतस्मिन्नन्नेऽपश्रितो भाति ॥ १९ ॥**

तपति–तदन्नम् अथ य एष एतस्मिन्मण्डले पुरुषः सोऽत्ता । स एतस्मिन्नन्नेऽपश्रितो भाति । इत्यधिदैवतम् ॥ १८ ॥

अथाध्यात्मम्–इदमेव शरीरमन्नम् । अथ योऽयं दक्षिणेऽक्षन्पुरुषः सोऽत्ता । स एतस्मिन्नन्नेऽपश्रितो भाति ॥ १९ ॥

---

ऽमृत ' इति एतावान्मन्त्र । तमेव स्तोकमधिदैवाध्यात्मपरत्वेन व्याचष्टे–यदेतन्मण्डलं तपतीति । ' यद्-तत् ' जगत्प्रकाशक ज्योतिर्मण्डल ' तदन्न ' तन्मध्यवर्ती ' पुरुष ' ' अत्ता ' ' रसाना ' ' सक्षरे ' ' अन्ने ' ' मण्डले ' ' अपश्रित ' स्थित ' स. ' ' अमृत. ' मरणधर्मरहित पुरुषोऽत्ता ' भाति ' दीप्यत इत्यधिदैवतमर्थ ॥ १८ ॥

' अध्यात्मम ' तु ' इदमेव शरीरमन्न ' दक्षिणाक्षिपुरुष एव ' अत्ता ' तथा च ' अन्ने ' शरीरे ' अपश्रित ' अमृतोऽक्षिपुरुषोऽत्ता ' भाति ' प्रकाशत इति ॥ १९ ॥

---

पश्रितो रसाना ५ सक्षरे मृत " इति । अस्यार्थ.–प्रथम एकत्वानेकत्वपरतया व्याख्यायते–' अमृत. ' परमात्मा 'अन्ने' अन्नमयशरीरे तत्तज्जीवरूपेण 'भाति' इत्यनेन बहुत्वमवादि । 'रसानां' वृष्टिरूपोदकानां ' सक्षरे ' क्षरणहेतुभूते मण्डले ' भाति ' इत्यनेन एकत्वमसूचि । ' अमृत ' कथभूत ' अपश्रित ' मध्ये क्रमत्यय । श्रयणमाश्रयो अपगतो यस्मात् स अपाश्रित निराश्रय स्वय सर्वजगदाश्रयश्च । तथा च छांदोग्य–" स भगव कस्मिन्प्रतिष्ठित इति स्वे महिम्नि " ( छां. उ ७ । २४ । १ ) इति । स्कान्देऽपि " सर्वाधारो निराधारो भगवान्परमेश्वर " ( स्क. पु का. ख. ) इति । अक्षरब्राह्मणे ( बृ. उ. ३।८ ) सर्वाधारत्व स्फुट । अथातिकदूरपरत्वेन व्याख्या ' अन्ने भाति ' इत्यनेन नैकट्य 'रसानां सक्षरे भाति' इत्युक्त्या अनैकट्य । यजुरिद तिरोहितार्थमिति मत्वानेन ब्राह्मणेन विविच्यते–यदेतन्मण्डलमिति । अस्माभिः प्रकृतानुसारेण विवृत यजु । ब्राह्मणेन तु एक एवार्थो उपलक्षणत्वेन सोमूच्यते । 'यदेतन्मडल तपति' 'तत्' मण्डल 'अन्न' वृष्टि द्वारा अन्नहेतुत्वात् । 'अथ' एव 'य एष एतस्मिन्मडले पुरुष.' अस्ति 'स अत्ता' भक्षयत' प्रलये ब्रह्माड इत्यत इतरकाले 'स एतस्मिन्नन्ने अपश्रित ' सन् 'भाति' । श्रुतिकृतव्याख्यानेन एकत्वदूरत्वे उपलभ्येते । अस्मद्विवरणे तु "तदाहुरिति" कण्डिकाद्वयस्य सर्वं अपि मत्र उदाहृत तदिति पूर्वपरामर्शात् । व्याख्याद्वये तु विरोध इति न मतव्य उपलक्षणात् । यद्यपि अत्र मडलपुरुषयो अन्नान्नादभावप्रतीतिः अस्ति तथापि अनुभवविरोधात् असदुक्त श्रद्धीयतां नहि मडल तत्रत्य पुरुषो भक्षयति । ' इति अधिदैवतम ' उपासनमुक्त ॥ १८ ॥

अथाध्यात्मं वक्ष्यते । 'इदमेव शरीरमन्न' अन्नविकार । ' अथ ' एव ' योऽय दक्षिणेऽक्षन्पुरुषः ' अस्ति ' स अत्ता, स्वानुष्ठितनियतफलभोक्ता ' स ' एवविध ' एतस्मिन्नन्ने ' अन्नोपचिते ' अपश्रितो भाति ' अत्रापि शरीराक्षिपुरुषयोरन्नान्नादभावोऽस्तीति कश्चित् विभ्रमीति । न विभ्रमीतु अस्माभिर्विशदीकृतत्वात् । नहि

तमेतमग्निरित्यध्वर्य्यव उपासते । यजुरित्येष हीदᳪं सर्व्वं युनक्ति सामेति च्छन्दोगा एतस्मिन्हीदᳪं सर्व्वᳪं समानमुक्थमिति बह्वृचा एष हीदᳪं सर्व्वमुत्थापयति यातुरिति यातुविद एतेन हीदᳪं सर्व्वं यतं विषमिति सर्पाः सर्प इति सर्पविद ऊर्गिति देवा रयिरिति मनुष्या मायेत्यसुराः स्वधेति पितरो देवजन इति देवजनविदो रूपमिति गन्धर्व्वा गन्ध इत्यप्सरसस्तं यथायथोपासते तदेव भवति तद्धैनान्भूत्वाऽवति तस्मादेनमेवंवित्सर्व्वैरेवैतैरुपासीत सर्व्वᳪं हैतद्भवति सर्व्वᳪं हैनमेतद्भूत्वाऽवति ॥२०॥

---

तमेतमग्निरित्यध्वर्यव उपासते, यजुः-इति एष हीदं सर्वं युनक्ति । साम-इति छन्दोगाः, एतस्मिन्हीदं सर्वं समानम् । उक्थमिति बह्वृचाः, एष हीदं सर्वमुत्थापयति । यातुः-इति यातुविदः । एतेन हीदं सर्वं यतम् । विषमिति सर्पाः । सर्प इति सर्पविदः । ऊर्गिति देवाः । रयिरिति मनुष्याः । मायेत्यसुराः । स्वधेति पितरः । देवजन इति देवजनविदः । रूपमिति गन्धर्वाः । गन्ध इत्यप्सरसः । तं यथायथोपासते, तदेव भवति-तद्धैनान्भूत्वाऽवति । तस्मादेनमेवंवित्सर्वैरेवैतैरुपासीत । सर्वं हैतद्भवति । सर्वं हैनमेतद्भूत्वाऽवति ॥ २० ॥

---

एवमधिदैवमध्यात्मं च यः पुरुषः परमात्मा ध्येयत्वेनोक्तः तस्य प्रशंसार्थं नानारूपैरुपासनं दर्शयति-तमेतमग्निरित्यध्वर्यव उपासते यजुरिति । 'तमेतम् अग्नि' इति यः पुरुष उक्तः स परमात्मेति सर्वत्र व्याख्येयम् । अत एवैतरेयके अध्यात्ममधिदैवं चोक्तं परमात्मानं प्रस्तुत्य समाम्नातम्-"एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा एतमस्यामेतं दिव्येतं वायावेतमाकाश" इति प्रक्रम्य "सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षत"(ऐ आ. ३।२।३।१२)इति।तत्राध्वर्यवो याजुषा । एतं पुरुषमग्निरित्युपासनेन निष्पादितोऽग्नि

---

शरीरमग्निस्थो भुङ्क्ते । अग्नि तु तदन्यत् भोग्य । अत एव भोगायतनं शरीरमिति शरीरलक्षणं । सटलमपि सूर्यं भोगायतनमेव । सुरासुरनरादीनां तुल्ययोगक्षेमत्वात् । तर्हि सूर्यं कथ परमात्मा । आकर्णय, "शास्त्रदृष्ट्या तु उपदेशो वामदेववत्"-( ब्र. सू. १ । १ । ११ । ३० । ) इति सूत्र । अन्य सर्वमसकृत् व्याचक्ष्महे इम इति सर्वमवदात ॥ १९ ॥

अथ इदानीं समानशाखाप्रवर्तकानां भूमिदेवानां मतानि उपन्यस्यन्ते सर्वात्मकत्वद्योतनाय-तमेतमिति । "रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां नृणामेको गम्यस्त्वमसि" ( शि. म. स्तो. ७ ) इति न्यायात् । "यदक्षरं वेदविदो वदन्ति" ( भ. गीता. ८ । ११ ) इत्यादि न्यायाच्च । 'अध्वर्यव' षडशीतिशाखाध्येतारो याजुषाः 'तमेत अग्नि' 'इति' बुध्या 'उपासते' तं क एतावता निवचनेन सप्रोच्य तात्पर्येण उपपादितः यः तमिति शेषयित्वा अन्वेषणम् । यजुर्वेदे अग्निरिष्टदेवता कुलदेवता च । अध्वर्युभिः आहवनीयस्य नैर्ऋतभागे उपाय स्ववपद्धतिः ईशानभागे स्थित्वा मन्त्रसूक्तार्थं यजति जुहोति शब्दितानां समिधयोदनीवृत्तपुरोडाशसुग्भंगादिद्रव्याणां नानाविधानां हविषां आहवनीयप्रमाग्निचयादौ गार्हपत्ये पत्नीसंयाजादीनां दक्षिणाग्न्यादौ

रित्युपासते यजुरिति च । यजुःशब्दस्य परमात्मपरतां दर्शयति—एष हीदं सर्वं युनक्तीति । 'एष' पुरुषः 'इदं' 'सर्वं' जगत् 'युनक्ति' स्वेन स्वेन सङ्गतं करोतीति । अनेन सर्वव्यापकत्वमुक्तम् । 'सामेति छन्दोगाः' सामवेदिनः सामेत्युपासते । सामशब्दस्य परमात्मपरतां निर्वक्ति एतस्मिन् हीदमिति । 'एतस्मिन्' परमात्मनि कारणे 'इदं सर्वं' कार्यजातं 'समानं' समानमिति सामशब्दनिष्पत्तिः । 'उक्थमिति बह्वृचाः' बह्व्य ऋचो येषां ते 'बह्वृचाः' ऋग्वेदिन उक्थमित्युपासते । 'एष हीदं सर्वमुत्थापयति' जनयति सर्वमिति उक्थशब्देन परमात्मोक्त इत्यर्थः । उत्पूर्वात्तिष्ठतेः कप्रत्यये तकारस्य ककारश्छान्दस इत्युक्थशब्दव्युत्पत्तिः । 'यातुविदः' यातुधानाः 'यातु' इत्युपासते । 'एतेन' सर्वं 'यतं' नियतं स्वस्वस्थानमनतिलङ्घ्य स्थापितं वर्तत इति । यातुशब्दः पुरुषवाचकः 'सर्पा' 'विषमिति' सर्पाः विषत्वाद्विषरूपोपासनम् । एवमुत्तरत्र—'सर्पविदः' आहितुण्डिकाः । सर्वमुपसंहरति—तं यथा यथोपासते तदेव भवतीति । तं परमात्मानं यथा येन रूपेण उक्तेन प्रकारेणान्येन वा उपासीरन् ते 'तदेव' तत्स्वरूपा भवन्तीति ॥ २० ॥

---

तत्तदुचितानां तूष्णीम्भावात् । एष खलु सर्ववेदेषु सम्प्रदायः । होतृोद्गातृप्रशास्तॄणामृत्विजां याज्यापुरोऽनुवाक्याशस्त्रादीनां ऋचां पाठे सावधानता । तत्सर्वविलक्षणपाटवं ब्रह्मणः । सर्वथाऽपि अनध्वर्योर्हवनकर्तृत्वं नास्तीत्यत्र न मुग्धोऽपि सन्दिग्धे । ऋत्विगभावपक्षे यो जुहोति स अध्वर्युरस्मीति भावनयैव जुहोति । तथाच त्रयीभाष्यकारः सायनाचार्यः प्रतिपादितः "आर्त्विज्येषु आध्वर्यवस्य प्रधानत्वात् तत्प्रयोगविनियुक्तमन्त्रकदम्बको याजुषवेदोऽपि प्रधानतया प्रथमः । ततो अध्वर्युनिष्पादितहविरादेर्वेदिकायामासादनानन्तरं प्रयाजाज्यभागप्रधानयागादयक्षित-हौत्रविनियुक्तमन्त्रकदम्बको रौचो वेदो द्वितीयकः । ततो ऋगाश्रितगीतिविशेषसामप्रतिपादकः सामवेदस्तृतीयकः । आथर्वणवेदस्य तु क्रियासु विनियोगो नास्ति । तस्मात् यजुर्वेदो अर्थानुष्ठानक्रमाश्रय आदिम." इति । यस्मादेव तस्मात् त्रेताग्नौ समस्ता याजुषाः सन्निकृष्टप्रियाः । होत्रादयस्तु, होतृषदनादिस्थानप्रियाः तस्मादिदमध्वर्यवो यजुरित्युपासत । सर्वेयजुष्ट्वे युक्तिरुच्यते हि' यस्मात् 'एष' रविः 'इदं सर्वं' जगत् पुण्यपापद्वारा सुखदुःखाभ्यां सह 'युनक्ति' तथा कौषीतकाः—"एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष ह्येवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते"—( कौषि० उ० ३ । ९ ) इति । अग्नित्वे, न युक्तिः—किंतु भावनमात्रम् । बृहद्रथन्तरादिपञ्चविंशं सप्तविंशं वा 'साम' । तद्रूपम् 'इति' 'छन्दोगाः' सामगा उपासते । अत्र युक्तिः—'हि' यस्मात् 'इदं सर्वं' जगत् 'एतस्मिन्' आधारे 'समानं' तुल्यमस्ति । "न मे द्वेष्योऽस्ति न प्रियः"—( भ० गीता, ९ । २९ ) इति शास्त्रात् । 'उक्थ' प्रोक्तं तद्रूपम् 'इति बह्वृचाः' युक्तिस्तु 'हि' यस्मात् 'एष' 'इदं सर्वं' स्वोदयेन निद्रातः 'उत्थापयति' जीवविशेषेण कार्यजातं वा । अत्र कठपाठः—"न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ"—( कठ० उ० २ । ५ । ५ ) इति । 'यातु' यान्ति यदुपासनेन स्वर्गापवर्गौ त्रैवर्णिका अमी, 'यातु' अथर्ववेदः तद्विदो 'यातुविदः' आथर्वणिका इति यावत् । ते तं 'यातुरिति' उपासते । यातुर्नाम अथर्ववेदप्रमेयं नानाविधप्रयोगलक्षणं, अयमर्थो गुरूपदेशगम्यः । युक्तिस्तु 'हि' यस्मात् 'इदं सर्वं एतेन यतं' नियतं नियमितम् एतच्छासनवर्तीत्यर्थः । तथाच गार्गीं प्रति याज्ञवल्क्यः—"एतस्य वा अक्षरस्य प्रशासने गार्गि०" ( बृ० उ० ३ । ८ । ९ ) इत्यादि । इत्थं चतुर्वेदीमतिभिः स्वस्वमतानुसारेण नामान्तरैः एक एवादित्यः उपास्यते इत्युक्तम् । अत्रैव "एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते एतमग्नावध्वर्यव" ( ऐ० आ० ३ । २ । ३ । १२ ) इत्यादि शाखान्तरमुदाहृतम् ।

अथेदानीं लौकिकानि बहुविधमतानि उपदर्शयति—'विश्वमिति सर्वा ' विश्वस्य सर्वात्मकत्वात्, विश्वमेव सर्वेभ्यो विश्वमिति जना । 'सर्वं इति सर्वविद ' तत्रैकरसवायूपासका । 'ऊर्गिति देवा ' इन्द्रादय । ऊर्जयन्ति भोक्तॄन् इति ऊर्क् । अत हविरादि "ऊर्जस्वमागतरो" (वा. पा. चु प १६) तस्मात् रयि । 'रयि ' गन्धर्वाप्सरसो 'इति मन्यन्ता । मायेत्यसुरा ' मायेन्द्रजिदादिषु मायाविता प्रसिद्धा । 'स्वधा' तत्पूर्वक कव्य 'इति पितर ' अग्निष्वात्तादय । 'देवजन इति सर्पा ' सकाशात् इति जन , देवश्चासौ जनश्चेति देवजन सर्पाणाम् इत्यादिवत् सर्पैर्जनरन्ध्र देव इति मात्र इति' देवजनविद ' प्रागदेवोपासका इत्यर्थ । 'रूपमिति गन्धर्वा ' तेषां सौन्दर्यमानत्वात् । 'गन्ध इति अप्सरसो ' रमाद्या तासामगरागप्रधानत्वात् । अत्रदमुपलक्षण, शिव इति शैवा । विष्णुरिति वैष्णवा । विरञ्चिरिति वैरिञ्चा । इन्द्र इति ऐन्द्रा । गणपतिरिति गाणपत्या । सूर इति सौरा । भैरव इति कापालिका । शक्तिरिति शाक्तया । पशुपतिरिति पाशुपता । सुप्तान्त स्फोट इति च वैयाकरणा । नित्यज्ञानेच्छाप्रयत्नगुणक क्षित्यादिकर्तृलिङ्गगम्यो जगन्निमित्तमीश्वर इति आक्षपादिका काणादाश्च । प्रकृतिव्यतिरिक्त सच्चिदानन्द निर्गुण बहव पुरुषा इति कापिला पातञ्जलाश्च । शुक्लकृष्ण कर्म इति पूर्वमीमांसका । सर्वज्ञस्वरूप निर्गुण ब्रह्म इति उत्तरमीमांसका । इदमेव समस्तद्वैतनिर्वाजन क्षणभङ्गगुर क्षणभङ्गदेव विज्ञान इति सौगता । शून्यमिति दिगम्बरा । क्षणिक आदिति जैना । मदशक्तिवायत भूतचतुष्कमेव चैतन्य इति चार्वाका । प्रत्यक्षदेवतेति सर्वे प्राणिन । त्रिलोकानायकमुखपुरक्रमिति रसिका । त्रिलोकानादिकानर्थनेदीप्तमिति अदिवर्था । इत्थ मत्स्येन्द्रगोरक्षनाथ–नानक–पाश्चात्यादि–मतानि उपन्यसनीयानि, एवविधा सर्वेऽपि तमादि त्य स्वस्वाभिमत उपासते । वय तूपास्महे श्रीनारायणेन्द्रसरस्वतीनिति । ननु–इत्थ चेत्, सर्वस्वरूप सदिन्ध भवत् इत्याशङ्क्य नेत्याह–'त' आदि त्य पूर्वोक्तदिविधादिनो ' यथायथा उपासते ' सोऽपि आदित्य ' तदेव ' तद्रूपमेव भवति सर्वात्मकत्वात् । न सशय । सर्वात्मकत्वमुतो न स्वरूपत्वयापण दूषणमपि तु भूषणम् । तथा सर्वमते षडशीतिषु राधामुकुन्दलम्बमध्यवर्तिनिमध्यकरनायमाना शानद्रियाप्पायापा प्रनार्ग एते शिवरा इति चत् हा हा हत वत मूर्खोऽसि "वस्त्रयमरन्सूर्योदयसमगाद्वे । मातृत्रयमराद्वानोऽन्यकिंचित्र विद्यत ॥" ( वा रामा आदित्यहृदय ) अस्मिन्नर्थे वाल्मिकिरामायणस्य रघुकुलतिलक प्रति चतुर्मुखोपदिष्टमादित्यहृदय प्रमाणमित्यस्य मूर्द्धानुकारिने सानुरूप वक्ष्यमाणमित प्रसादवाक्यप्रमाण्यैरियमेवोपमाति भवेद् समन्वितमनन्तिरूप च । भगवानप्याह "यो यो यां यां तनुं भक्त श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान्हितान् ।" ( भ गीता ७ । २१ । २२ ) इति अत एव आदित्यरूपेण स्त्रीपुनपुंसकत्वनिर्गतामपि नास्ति–तथाच श्रूयते "नैव वाचा स्त्रिय ब्रुवन्नैनमस्त्री पुमान् ब्रुवन् । पुमांसं न ब्रुवन्नेनं वदन्वदति कश्चन" ( ए आ ३ । २ । २० ) इति । श्वेताश्वतरश्रुतावपि "नैव स्त्री न पुमानेष नैव चायं नपुंसकः" ( श्वे. उ ५ । १० । ) इति । अत एव न शरीरत्रयवत्ता–"अस्थूलादि" ( बृ उ ३ । ८ । ८ ) वाक्यात् अनण्वादि ( बृ उ ३ । ८ । ८ ) वाक्याच्च । "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्" ( क उ १ । २ । २१ ) इति कठवाक्याच्च । अत एव न जातिसम्बन्धः । मनसि शरीरसम्बन्धपूर्वकत्वात् तथा । अत एव न नित्यत्वसा–"नित्यो नित्यानां चेतनश्चेतनानाम्" ( कठ उ १ । २ । २२ ) इति कठश्रुते । अत एव नान्नित्यस्थानत्वप्रयोगोऽपि मृषा "सर्वव्यापी सर्वभूतान्तरात्मा" ( कठ उ २ । ५ । १२ ) इति काठकात् । अत एव स्थानाकारादिमत्त्वो

स॒ऽ ए॒ष त्री॑ष्ट॒कोऽग्निः । ( क्तं ) ऋग्ये॑का य॒जुरे॑का सामै॑का तद्यां कां चा॒त्र॒ऽर्चोप॒दधा॑ति रु॒क्मस्स॒ऽए॒व त॒स्याऽ आय॒तन॒मथ॒ यां य॒जुषा॑ पुरु॒षऽ ए॒व त॒स्याऽआय॒तन॒मथ॒ यार्ठ॑ साम्ना॑ पुष्करप॒र्णमे॒व त॒स्याऽआय॒तन॒मेवं॒ त्रीष्ट॒कः ॥ २१ ॥

---

स एष त्रीष्टकोऽग्निः-ऋगेका, यजुरेका, सामैका । तद् या का चात्रऽर्चोपदधाति-रुक्म एव

---

यदुक्तम् पूर्वस्मिन् ब्राह्मणे, "एतस्याग्नेर्वागेवोपनिषद्" इति-प्रक्रम्य "सा वा एषा वाक् त्रेधा विहिता

---

मृषा " आ मरति रात्मक्रीड " ( छा. उ. ७ । २५ । २ ) इति श्रुते । आदित्यादिनामान्यपि मिथ्या । " अनामागोत्रम् " ( बृ. उ. ३-८-८ ) इति शतपथात् । व्योमचारादिकमपि माया । " निष्कल निष्क्रिय शांत निरवद्य निरजन " ( श्वेता. उ. ६ । १९ । ) इति श्वेताश्वतरात् । " चक्षो सूर्यो अजायत " ( वा स. ३१ । १२ ) इति जन्ममनुश्रुति गौण देहापेक्षत्वात् । देवदत्तो जातो ध्वस्त इतिवत् " वासासि जीर्णानि. " ( भ. गी २ । २२ ) इत्यादि । "नैन छिन्दति शस्त्राणि." ( भ. गी. २ । २३ ) " न हन्यते हन्यमाने शरीरे०" ( भ. गी. २ । २० ) ' न जायते म्रियते वा०" ( भ. गी २ । २० ) इत्यादि पचमवेदात् । नहि जीवानित्यत्व वैदिका अगीकुर्वते । कृतनाशाकृतागम प्रसगात् स्वर्गकामादिशास्त्रमात्रोच्छेदप्रसगात् । यस्मादेव तस्मात् अवाङ्मनोगोचर " आदित्यो ब्रह्म " ( छा उ. ३ । १९ । १ ) इति वेदपुरुषातरज्ञागमप्रसिद्धोऽर्थ । तथाच तित्तिरि -" यतो वाचो निवर्तन्ते अप्राप्य मनसा सह " ( तै उ ब्र. व ९ ) इति । अत एव पुरुषमेधमहाक्रतुशतानुष्ठानफल सौर पदमिति ( तत्रत्यानकमिद्धान्तोऽपि मृषा । सूर्यब्रह्मण अनवस्युक्त ( तै. उ. ब्र व. २ ) मनुष्यानन्दानि शत शतगणितोगालितसंख्यापरमावधिसुखरूपत्वात् । बृहदारण्यकोक्त ( बृ उ. ४ । ३ । ३३ । ) मनुष्यपितृलोकपितृकर्मदेवाजानदेवदेवलोकगन्धर्वलोकाद्यानन्दशतशतसख्यायमानविख्यायमानानन्दसीमानन्दरूप वाव । नच एतादश फल पुरुषमेधशतायत्त सहस्रसवत्सरसत्रायायत्त वा । अपि तु निज सहजम् । किंबहुना अस्मदादेरिव सूर्यस्य सासारिकत्वादिप्रतिपादका मृषा अर्थवादा । किंबहुना जीवमात्रस्य कर्तृत्वादिव्यवहारो मायाविलासिनीविलास इति वदतां गुरुवेदान्तवचोरत्नमालां श्रद्धादृढसूत्रगुम्फितां अद्वैतदीक्षागुरुभगवच्छकराचार्यभाष्यवाक्यमणिं कंठे धारयता अस्माक सूर्यस्य निर्गुणत्वप्रतिपादने क प्रयास का कथा इत्यल गुरुचरणस्मरणसंरंभरसभमली लागीति । प्रकृतमनुसराम —येयैं यथायथोपासित त्रिलोकीनायिकाफालफलककस्तूरीतिलकमध्यवर्तिबिन्दुमिमन्मौक्तिक ब्रह्म ' तत् एतान् ' उपासकान् सर्वान् तत्तद्रूप 'भूत्वा भवति' रक्षति । 'ह' किल उपासितारतम्येन फलतरतमभावप्रद भवतीत्यर्थ । यस्मादेव ' तस्मात् ' कश्चिद्रसिक एवचित्मन् ' एनम् ' आदित्य ' सर्वे ' पूर्वोक्ति ' एतं ' स्वरूपं उपेतम् ' एवोपासीत ' यदा तदा ' एतत् ' रविबिम्ब 'सर्व ह' सर्वात्मकमेव 'भवति' ' एनम ' उपासक ' एतत्सर्व भूत्वा भवति ह ' इत्यपर व्याख्यान प्रागवत् । अस्यां कण्डिकायां उल्लेखालकार " बहुभिर्बहुधोल्लेखादुल्लेख इति कथ्यते "-( साहि. १० । ३७ ) इति लक्षणात् ॥ २० ॥

---

प्रागीरितरुक्माद्युपाधायोपासनानन्तर विधत्ते-स एष इति । य प्रकृतप्रथमेय ' स एष ' भानुमान्

(स्ते) ते वा॒ऽ ए॒ते । (ऽ) उ॒भेऽ ए॒ष च॑ रु॒क्मऽ ए॒तच्च॑ पुष्करप॒र्णमे॒तं पु॑रु॒ष-मु॒पी॒तऽउ॒भे ह्यृ॑क्सा॒मे य॒जु॒रपी॑तऽए॒वम्वे॒केष्ट॑कः ॥ २२ ॥

तस्या आयतनम् । अथ या यजुषा-पुरुष एव तस्या आयतनम् । अथ या साम्ना-पुष्करपर्णमेव तस्या आयतनम् । एव त्रीष्टकः ॥ २१ ॥

ते वाऽएते उभे-एष च रुक्मः, एतच्च पुष्करपर्णम् । एत पुरुषमपीतः । उभे हि ऋक्सामे यजुरपीतः । एवम्वेकेष्टकाः ॥ २२ ॥

ऋचो, यजूंषि, सामानि तेनाभिज्ञया विहित, तन हि त्रयेण चीयते " इति । तत्र सूर्यमण्डलार्चि पुरुषरूपत्व-मेवमुक्तम् ' मण्डलमेव ऋच , आर्चिं सामानि, पुरुषो यजूंषि'' इति । सर्वेतेषामवियज्ञमेवमुक्त " यदेतन्म-ण्डल तपति स रुक्मोऽथ यदेतदर्चिर्दीप्यत इद तत्पुष्करपर्णमथ य एष एतस्मिन्मण्डले पुरुषोऽयमेव स योऽय हिरण्मय पुरुष ' इति तत्सर्वं पर्यालोच्याह-स एष त्रीष्टकोऽग्निरिति । ' एष ' चित्योऽग्नि ' त्रीष्टक ' त्रिसङ्ख्याकेष्टक । ता एवेष्टका दर्शयति-ऋगेका यजुरेका सामैकेति । ' तया कां चात्रर्चोपदधाति ' इत्या-देरयमर्थ । अत्राग्नौ ' यां ' ' काम् ' इष्टकाम् ' ऋचा ' ऋङ्मन्त्रेणोपदध्यात् सा ऋगिष्टका । साध्य-साधनयोरभेदोपचारादेवमुक्तम् । ' तस्या ' ' रुक्म ' ' एव ' ' आयतनम् ' ऋगात्मक मण्डलमेवाधियज्ञे रुक्म इत्युक्तम् । ' याम् ' इष्टका यजुर्मन्त्रेणोपदध्यात् सा यजुरिष्टका ' तस्या ' पुरुष एवायतन मण्डला-न्तर्वर्तियजुरात्मक पुरुष इत्युक्तम् । मण्डलाधिष्ठातु पुरुषस्याधियज्ञ हिरण्मयपुरुषत्वमुक्तम् । अथ यामिष्टकां साम्नोपदध्यात् सा सामेष्टका । ' तस्या ' ' पुष्करपर्णमेव ' 'आयतन' सामात्मकार्चिषोऽधियज्ञ 'पुष्करपर्णमेव' ' आयतन ' सामात्मकार्चिषोऽधियज्ञ पुष्करपर्णात्मत्वमुक्तम् । एवमृगादिभेदेन त्रीष्टकोऽग्न्याख्यो यज्ञ ॥२१॥

एकेष्टकत्व सम्पादयितुमाह-ते वाऽएते उभे इति । ' एष ' ' रुक्म ' ' एतत् ' ' पुष्करपर्णं ' ' च ' ' एते ' ' उभे ' ' एत ' ' पुरुषमपीत ' प्राप्नुतस्तदाधारे भवत इत्यर्थ । ' ऋक्सामे ' ' उभे ' यजुर-पीते यजुरधीने स्त । ' एवम् ' ' उ ' ' एवम् ' एवैकेष्टक । रुक्मपुष्करपर्णयो पुरुषाधारत्वम्, ऋक्साम-योश्च यजुरधीनत्व तस्मादेकेष्टकोऽग्निरित्यर्थ ॥ २२ ॥

' त्रीष्टक ' तिस्र इष्टका यस्यासौ त्रीष्टक । त्रित्रीष्टक इति वीप्सायां तात्पर्यं । "तिसृभिस्तिसृभिरिष्टकाभि-रुपदधाति ' इति कात्यायनोक्ते । पचचित्यात्मकचयनकर्तो अग्नेष्टौ 'एष अग्नि' एकैकोपधाने ऋग्यजु सामानि सूत्रकृद्विनियुक्तानि पठनीयानि य मन्त्रमुच्चार्य या इष्टका उपधीयते । तयोर्भेदो नास्ति इत्यभिप्रायेणाह 'एका' इष्टका 'ऋक्' एकेष्टका 'यजु' एकेष्टका 'साम' यतो भेदो नास्ति । तत्' तस्मात् अत्र अग्नौ ' यां कां च ' इष्टकां ' ऋचा ' ' अध्वर्यु ' उपदधाति तस्या रुक्म एवायतन । ' अथ या यजुषा ' उपदधाति ' तस्या पुरुष एवायतन ' । ' अथ यां साम्ना ' उपदधाति ' तस्या पुष्करपर्णमायतन ' । उक्तमर्थं निगमयति । स एव उक्तरीत्या त्रीष्टको ' वह्निरिति त्र्यष्टकवह्निबुध्याऽपि मागवत नक्षाडचक्षुषमुपासीतेतिभाव । रुक्मा-दिस्वरूपमुपन्यस्तमस्माभि प्राक् ॥ २१ ॥

-उपास्यन्तरमुपदिशति । ये प्रागुक्ते 'ते वै' वाक्यालकारे।'एते एव रुक्मश्च एतत् पुष्करपर्णं च' 'उभे एत' हिरण्मय 'पुरुष मपीत' प्राप्नुत । 'हि' एवार्थे। 'उभे' रुक्मपुष्करपर्णोपधानविनियुक्ते 'ऋक्सामे'। "अयजुर-

स॒ऽ ए॒ष॒ऽ ए॒व मृ॒त्युः । ( स॒ ) य॒ ऽए॒ष॒ऽ ए॒तस्मि॒न्मण्डले पुरु॒षो य॒श्चा॒यं दक्षि॒णेऽक्ष॒न्पुरु॒षः स॒ऽ ए॒ष॒ऽ ए॒वंवि॒द॒ऽ आत्मा॒ भ॒वति स॒ य॒दे॒वंवि॒दस्मा॒- ल्लोका॒त्प्रैत्य॒थैत॒मे॒वात्मा॒नम॒भिस॒म्भव॒ति सो॒ऽमृ॒तो भ॒वति मृ॒त्युर्ह्य॒- स्यात्मा॒ भ॒वति ॥ २३ ॥

इति तृतीयप्रपाठके षष्ठं ब्राह्मणम् ॥ १०–३–६ ॥ ( ५. २. ) ॥

इति तृतीयः प्रपाठकः समाप्तः ॥ १०–३ ॥

कण्डिकासंख्या ॥ ९१ ॥

स एष एव मृत्युः–य एष एतस्मिन्मण्डले पुरुषः । यश्चायं दक्षिणेऽक्षन्पुरुषः स एष एवंविद् आत्मा भवति । स यदेवंविदस्माल्लोकात्प्रैति । अथैतमेवात्मानमभिसम्भवति । सोऽमृतो भवति, मृत्युर्ह्यस्यात्मा भवति ॥ २३ ॥

स एष एव मृत्युरित्यादिना । वेदितु फलवर्णनम् । ' स एष ' अग्निर्वेतुगमकोऽपि वैव मण्डलमध्य- वर्ती । अध्यात्म दक्षिणाक्षिवर्ती पुरुष मृत्युरूप तमात्मत्वेन विद्वानस्माल्लोकात्प्रेत्यामृतो भवतीति ॥ २३ ॥

इति श्रीमायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे

पञ्चमेऽध्याये द्वितीय ब्राह्मणम् ॥ ( १०–५–२ ) ॥

त्रिचतुर०"–(पा.सू.५।४।७७) इत्यादिना निपात । हेमपुरुषमूर्युपधानविनियुक्त 'यजु. अपीत.' व्याख्यत । 'उ' शब्देन यजु पुरुष अप्येति इति वक्तव्य । एव सति पुरुष एक एव अवशिष्यते । स पुरुष 'एवैक' इत्युच्यते । यथा वेदान्तसिद्धान्ते भौतिक ब्रह्माण्ड भूतानि अप्येति । भूतानि च पञ्च तन्मात्रा अपियन्ति । तन्मात्रा कार्याविद्या सा च कारणाविद्या सा च परमात्मन इति विलापनविधा । एव दृश्यादिक पुरुषे विलाप्य पुरुष शेषयित्वा निर्गुणो निर्विकारो निष्प्रपञ्चो निष्कारणत्य सर्वव्यापी ऊर्ध्वाधस्तिर्यक्परिपूर्ण परमपुरुष । "एक- मेवाद्वितीय ब्रह्म "–( छां. उ. ६ । २ । २ ) " नेह नानाऽस्ति किंचन "–" मृत्यो स मृत्युमाप्नोति " " स इह नानेव पश्यति "–(क. उ. २ । ४ । १०–११ ) "अथात आदेशो नेति नेति"–( बृ. उ. २ । ३ । ६ । ) " तद्धैतत्पश्यन्नृषिर्वामदेव प्रतिपेदे '–( छां ६ । १६ । ३ ) " अह मनुरभव सूर्यश्चेति "– ( बृ. उ. १ । ४ । १० ) " गर्भे एवैतच्छयानो वामदेव एवमुवाच "–( ऐ आ. २ । ५ । १ । ३४ ) इति । "तत्त्वमसि" ( छा. उ. ६ । १६ । ३ ) इति । " योऽन्या देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशु "–( बृ. उ. १ । ४ । १० ) " स एष इह प्रविष्ट आनखाग्रेभ्यो यथा क्षुर क्षुरधानेऽवहित स्याद्विश्वम्भरो वा विश्वम्भरकुलाये त न पश्यन्त्यकृत्स्नो हि स " " अत्र ह्येते सर्वे एक भवन्ति " ( बृ. उ. १ । ४ । ७ । ) इत्य एनेकवेदमस्तकमुकुटमणिमञ्जरीनीराजितचरणकनकसरसीरुह परमात्म अहमस्मि इति निर्विकल्पिकासम्प्रज्ञातसमाधिनिष्ठो भूयो भूयो भूयात् इति द्वाविंशतिकण्डिकामु दायार्थ ॥ २२ ॥

अथेदानीं पूर्वोक्तोपासित मस्य ' तस्माच्छान्तो दान्त "–( बृ. उ ४ । ४ । २३ । ) इत्यादि- वेदोक्तगुणस्य " तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति "–( बृ. उ. ४ । ४ । २२ ) इत्यादिसाधनस्य

माध्यंदिने तैत्तिरीये वेदे मैत्रायणीयके । षडभिर्गैरुपेतस्य रुद्राध्यायस्य सक्रमम् ॥ ५ ॥
तद्भाष्याणि समालोच्य भाष्यं सम्मतिपूर्वकम् । कर्मकाण्डक्रमं त्यक्त्वा समुद्धृतं च येन च ॥ ६ ॥
अन्ये च वैदिकग्रन्था कृता येन च द्राविडे । आन्ध्रे देशे सुप्रसिद्धं पदवाक्यप्रमाणतः ॥ ७ ॥
सोऽयं विराजते भूमौ राजहंससरस्वती । नामान्तरेण स प्रोक्तः शाधनेन्द्रसरस्वती ॥ ८ ॥
मण्डलब्राह्मणस्यास्य निर्मितं भाष्यमुत्तमम् । आद्यन्तमध्यमालोच्य सावधानेन चेतसा ॥ ९ ॥
शास्त्रान्तरप्रमेयाणि शब्दशास्त्रार्थगोचरान् । मुहुर्मुहुः सविचार्य सन्तो मां संस्तुवन्तु वा ।
निंदन्तु मा न तु क्षिप्रं गुणं दोषं वदन्तु मे ॥ १० ॥
आसुप्तादामृते कालं वेदवेदान्तगोचरं । योऽभिप्राय सदा चित्तं विचारयति सर्वदा ॥ ११ ॥
तस्येमां कृतिमालोच्य तुष्यन्तु भुवि सूरयः । सशिष्याः सप्रशिष्याश्च सोपशिष्या दयालवः ॥ १२ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीनारायणेन्द्रसरस्वत्या कृतौ माध्यंदिनशाखीयशतपथ-
मध्यगताखण्डमार्तण्डमण्डलब्राह्मणभाष्यं पण्डितमण्डनं नाम संपूर्णम् ॥

इति पंडितमंडनं नाम मंडलब्राह्मणभाष्यम् ॥



# अथ चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ।

# पञ्चमेऽध्याये च तृतीयं ब्राह्मणम् ।

नेव वाऽइदमग्रेऽसदासीन्नेव सदासीत् । (उ) आसीदिव वाऽइदमग्रे नेवासीत्तद्ध तन्मन ऽएवास ॥ १ ॥

मानसाग्न्युपासनं ब्राह्मणम् ।

नेव वा इदमग्रेऽसदासीत्, नेव सदासीत् । आसीदिव वा इदमग्रे नेवासीत् । तद्ध तन्मन एवास ॥ १ ॥

उत्तरब्राह्मणे मनःपुरुषवाग्प्राणमनोवाक्प्राणचक्षुःश्रोत्रकर्माग्निभिः सम्पाद्यचित्याग्निविषया उपासना वक्ष्यन्ते । एते मनश्चिदादयोऽग्नयः क्रियानुप्रवेशिनः तच्छेषभूता उत स्वतन्त्राः केवलविद्यात्मकाः इति विचार्याधिकरणमवतारितमाचार्यैः शारीरकभाष्ये । तथाहि—"लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि" (ब्र. सू. ३।३।२८।४४) इति । अधिकरणार्थः श्लोकद्वयेन सङ्गृहीत तत्त्वविद्भिरभियुक्तैः—"कर्मशेषाः स्वतन्त्रा वा मनश्चित्प्रमुखाग्नयः । कर्मशेषः प्रकरणाल्लिङ्गं त्वन्यार्थदर्शनम् ॥ उभेय एव धीलिङ्गादेव श्रुत्या च वाक्यतः । बाध्यं प्रकरणं तस्मात् स्वतन्त्र वह्निचिन्तनम्" ॥ इति । इदमेव ब्राह्मणं विषयवाक्यम्—तथथा—नेव वाऽइदमग्रेऽसदासीदिति प्रक्रम्य मनोऽग्निकल्पाभिधीयते—" तत् षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान् मनश्चितः " (क. २) इत्यादि । अयमर्थः—पुरुषस्य शतसंवत्सरमित आयुषि षट्त्रिंशत्सहस्राणि दिनानि भवन्ति ३६००० । तत्रैकैकस्मिन् दिवसे या मनोवृत्तिः तस्या एकैकाग्नित्वेन ध्याने सति ध्यानस्था अग्नयः षट्त्रिंशत्सहस्रसंख्याकाः ३६०००—सम्पद्यन्ते । ते चात्मात्मस्वरूपत्वेन ध्येयाः । अत एवार्का अर्चनीया मनसा चीयन्ते सम्पाद्यन्त इति मनश्चित । एवं वाक्चित, प्राणचित, चक्षुश्चित, श्रोत्रचित, कर्मचितोऽग्निचित इति । ते चाग्नयोऽग्निचयनप्रकरणेपठितत्वात् कर्मशेषाः, न तु स्वतन्त्रसङ्कल्पात्मकलिङ्गबलात् स्वतन्त्रविद्यात्मका भविष्यन्ति । तथाहि अस्मिन् ब्राह्मण एव " तद्यत्किं चेमानि भूतानि मनसा सङ्कल्पयन्ति तेषामेव सा कृतिरिति " (क ३) इति । एवं वागादिपर्यायेष्वपि । " तद्यत्किं चेमानि भूतानि वाचा वदन्ति तेषामेव सा कृतिः " (क. ४) इति । " प्राणेन प्राणन्ति " (क. ६) इत्यादिलिङ्गानि सन्ति । एषामर्थः—यत्किंच भूतानि मनसा ध्यायन्ति, वाचा वदन्ति तैः सङ्कल्पवदनादिभिरेव तेषामग्नीनां करणानीति । तथा एतद्ब्राह्मणावसाने " तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते " (क. १२) इति वाक्यशेषः पठ्यते । तस्यायमर्थः—उपासकस्य स्वपतोऽप्यग्नयोऽविच्छिन्नाः । स्वकीयमनोवागादिवृत्त्युपरमेऽपि प्रबुद्धपुरुषमनोवागादिवृत्तीनां प्रवर्तमानत्वादशेषपुरुषमनोवृत्तीनामग्नित्वेन वर्णनात् । तस्मादेवंविदे स्वपतेऽपि तानेतानग्नीन् सर्वदा सर्वाणि भूतानि चिन्वन्तीति । तत्र यावज्जीवमग्नीनामविच्छेदेन नैरन्तर्यं प्रतीयते । तच्च विद्यास्वातन्त्र्यलिङ्गम् । कर्मशेषत्वे हि कर्मणो यावज्जीवं नैरन्तर्याभावादविच्छेदाभावात् मनश्चिदादीनां चाप नैरन्तर्यं स्यात् तच्च लिङ्गं प्रकरणाद्बलीयः, तस्मात् स्वतन्त्रविद्यात्मका इति । नायं दोषः । अन्यार्थदर्शनत्वेन लिङ्गस्यैतस्य दुर्बलत्वात् । तथाहि—द्विविधं लिङ्गम्, सामर्थ्यमन्यार्थदर्शनं चेति । तत्र विध्युद्देशगतं लिङ्गं सामर्थ्यं, तच्च स्वत-

तस्मादेतदृषिणाऽभ्यनूक्तम् । ( ञ्ञा ) नासदासीन्नो सदासीत्तदानीमिति नेव हि सन्मनो नेवासत् ॥ २ ॥

( त्तु ) तदिदं मनः सृष्टमाविरबुभूषत । ( त्रि ) निरुक्ततरं मूर्त्ततरं तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिँशतँ सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितस्ते मनसैवाधीयन्त मनसाऽचीयन्त मनसैषु ग्रहाऽअगृह्यन्त मनसाऽस्तुवत मनसाऽशँसन्यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमक्रियत तद्यत्किञ्चेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिस्तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान् गृह्णन्ति तेषु स्तुवते तेषु

---

तस्मादेतदृषिणाऽभ्यनूक्तम्–" नासदासीन्नो सदासीत्तदानीम् "–इति। नेव हि सन्मनो नेवासत् ॥ २ ॥

तदिदं मनः सृष्टमाविरबुभूषत् । निरुक्ततरं मूर्त्ततरं तदात्मानमन्वैच्छत् । तत्तपोऽतप्यत । तत्प्रामूर्च्छत् । तत्षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितः । ते मनसैवाधीयन्त ।

---

न्त्र्येण प्रमाणम् । अर्थवादगत त्वन्यशेषवाक्ये दृश्यमानत्वात् अन्यार्थदर्शनम्, तच्च तात्पर्यरहितत्वान्न स्वातन्त्र्येण प्रमाणं, किन्तु प्रमेयसाधकप्रमाणान्तरे सति केवलमुपोद्बलकं भवति । एवं च सत्यत्रोदाहृतलिङ्गाना दुर्बलत्वात्, प्रकरणात् अग्निशेषा मनश्चिदादय इति प्राप्ते ब्रूमः–न तावदत्र शाब्दो विधिरुपलभ्यते लिङ्गादेरश्रवणात् किं तर्ह्यर्थवादसामर्थ्यादुन्नेयो विधिः । तथा च फलप्रतिपादकस्तावकवाक्यानां रात्रिसत्रन्यायेनाधिकारिसमर्पणपर्यवसानादशेषमप्येतद्ब्राह्मणं विधिरूपं भविष्यति । ततो विध्युद्देशगतत्वेन लिङ्गस्य प्राबल्यं, " किंच ते हैते विद्याचित एव " ( क. १२ ) इत्येवकारश्रुत्या कर्माङ्गत्वं व्यावर्तते । तथा "विद्यया हैवैत एवंविदश्चिता भवन्ति" (क.१२) इति वाक्यशेषोऽपि स्वातन्त्र्यगमकः । तस्माच्छ्रुतिलिङ्गवाक्यैः प्रकरणं बाधित्वा स्वतन्त्रविद्यात्मत्वं मनश्चिदादीनामभ्युपगन्तव्यमित्यधिकरणार्थः । तत्र सर्वेषामिन्द्रियाणां मनसः प्रामुख्यात् तत्सम्पाद्यमग्निं प्रस्तोतुं मनसः स्वरूपं तत्सृष्टिं चाह–नेव वाऽइदमग्र इति । ' अग्रे ' सृष्टेः प्राक्काले इदं जगन्नैवासदासीत्, असदिव नासीत्, सदपि च नैवासीत्, सदसद्विलक्षणमासीदित्यर्थः । किं तदुभयविलक्षणं तदासीत् । तदा तन्मन एवासेति ॥ १ ॥

सृष्टिप्राक्काले सदसद्विलक्षणसद्भावं मन्त्रसंवादेन द्रढयति–तस्मादेतदृषिणाऽभ्यनूक्तम् , नासदासीन्नो सदासीत्तदानीम् , इति प्रथमः पाद एव संवादकः । उक्तं सदसद्वैलक्षण्यं मनसि दर्शयति–नेव हि सन्मन इति । मनः सद्रूपं न भवति, घटादिवद्रूपादिमत्त्वाभावात् । असच्च न भवति–प्रतीयमानत्वात् ॥ २ ॥

' तदिदं ' सृष्टं ' मनः ' ' आविरबुभूषत् ' ' निरुक्ततरं ' शब्दनिर्वाच्यं ' मूर्त्ततरं ' सदाविर्भवितुमैच्छत् तन्मनः, ' आत्मानं ' स्वकारणं परमात्मानं स्वस्वरूपं वा ' अन्वैच्छत् ' ' तत् ' पर्यालोचनं कृत्वा ' प्रामूर्च्छत् '

शꣳसन्नेतावती वै मनसो विभूतिरेतावती विसृष्टिरेतावन्मनः षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः ॥ ३ ॥

(४) तन्मनो वाचमसृजत । सेयं वाक्सृष्टाऽऽविरबुभूषन्निरुक्ततरा मूर्त्ततरा साऽऽत्मानमन्वैच्छत्सा तपोऽतप्यत सा प्रामूर्च्छत्सा षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्वाङ्मयान्वाक्चितस्ते वाचैवाधीयन्त वाचाऽचीयन्त वाचैषु ग्रहा अगृह्यन्त वाचाऽस्तुवत वाचाऽशꣳसन्यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म वाचैव तेषु तद्वाङ्मयेषु

---

मनसाऽचीयन्त । मनसैषु ग्रहा अगृह्यन्त । मनसाऽस्तुवत मनसाऽशंसन् । यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमक्रियत । तद् यत्किञ्च इमानि भूतानि मनसा सङ्कल्पयन्ति । तेषामेव सा कृतिः । तानेवादधति । तांश्चिन्वन्ति । तेषु ग्रहान् गृह्णन्ति । तेषु स्तुवते । तेषु शंसन्ति । एतावती वै मनसो विभूतिः । एतावती विसृष्टिः । एतावन्मनसः षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः–तेषामेकैक एव तावान्–यावानसौ पूर्वः ॥ ३ ॥

तन्मनो वाचमसृजत । सेयं वाक्सृष्टाऽऽविरबुभूषत्–निरुक्ततरा, मूर्त्ततरा । साऽऽत्मानमन्वैच्छत् । सा तपोऽतप्यत । सा प्रामूर्च्छत् । सा षट्त्रिंशतं सहस्राण्यपश्यत्–आत्मनोऽग्नीन् । अर्कान्वाङ्मयान्–

---

" मूर्छा मोहसमुच्छ्राययोः " ( धा. पा. भ्वा. २१२ ) । समुच्छ्रित बभूव । ' इत् ' मन. कर्तृ ' षट्त्रिंशत्सहस्राणि ' अधिकरणविषयवाक्यविवरणसमये व्याख्यातम् । पुरुषायुषोऽहानि तत्सम्बन्धिनीषु मनोवृत्तिषु, अग्नित्वमारोप्यत इति द्रष्टव्यम् । एतावत्सङ्ख्याकान् ' अर्कान् ' अर्चनीयान् मनउपादानकान् ' मनश्चितः ' मनसा चीयमानान् ' मन ' सम्पाद्य ' आत्मनोऽग्नीन् ' ' अपश्यत् ' एतस्य मनश्चितोऽग्नेः क्रियामयाग्निप्रकरणमुत्सृज्य स्वातन्त्र्य प्रतिपत्तु मनोव्यापारक्रियावत्त्वमनुबध्नाति–ते मनसैवाधीयन्त इत्यादिना । ' ते ' अग्नयो ' मनसैवाधीयन्त ' आधाने मनोव्यापार एव करणमित्यर्थः । एवं चयनग्रहणस्तुतशस्त्रादिकरणं केवलमनोव्यापारनिष्पन्नमित्यर्थः । सम्पन्नो कायाधानतत्प्रयत्नः क्रियावयवा सपदा प्रतिष्ठापयितव्या ; तदेव विशदयति–तद्यत् किञ्चेमानि इति । ' इमानि भूतानि ' यत्किञ्च ' मनसा सङ्कल्पयन्ति ' ध्यायन्ति, मनसा सङ्कल्प एव ' तेषाम् ' अग्नीनां ' सा कृतिः ' तत्करणजनितानग्नीनेवादधति भूतानीति सर्वत्र सम्बध्यते । " तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते " (क.१२) इति वाक्यशेषोऽभिधास्यते । ' एतावती वै मनस ' इति । मनोमयषट्त्रिंशत्सहस्रसङ्ख्याका अग्नय एव ' मनस ' ' विभूति ' महिमा ' विसृष्टि ' विविधा विसृष्टिरित्यर्थः । ' एतावन्मन ' उक्तसङ्ख्याभिरग्निभिः पुनरप्यस्य मनश्चितोऽग्नेः । केवलविद्यामयत्वेन स्वातन्त्र्य वक्तुं क्रियामयस्याग्नेर्माहात्म्य मनोमयेऽतिदिशति–तेषामेकैक एव तावान्यावानसौ पूर्व इति । " असौ पूर्व " इति पदाभ्यामिष्टकाचितोऽग्निर्विवक्ष्यते । स. यावान्परिश्रित्यजुष्मतीलोकम्पृणाभेदेनाहोरात्र्याधानेन च यत्परिमाणस्तेषां षट्त्रिंशत्सहस्रसम्मितानामग्नीनां मध्ये एकैकोऽग्निरपि ' तावान् ' तत्परिमाणो ध्येय । अनेन क्रियामयस्याग्नेर्माहात्म्यस्य ज्ञानमयानामग्नीनामेकैकस्मिन्नतिदेशो क्रियायामनादरो दर्शित इत्युक्तं भवति । अतोऽयमग्निः केवलं विद्यामय एवेति सुस्थितम् ॥ ३ ॥

एवमुत्तरे वाक्प्राणयोरपि विन्यस्तता षड्दर्याया व्याख्येया ; तत्र वागादिमयानग्नीन् दर्शयितुं तत्सृष्टि-

ष्वाक्चित्सु वाङ्मयमक्रियत तद्यत्किंचेमानि भूतानि वाचा वदन्ति तेषामेव सा कृतिस्तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै वाचो विभूतिरेतावती विसृष्टिरेतावती वाक्षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैकऽएव तावान्यावानसौ पूर्वः ॥

सा वाक्प्राणमसृजत । सोऽयं प्राणः सृष्टऽआविस्तरामभून्निरुक्ततरो मूर्त्ततरः सऽआत्मानमन्वैच्छत्स तपोऽतप्यत स प्रामूर्च्छत्स षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्प्राणमयान्प्राणचितस्ते प्राणेनैवाधीयन्त प्राणेनाऽचीयन्त प्राणेनैषु ग्रहाऽअगृह्यन्त प्राणेनास्तुवत प्राणेनाशꣳसन्यत्किंच यज्ञे कर्म क्रियते यत्किंच यज्ञियं कर्म प्राणेनैव तेषु तत्प्राणमयेषु प्राणचित्सु प्राणमयमक्रियत तद्यत्किंचेमानि भूतानि प्राणेन प्राणन्ति तेषामेव सा कृतिस्तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै प्राणस्य विभूतिरेतावती विसृष्टिरेतावान्प्राणः षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैकऽएव तावान्यावानसौ पूर्वः ॥ ५ ॥

---

वाक्चितः । ते वाचैवाधीयन्त । वाचाऽचीयन्त । वाचैव ग्रहा अगृह्यन्त । वाचाऽस्तुवत । वाचाऽशंसन् । यत्किंच यज्ञे कर्म क्रियते—यत्किंच यज्ञियं कर्म—वाचैव । तेषु तद्वाङ्मयेषु वाक्चित्सु वाङ्मयमक्रियत । तद् यत्किंचेमानि भूतानि वाचा वदन्ति—तेषामेव सा कृतिः । तानेवादधति । तांश्चिन्वन्ति । तेषु ग्रहान् गृह्णन्ति । तेषु स्तुवते । तेषु शंसन्ति । एतावती वै वाचो विभूतिः । एतावती विसृष्टिः । एतावती वाक् । षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः । तेषामेकैक एव तावान्—यावानसौ पूर्वः ॥ ४ ॥

सा वाक्प्राणमसृजत । सोऽयं प्राणः सृष्ट आविस्तरामभूत्—निरुक्ततरः, मूर्त्ततरः । स आत्मानमन्वैच्छत् । स तपोऽतप्यत । स प्रामूर्च्छत् । स षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीन्, अर्कान्प्राणमयान्, प्राणचितः । ते प्राणेनैवाधीयन्त । प्राणेनाचीयन्त । प्राणेनैषु ग्रहा अगृह्यन्त । प्राणेनास्तुवत । प्राणेनाशंसन्—यत्किंच यज्ञे कर्म क्रियते । यत्किंच यज्ञियं कर्म—प्राणेनैव तेषु तत् प्राणमयेषु, प्राणचित्सु, प्राणमयमक्रियत । तद् यत्किंचेमानि भूतानि प्राणेन प्राणन्ति । तेषामेव सा कृतिः । तानेवादधति । तांश्चिन्वन्ति । तेषु ग्रहान् गृह्णन्ति । तेषु स्तुवते । तेषु शंसन्ति । एतावती वै प्राणस्य विभूतिः । एतावती विसृष्टिः । एतावान्प्राणः षट्त्रिंशत् सहस्राण्यग्नयोऽर्काः । तेषामेकैक एव तावान्—यावानसौ पूर्वः ॥ ५ ॥

---

पादौ तस्य तस्योत्पत्तिरिवस्था—तन्मनो वाचमसृजतेति । "सा वाक् प्राणमसृजत" इत्यादे —"स ऊर्ध्व कर्मांशुकत

स प्राणश्चक्षुरसृजत । तदिदं चक्षुः सृष्टमाविरबुभूषन्निरुक्ततरं मूर्त्ततरं तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्कांश्चक्षुर्मयांश्चक्षुश्चितस्ते चक्षुषैवाधीयन्त चक्षुषाऽचीयन्त चक्षुषैषु ग्रहा अगृह्यन्त चक्षुषाऽस्तुवत चक्षुषाऽशꣳसन्यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म चक्षुषैव तेषु तच्चक्षुर्मयेषु चक्षुश्चित्सु चक्षुर्मयमक्रियत तद्यत्किञ्चेमानि भूतानि चक्षुषा पश्यन्ति तेषामेव सा कृतिस्तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै चक्षुषो विभूतिरेतावती विसृष्टिरेतावच्चक्षुः षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः ॥ ६ ॥

(स्त) तच्चक्षुः श्रोत्रमसृजत । तदिदꣳ श्रोत्रꣳ सृष्टमाविरबुभूषन्निरुक्ततरं मूर्त्ततरं तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्काञ्छ्रोत्रमयाञ्छ्रोत्रचितस्ते श्रोत्रेणैवाधीयन्त श्रोत्रेणाचीयन्त श्रोत्रेणैषु ग्रहा अगृह्यन्त श्रोत्रेणास्तुवत श्रोत्रेणाशꣳसन्यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म श्रोत्रेणैव तेषु तच्छ्रोत्रमयेषु श्रोत्रचित्सु श्रोत्रमयमक्रियत तद्यत्किञ्चेमानि भूतानि श्रोत्रेण शृण्वन्ति तेषामेव सा कृतिस्तानेवादधति तांश्चिन्वन्ति

---

स प्राणश्चक्षुरसृजत—तदिदं चक्षुः सृष्टमाविरबुभूषत्—निरुक्ततरम्, मूर्त्ततरम् । तदात्मानमन्वैच्छत् । तत्तपोऽतप्यत । तत्प्रामूर्च्छत् । तत्षट्त्रिंशतं सहस्राण्यपश्यत्—आत्मनोऽग्नीन्, अर्कांश्चक्षुर्मयांश्चक्षुश्चितः । ते चक्षुषैवाधीयन्त । चक्षुषाऽचीयन्त । चक्षुषैषु ग्रहा अगृह्यन्त । चक्षुषाऽस्तुवत । चक्षुषाऽशंसन् । यत्किञ्च यज्ञे कर्म क्रियते, यत्किञ्च यज्ञियं कर्म—चक्षुषैव । तेषु तत् चक्षुर्मयेषु, चक्षुश्चित्सु चक्षुर्मयमक्रियत । तद् यत्किञ्चेमानि भूतानि चक्षुषा पश्यन्ति—तेषामेव सा कृतिः । तानेवादधति । तेषु ग्रहान्गृह्णन्ति । तेषु स्तुवते । तेषु शंसन्ति । एतावती वै चक्षुषो विभूतिः । एतावती विसृष्टिः । एतावच्चक्षुः षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः । तेषामेकैक एव तावान्—यावानसौ पूर्वः ॥ ६ ॥

तत् चक्षुः श्रोत्रमसृजत—तदिदं श्रोत्रं सृष्टमाविरबुभूषत्—निरुक्ततरम्, मूर्त्ततरम् । तदात्मानमन्वैच्छत् । तत् तपोऽतप्यत । तत्प्रामूर्च्छत् । तत् षट्त्रिंशतं सहस्राण्यपश्यत्—आत्मनोऽग्नीन् । अर्काञ्छ्रोत्रमयान्—श्रोत्रचितः । ते श्रोत्रेणैवाधीयन्त । श्रोत्रेणाचीयन्त । श्रोत्रेणैषु ग्रहा अगृ-

---

त प्राणानभिसमसूर्च्छत्"(क.८) इत्यन्यत्र पाठभेदः । श्रोत्रेण सृष्टं कर्म प्राणानभिसमसूर्च्छत्, अभिव्याप्नोत् । इयं

तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै श्रोत्रस्य विभूति-रेतावती विसृष्टिरेतावच्छ्रोत्रꣳ षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामे-कैकऽएव तावान्यावानसौ पूर्वः ॥ ७ ॥

( स्त ) तच्छ्रोत्रं कर्मासृजत । तत्प्राणानभिसममूर्च्छदिदमहꣳ संदधम-संदेहमकृत्स्नं वै कर्मऽर्ते प्राणेभ्योऽकृत्स्ना उ वै प्राणाऽऋते कर्मणः ॥ ८ ॥

( स्त ) तदिदं कर्म सृष्टमाविरबुभूषत् । ( त्रि ) निरुक्ततरं मूर्त्ततरं तदा-त्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिꣳशतꣳ सहस्राण्यपश्य-दात्मनोऽग्नीनर्कान्कर्ममयान्कर्मचितस्ते कर्मणैवाधीयन्त कर्मणाऽचीयन्त कर्मणैषु ग्रहाऽअगृह्यन्त कर्मणाऽस्तुवत कर्मणाऽशꣳसन्यत्किंच यज्ञे कर्म क्रियते यत्किंच यज्ञियं कर्म कर्मणैव तेषु तत्कर्ममयेषु कर्मचित्सु कर्म-मयमक्रियत तद्यत्किंचेमानि भूतानि कर्म कुर्वते तेषामेव सा कृतिस्ता-नेवादधति ताꣳश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्ये-तावती वै कर्मणो विभूतिरेतावती विसृष्टिरेतावत्कर्म षट्त्रिꣳशत्सह-स्राण्यग्नयोऽर्कास्तेषामेकैकऽएव तावान्यावानसौ पूर्वः ॥ ९ ॥

---

श्रन्त । श्रोत्रेणास्तुवत । श्रोत्रेणाशंसन्—यत्किञ्च यज्ञे कर्म क्रियते । यत्किञ्च यज्ञियं कर्म श्रोत्रेणैव । तेषु तत् श्रोत्रमयेषु, श्रोत्रचित्सु श्रोत्रमयमक्रियत । तद् यत्किञ्चेमानि भूतानि श्रोत्रेण शृण्वन्ति—तेषामेव सा कृतिः । तानेवादधति, तांश्चिन्वन्ति, तेषु ग्रहान् गृह्णन्ति, तेषु स्तुवते, तेषु शंसन्ति । एतावती वै श्रोत्रस्य विभूतिः, एतावती विसृष्टिः, एतावच्छ्रोत्रं षट्त्रिंशत् सहस्राण्यग्नयोऽर्काः । तेषामेकैक एव तावान्—यावानसौ पूर्वः ॥ ७ ॥

तच्छ्रोत्रं कर्मासृजत । तत् प्राणानभिसममूर्च्छत् । इमं संदेहमसन्देहम । अकृत्स्नं वै कर्म ऋते प्राणेभ्यः । अकृत्स्ना उ वै प्राणाः ऋते कर्मणः ॥ ८ ॥

तदिदं कर्म सृष्टमाविरबुभूषत् । निरुक्ततरम्, मूर्त्ततरम् । तदात्मानमन्वैच्छत् । तत्तपोऽतप्यत । तत्प्रामूर्च्छत् । तत् षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीन्, अर्कान्कर्ममयान्कर्मचितः । ते कर्मणैवाधीयन्त । कर्मणाऽचीयन्त । कर्मणैषु ग्रहा अगृह्यन्त । कर्मणाऽस्तुवत । कर्मणाऽशंसन् । यत्किञ्च यज्ञे कर्म क्रियते—यत्किञ्च यज्ञियं कर्म—कर्मणैव तेषु कर्ममयेषु कर्मचित्सु, कर्ममयमक्रियत । तत्

---

स देवमनुष्याणामपर शरीरमुद्दिश्य समुत्सुको बभूव । स्वयमपरमशरीरं सत् कर्म प्राणानयोन्योन्यमाहृत्य-दधिरुद्धि-व्यतिरेकमुखेनाह—अकृत्स्नं वै कर्म ऋते प्राणेभ्य इति ॥ ८–९ ॥

( स्त ) तत्कर्माग्निमसृजत । ( ता ) आविस्तरां वाऽअग्निः कर्मणः कर्मणा ह्येनं जनयन्ति कर्मणेन्धते ॥ १० ॥

सोऽयमग्निः सृष्टऽआविरबुभूषत् । (त्रि) निरुक्ततरो मूर्त्ततरः स ऽआत्मानमन्वैच्छत्स तपोऽतप्यत स प्रामूर्च्छत्स षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कानग्निमयानग्निचितस्तेऽग्निनैवाधीयन्ताग्निनाचीयन्ताग्नि-नेषु ग्रहाऽ अगृह्यन्ताग्निनाऽस्तुवताऽग्निनाऽशंसन्यत्किंच यज्ञे कर्म क्रियते यत्किंच यज्ञियं कर्माग्निनैव तेषु तदग्निमयेष्वग्निचित्स्वग्निमयमक्रियत तद्यत्किंचेमानि भूतान्यग्निमिन्धते तेषामेव सा कृतिस्तानेवादधाति तांश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शंसन्त्येतावती वाऽअग्नेर्विभूतिरेतावती विसृष्टिरेतावानग्निः षट्त्रिंशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक ऽएव तावान्यावानसौ पूर्वः ॥ ११ ॥

( स्ते ) ते हैते विद्याचित ऽएव । तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते विद्यया हैवैतऽएवंविदश्चिता भवन्ति ॥ १२ ॥

इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ १०-४-१ ॥ ( ९. ३. ) ॥

---

यत्किंचेमानि भूतानि कर्म कुर्वते-तेषामेव सा कृतिस्तानेवादधाति, तांश्चिन्वन्ति, तेषु ग्रहान् गृह्णन्ति, तेषु स्तुवते, तेषु शंसन्ति । एतावती वै कर्मणो विभूतिः, एतावती विसृष्टिः, एतावत्कर्म षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः । तेषामेकैक एव तावान्-यावानसौ पूर्वः ॥ ९ ॥

तत्कर्माग्निमसृजत । आविस्तरां वा अग्निः कर्मणः-कर्मणा ह्येनं जनयन्ति । कर्मणेन्धते ॥ १० ॥

सोऽयमग्निः सृष्ट आविरबुभूषत्-निरुक्ततरः, मूर्ततरः । स आत्मानमन्वैच्छत् । स तपोऽतप्यत । स प्रामूर्च्छत् । स षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीन् । अर्कानग्निमयानग्निचितः । तेऽग्निनैवाधीयन्त । अग्निनाऽचीयन्त । अग्निनेषु ग्रहा अगृह्यन्त । अग्निनाऽस्तुवत । अग्निनाऽशंसन् । यत्किंच यज्ञे कर्म क्रियते । यत्किंच यज्ञियं कर्म-अग्निनैव तेषु तदग्निमयेष्वग्निचित्स्वग्निमयम-क्रियत । तद् यत्किंचेमानि भूतान्यग्निमिन्धते-तेषामेव सा कृतिस्तानेवादधाति । तांश्चिन्वन्ति । तेषु ग्रहान्गृह्णन्ति । तेषु स्तुवते । तेषु शंसन्ति । एतावती वा अग्नेर्विभूतिः । एतावती विसृष्टिः एतावानग्निः षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः-तेषामेकैक एव तावान्-यावानसौ पूर्वः ॥ ११ ॥

ते हैते विद्याचित एव । तान्हैतानेवं विदे सर्वदा सर्वाणि भूतानि चिन्वन्ति । अपि स्वपते । विद्यया हैवैत एवंविदश्चिता भवन्ति ॥ १२ ॥

---

कर्मणाऽग्निसृष्टिं स्पष्टीकरोति-आविस्तरां वा अग्निः कर्मण इति । कर्मणः सकाशादग्नेर्जननात् अग्निरत्यन्ताविस्तरो स्पष्टो दृश्यत इत्यर्थः ॥ १०-११ ॥

एतेषां मनश्चित्प्रभृतीनामग्नीनां ज्ञानवतो विद्यामयत्वेनोदितवत्कानि श्रुतिरित्यादाहानि-ते हैते

अयं वाव लोकऽएषोऽग्निश्चितः । (स्त) तस्याऽपऽएव परिश्रितो मनुष्या यजुष्मत्यऽइष्टकाः पशवः सूददोहाऽओषधयश्च वनस्पतयश्च पुरीषमाहुतयः समिधोऽग्निर्लोकम्पृणा तद्वाऽएतत्सर्व्वमग्निमेवाभिसम्पद्यते तत्सर्व्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनं भूतमेतत्सर्व्वमभिसम्पद्यते ॥ १ ॥

---

चित्याग्नौ लोकदृष्ट्युपासनं ब्राह्मणम् ।

अयं वाव लोक एषोऽग्निश्चितः । तस्याप एव परिश्रितः । मनुष्या यजुष्मत्य इष्टकाः । पशवः सूददोहाः । ओषधयश्च वनस्पतयश्च पुरीषम् । आहुतयः समिधः । अग्निर्लोकम्पृणा । तद्वा एतत्सर्वमग्निमेवाभिसम्पद्यते । तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते । स यो हैतदेवं वेद—लोकम्पृणाम् । एनं भूतमेतत्सर्वमभिसम्पद्यते ॥ १ ॥

---

विद्याचित एवेति । एते मनश्चिदादयो 'विद्याचित एव' विद्ययैव चीयमाना भवन्ति—एवकारश्रुतिः कर्माङ्गत्वं व्यावर्त्तयति । "ता हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते" इति लिङ्गम् । "विद्यया हैवैत एवंविदश्चिता भवन्ति" इति वाक्यं च स्वातन्त्र्यपक्षमुपोद्बलयति ॥ १२ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे पञ्चमेऽध्याये तृतीयं ब्राह्मणम् ॥ ( १० । ५ । ३ ) ॥

उत्तरब्राह्मणे भूम्यादिलोकत्रयादित्यनक्षत्रच्छन्दःसंवत्सरात्मना चित्याग्निरूपेणोपासनीया उच्यन्ते । अत एव लोकादिपरिश्रिद्यजुष्मतीपशुपुरीषसमिदादिनामाऽपधर्मवर्णनमत्र केवलं विद्याविधिशेषत्वेनावगन्तव्यं न शुद्धकर्माङ्गविधित्वे । तथाहि अग्निरहस्ये ब्राह्मणे "विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः" ( क.—१६ ) इत्यनेन श्लोकेन केवलकर्मनिन्दापुरःसरं विद्याप्रशंसा—अयं वाव लोक एषोऽग्निश्चित इति । 'अयं' भूलोक एव 'एषः' 'चितः' 'अग्निः' ध्येयः । अग्निसाम्यधर्मानाह—तस्याप एवेत्यादिना । 'तस्य' भूलोकस्याग्नेः 'आप एव' 'परिश्रितः' समुद्रोदकानि यत्र परिश्रिद्रूपाणीति ध्येयानि, भूमौ वर्तमानमनुष्या यजुष्मत्य इष्टकाः, 'पशवः' 'सूददोहाः' अमृतदोहा अत्रमित्यर्थः । यद्वा "ता अस्य सूददोहसः" ( वा. सं. १२ । ५५ ) इत्यनेन यजुषा निर्वचनं तत्पशव इत्यर्थः । 'ओषधयः' 'वनस्पतयः' एव 'पुरीषम्' आहुतिः—समिद्रूपा । एतस्य पुरीषाहुतेः समित्त्वरूपत्वमुत्तरत्र स्पष्टीकरिष्यते । "अथ यदिष्टं च हुतं चात्र तत्पुरीषं ता आहुतयस्ताः समिधः" ( क. ४ ) इति । बाह्य 'अग्निः' ज्वलन एव 'लोकम्पृणा' इष्टका । यस्माद्भूलोकोऽग्निर्लोकम्पृणेष्टकारूपः—तस्मात् 'एतत् सर्वं' परिश्रिद्यजुष्मत्यादिरूपोदकमनुष्यादिकम् 'अग्निमेवाभिसम्पद्यते' अग्निना सर्वं सम्पन्नं स्वस्वरूपसम्पन्नं भवन्ति । यथा चित्याग्निर्लोकम्पृणेष्टकाभिः सम्पूर्णः । अयमर्थः—भूलोकस्य चित्याग्निरूपपरिज्ञाने समुद्रोदकमनुष्यपशुभोऽवधिवनस्पतिपुरीषाहुतिज्वलनाः परिश्रिद्यजुष्मतीसूददोहापुरीषाहुतिसमिल्लोकम्पृणारूपा ध्येया इति । वेदितुः फलमाह—स यो हैतदेवं वेदेति । एवं भूलोकं चित्याग्निरूपं वेद—स लोकम्पृणाभूतम् 'एनम्' लोकाधिष्ठितमग्निमेव 'सम्पद्यते' तदात्मको भवतीत्यर्थः ॥ १ ॥

( तेऽन्तु ) अन्तुरिक्षथ्ँ हु त्वेवैषोऽग्निश्रितः । ( स्त ) तुस्य द्यावापृथिव्योरेवु सन्धिः परिश्रितः पुरेण हान्तुरिक्षं द्यावापृथिवी संधत्तस्ताः परिश्रितो व्युयाथ्ँसि युजुष्मत्यऽ इष्टका व्वर्षथ्ँ सूददोहा मुरीचयः पुरीषमाहुतयः समिधो व्वायुर्लोकम्पृणा तद्वाऽएतत्सुर्व्वं व्वायुमेवाभिसुम्पद्यते तत्सुर्व्वोऽग्निर्लोकम्पृणामभिसंपद्यते स यो हैतदेवं व्वेद लोकम्पृणामेनं भूतुमेतत्सुर्व्वमभिसंपद्यते ॥ २ ॥

द्यौर्हं त्वेवैषोऽग्निश्रितः । ( स्त ) तस्यापऽ एवु परिश्रितो युथा हु वाऽइदं कोशः सुमुब्जितऽ एवुमिमे लोकाऽ अप्स्वन्तस्तद्याऽइमाँल्लोकान्पुरेणापस्ताः परिश्रितो देवा युजुष्मत्यऽ इष्टका युदेवैतुस्मिँल्लोकेऽन्नं तत्सूददोहा नुक्षत्राणि पुरीषमाहुतयः समिधऽ आदित्यो लोकम्पृणा तद्वाऽएतत्सुर्व्वमादित्यमेवाभिसुम्पद्यते तत्सुर्व्वोऽग्निर्लोकम्पृणामभिसंपद्यते स यो हैतदेवं व्वेद लोम्कपृणामेनंभूतमेतत्सुर्व्वमभिसंपद्यते ॥ ३ ॥

---

अन्तरिक्षं ह त्वेवैषोऽग्निश्रितः । तस्य द्यावापृथिव्योरेव सन्धिः परिश्रितः । परेण हान्तरिक्षं द्यावापृथिवी सन्धत्तः । ताः परिश्रितः । वयांसि यजुष्मत्य इष्टकाः । वर्षम् सूददोहाः । मरीचयः पुरीषम । आहुतयः समिधः । वायुर्लोकम्पृणा । तद्वा एतत्सर्वं वायुमेवाभिसम्पद्यते । तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते । स यो हैतदेवं वेद । लोकम्पृणाम् । एनं भूतमेतत्सर्वमभिसम्पद्यते ॥ २ ॥

द्यौर्ह त्वेवैषोऽग्निश्रितः । तस्याप एव परिश्रितः । यथा ह वाऽइदं कोशः समुब्जितः—एवमिमे लोका अप्स्वन्तः । तद् या इमाँल्लोकान्परेणापस्ताः परिश्रितः । देवा यजुष्मत्य इष्टकाः । यदेवैतस्मिँल्लोकेऽन्नं तत्सूददोहाः । नक्षत्राणि पुरीषम् । आहुतयः समिधः । आदित्यो लोकम्पृणा । तद्वा एतत्सर्वमादित्यमेवाभिसम्पद्यते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते । स यो हैतदेवं वेद । लोकम्पृणाम् । एनं भूतमेतत्सर्वमभिसम्पद्यते ॥ ३ ॥

---

एवमुत्तरे "अन्तरिक्षं ह त्वेवैषोऽग्निश्चित "—इत्यादय "सर्वाणि ह त्वेव भूतानि सर्वे देवा एषोऽग्निश्चित "—इत्यन्ता अष्टौ पर्याया व्याख्येया । यत्र यत्र विशेषः स उच्यते । अन्तरिक्षपर्याये ' द्यावापृथिव्यो- ' ' सन्धि ' ' परिश्रित ' इत्युक्त विशदयति—परेण हान्तरिक्षमिति । अन्तरिक्ष ' परेण ' परस्तात् अन्त इत्यर्थः । यद् द्यावापृथिवी संयुक्तौ भवतः । स सन्धिः परिश्रिद्रूपो ध्येय । अत्र वायुप्राप्तिः फलम् ॥ २ ॥

द्युलोकपर्याये "तस्या आप एव परिश्रित " इत्युक्तम्, तत्समर्थयते—यथा ह वा इदं कोशः समुब्जित इति ।

(तऽ) आदित्यो ह त्वेवैषोऽग्निश्चितः । (स्तु) तस्य दिश एव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यं दिशः समन्तं परियन्ति रश्मयो यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यस्य रश्मयस्तद्यत्परिश्रित्सु यजुष्मतीः प्रत्यर्पयति रश्मींस्तद्दिक्षु प्रत्यर्पयत्यथ यदन्तरा दिशश्च रश्मींश्च तत्सूददोहा अथ यद्दिक्षु च रश्मिषु चान्नं तत्पुरीषं ता आहुतयस्ताः समिधोऽथ यद्दिश इति च रश्मय इति चाख्यायते तल्लोकम्पृणा तद्वा एतत्सर्वं दिश इति चैव रश्मय इति चाख्यायते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनं भूतमेतत्सर्वमभिसंपद्यते ॥ ४ ॥

---

आदित्यो ह त्वेवैषोऽग्निश्चितः । तस्य दिश एव परिश्रितः । ताः षष्टिश्च त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतान्यादित्यं दिशः समन्तं परियन्ति । रश्मयो, यजुष्मत्य इष्टकाः । ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतान्यादित्यस्य रश्मयः । तद् यत्परिश्रित्सु यजुष्मतीः प्रत्यर्पयति–रश्मींस्तद्दिक्षु प्रत्यर्पयति । अथ यदन्तरा दिशश्च रश्मींश्च तत्सूददोहाः । अथ यद्दिक्षु च रश्मिषु चान्नं तत्पुरीषम् । ता आहुतयः । ताः समिधः । अथ यद्दिश इति च रश्मय इति चाख्यायते–तल्लोकम्पृणा । तद्वा एतत्सर्वं दिश इति चैव रश्मय इति चाख्यायते–तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते । स यो ह तदेवं वेद । एनं भूतमेतत्सर्वमभि-सम्पद्यते ॥ ४ ॥

---

भूर्लोकपर्याये सूददोहशब्दः पारश्रित, अत्र तथा न सन्तीति तत्समर्थनेति यथा 'इदम्' इत्यादि 'कोश' 'पेटिका' 'समुच्चय' । सन्निहितो ऽर्थेन–'एवमिमे' 'वतो' 'लोकाः' '' अध्यन्त 'कोशाद्यन्तेन वर्त्तन्ते । तस्मात् 'इमान्' 'वीन्' 'लोकान्' 'परेण' तेषां परस्तान्ना अप परिवेष्ट्य वर्त्तन्त ता पारे-श्रित । अत्रादित्यनाभि पत्नुतम् ॥ ३ ॥

आदित्यपर्याये षष्ट्युत्तरत्रिशतसङ्ख्याका आदित्यमण्डलस्य समन्तात्पत्नात् दिशः पारश्रिदात्मिकाः । तदन्या एव तावत्सङ्ख्यका 'रश्मय' किरणा एव यजुष्मत्य इष्टकाः । संवत्सरस्य षष्ट्युत्तरत्रिशतदिवसानि भिद्यन्ते । अत्रादित्यस्यैकैकदिने एकैका दिक् एकैकश्च रश्मिरायुक्त भवति । अत्र परिश्रित्सु यजुष्मतीश्च निधानम्, दिक्षु रश्मिसमर्पणम् । अथ यद्दिक्षु च रश्मिषु चान्नमिति । दिशां रश्मीनां लोकत्वं तदात्मक-स्थापनार्थम् । अत्र दिशां रश्मीनां मध्यवर्त्तनं सूददोहदोलीरूपम् । लोकम्पृणेष्टकास्थानीयं सम्पाद-यति–अथ यद्दिश इति च रश्मय इति चाख्यायते तल्लोकम्पृणेति । यद्दिश इति रश्मय इत्याख्यान वचनमेव लोकम्पृणात्मकमित्यर्थः । आदित्यमग्नित्वेनोपासकस्य दिग्रश्मिनामत्वं पश्यति यदाह–स यो हैतदेवमिति ॥ ४ ॥

नक्षत्राणि ह त्वेवैषोऽग्निश्चितः । ( स्त्रा ) तानि वा एतानि सप्तविꣳशतिर्नक्षत्राणि सप्तविꣳशतिः सप्तविꣳशतिर्होपनक्षत्राण्येकैकं नक्षत्रमनूपतिष्ठन्ते तानि सप्त च शतानि विꣳशतिश्चाधि षट्त्रिꣳशत्ततो यानि सप्त च शतानि विꣳशतिश्चेष्टका एव ताः षष्टिश्च त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्योऽथ यान्यधि षट्त्रिꣳशत्स त्रयोदशो मासः स आत्मा त्रिꣳशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर एव षट्त्रिꣳश्यौ तद्यत्ते द्वे भवतो द्व्यक्षरꣳ हि शिरोऽथ यदन्तरा नक्षत्रे तत्सूददोहाऽअथ यन्नक्षत्रेष्वन्नं तत्पुरीषं ता ऽआहुतयस्ताः समिधोऽथ यन्नक्षत्राणीत्याख्यायते तल्लोकम्पृणा तद्वा ऽएतत्सर्वं नक्षत्राणीत्येवाख्यायते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनं भूतमेतत्सर्वमभिसम्पद्यते ॥ ५ ॥

---

नक्षत्राणि ह त्वेवैषोऽग्निश्चितः । तानि वा एतानि सप्तविंशतिर्नक्षत्राणि । सप्तविंशतिः सप्तविंशतिर्होपनक्षत्राणि एकैकं नक्षत्रमनूपतिष्ठन्ते । तानि सप्त च शतानि विंशतिश्चाधि षट्त्रिंशत् । ततो यानि सप्त च शतानि विंशतिश्च, इष्टका एव ताः । षष्टिश्च त्रीणि च शतानि परिश्रितः । षष्टिश्च त्रीणि च शतानि यजुष्मत्यः । अथ यान्यधि षट्त्रिंशत्—स त्रयोदशो मासः । स आत्मा । त्रिंशदात्मा । प्रतिष्ठा द्वे । प्राणा द्वे । शिर एव षट्त्रिंशयौ । तद् यत्ते द्वे भवतः । द्व्यक्षरं हि शिरः । अथ यदन्तरा नक्षत्रे तत्सूददोहाः । अथ यन्नक्षत्रेष्वन्नं तत्पुरीषम् । ता आहुतयः । ताः समिधः । अथ यन्नक्षत्राणीत्याख्यायते तल्लोकम्पृणा । तद्वा एतत्सर्वं नक्षत्राणीत्येवाख्यायते—तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते । स यो हैतदेवं वेद । लोकम्पृणाम् एनं भूतमेतत्सर्वमभिसम्पद्यते ॥ ५ ॥

---

नक्षत्रात्मनाभिचिन्तनेनैतावानं कर्तव्यमित्यभिप्रायेण सप्तविंशतेर्नक्षत्राणां मध्ये, एकैकस्य मुख्यनक्षत्रस्य 'सप्तविंशतिः सप्तविंशतिरुपनक्षत्राणि' विद्यन्ते । तत्र सर्वाणि सप्तविंशतिनक्षत्राणि 'उपनक्षत्राणि' च सम्भूय विंशत्यधिकानि सप्तशतानि षट्त्रिंशदधिकानि च सम्पद्यन्ते तत्र विंशत्यधिकसप्तशतसङ्ख्याकानां नक्षत्राणां मध्ये षष्ट्यधिकत्रिशतसङ्ख्याकानि परिश्रितः तावन्ति नक्षत्राणि यजुष्मत्यः । यान्यधिकानि षट्त्रिंशत्सङ्ख्याकानि विद्यन्ते तेषां विभागं विवृणुः सामान्येन तेषां त्रयोदशमासत्वमाह—स त्रयोदशो मास इति । त्रिंशदधि-कसप्तशतनक्षत्रात्मकेष्टकाभिरनुष्ठानेन तत्र मध्यमाहोरात्रस्य त्रयोदशोऽधिक इति मत्वा, अधिकानां षट्त्रिं-शत्सङ्ख्यकानां त्रयोदशमासत्वमुच्यते । तस्यैव विना मासमन्तरान् । तत्र त्रिंशत्सङ्ख्याकानामात्मा मध्यदेहः । द्वे नक्षत्रे प्रतिष्ठा पादरूपेण, पादयोर्द्वित्वं स्फुटम् । 'द्वे' 'नक्षत्रे' प्राणाः चक्षुरादिनामना द्वन्द्वरूपेणावस्थाना-देवमुक्तम् । द्वे नक्षत्रे शिरोरूपम् । षट्त्रिंशादिति षट्त्रिंशत्सङ्ख्यापूरणत्वाभिप्रायेण । शिरसो नक्षत्रद्वयात्मक-त्वमक्षरद्वयसम्पत्तिं—तद्यत्ते द्वे भवतो द्व्यक्षरं हि शिर इति । यदन्तरा नक्षत्रे तत्सूददोहा इति ।

ता वाऽएताः । ( ऽ ) एकविꣳशतिर्बृहत्यऽएकविꣳशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गं लोकमभिसम्पद्यतऽएकविꣳशं च स्तोमं बृहतीं च च्छन्दः ॥ ६ ॥

( इछ ) छन्दाꣳसि ह त्वेवैषोऽग्निश्चितः । ( स्तु ) तानि वाऽएतानि सप्त च्छन्दाꣳसि चतुरुत्तराणि त्रिचानि तेषाꣳ सप्त च शतानि विꣳशतिश्चाक्षराण्यधि षट्त्रिꣳशत्ततो यानि सप्त च शतानि विꣳशतिश्चेष्टका एव ताः पष्टिश्च त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्योऽथ यान्यधि षट्त्रिꣳशत्स त्रयोदशो मासः स ऽआत्मा त्रिꣳशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिरऽएव षट्त्रिꣳश्यौ तद्यत्ते द्वे भवतो व्यक्षरꣳ हि शिरः ॥ ७ ॥

---

ता वा एता एकविंशतिर्बृहत्यः । एकविंशो वै स्वर्गो लोकः । बृहती स्वर्गो लोकः । तदेष स्वर्गं लोकमभिसम्पद्यते । एकविंशं च स्तोमं बृहतीं च छन्दः ॥ ६ ॥

छन्दांसि ह त्वेवैषोऽग्निश्चितः । तानि वा एतानि सप्त छन्दांसि । चतुरुत्तराणि त्रिचानि । तेषां सप्त च शतानि, विंशतिश्चाक्षराण्यधि षट्त्रिंशत् । ततो यानि सप्त च शतानि विंशतिश्च, इष्टका एव ताः । षष्टिश्च त्रीणि च शतानि परिश्रितः । षष्टिश्च त्रीणि च शतानि यजुष्मत्यः । अथ यान्यधि षट्त्रिंशत्—स त्रयोदशो मासः । स आत्मा । त्रिंशदात्मा । प्रतिष्ठा द्वे । प्राणा द्वे । शिर एव षट्त्रिंश्यौ । तद् यत्ते द्वे भवतः । द्व्यक्षरं हि शिरः ॥ ७ ॥

---

द्वयोर्द्वयोर्नक्षत्रयोर्मध्ये मृद्दोहोरूपेण ध्येयम् । "नक्षत्राणीति" पदाख्यान वचन तल्लोकम्पृणास्वरूपेण ध्येयम् । यस्मान्नक्षत्राण्यत्र लोकम्पृणाख्या ततो मुख्यनक्षत्राण्युपनक्षत्राणि च सर्वाणि नक्षत्राणीति एव आख्यायन्ते । नक्षत्रसम्पत्तिः पञ्चमस्य ध्यानस्योक्तम् ॥ ५ ॥

नक्षत्रोपलक्षितसम्पत्त्या सह या बृहत्यात्मना स्तौति—ता वा एता एकविंशतिर्बृहत्य इत्यादि । विंशत्यधिकसप्तशतनक्षत्रावयवनिर्वृत्तय, अतिरिक्ता षट्त्रिंशदैवेति 'एकविंशतिर्बृहत्य' । एकविंशो वै स्वर्गो लोकः । स्वर्गस्यादित्य इति गम्यते, मुखतो वा लोकः स्वर्ग एकविंशतिमहत्याख्यः । तथाच तैत्तिरीयके स्वर्गस्य चैकविंशत्वं तस्यादित्यस्वरूपत्वमाम्नायते—"एकविंशो वा इतः स्वर्गो लोकः स्वर्गं लोकमाप्नोति, असौ वा आदित्य एकविंशः" इति, "बृहती स्वर्गो लोकः" इति । तैत्तिरीयक आदित्यस्य छन्दोमयत्वप्रस्तावे "बृहत्येवादित्योऽभवत्" इति श्रुतम् । स्वर्गो लोको बृहत्यात्मक इत्यर्थः । अथ नक्षत्ररूपया बृहत्यात्मनोपासितुः स्वर्गलोकप्राप्तिफलमित्याह—तदेष स्वर्गं लोकमभिसम्पद्यत एकविंशं च स्तोमं बृहतीं च छन्द इति । एकविंशतिसंख्यासामान्यात् स्तोम एकविंश उच्यते ॥ ६ ॥

छन्दसामग्निरूपेण ध्यानं विधत्ते—छन्दांसि ह त्वेवैषोऽग्निश्चित इति । तानि वा एतानि सप्त छन्दांसि—इत्यादेरयमर्थः—तत्र येषां छन्दसामग्नित्वमुक्तम् । तानि गायत्र्यादीनि सप्त छन्दांसि । तदुचरो-

(स्तु) तस्यै वाऽएतस्यै षट्त्रिंशदक्षरायै बृहत्यै। यानि दश प्रथमान्यक्षराणि सा दशाक्षरैकपदाऽथ यानि विंशतिः सा विंशत्यक्षरा द्विपदाऽथ यानि त्रिंशत्सा त्रिंशदक्षरा विराडथ यानि त्रयस्त्रिंशत्सा त्रयस्त्रिंशदक्षराऽथ यानि चतुस्त्रिंशत्सा चतुस्त्रिंशदक्षरा स्वराडथ यत्सर्वैश्छन्दोभिरयमग्निश्चितस्तदतिच्छन्दास्ताऽ उ सर्वाऽ इष्टकाऽ एवेष्टकेति त्रीण्यक्षराणि त्रिपदा गायत्री तेनैष गायत्रोऽग्निर्मृदापऽ इति त्रीण्यक्षराणि त्रिपदा गायत्री तेनोऽएवैष गायत्रोऽथ यदन्तरा च्छन्दसी तत्सूददोहाऽअथ यच्छन्दःस्वन्नं तत्पुरीषं ताऽ आहुतयस्ताः समिधोऽथ यच्छन्दांसीत्याख्यायते तल्लोकम्पृणा तद्वाऽएतत्सर्वं छन्दांसीत्येवाख्यायते तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते स यो हैतदेवं वेद लोकम्पृणामेनं भूतमेतत्सर्वमभिसंपद्यते ॥ ८ ॥

---

तस्यै वा एतस्यै षट्त्रिंशदक्षरायै बृहत्यै यानि दश प्रथमान्यक्षराणि—सा दशाक्षरैकपदा। अथ यानि विंशतिः—सा विंशत्यक्षरा द्विपदा। अथ यानि त्रिंशत्—सा त्रिंशदक्षरा विराट्। अथ यानि त्रयस्त्रिंशत्—सा त्रयस्त्रिंशदक्षरा। अथ यानि चतुस्त्रिंशत्—सा चतुस्त्रिंशदक्षरा स्वराट्। अथ यत्सर्वैश्छन्दोभिरयमग्निश्चितः—तदतिच्छन्दाः। ता उ सर्वा इष्टका एव। इष्टकेति त्रीण्यक्षराणि, त्रिपदा गायत्री। तेनैष गायत्रोऽग्निः। मृदापः—इति त्रीण्यक्षराणि। त्रिपदा गायत्री। तेनो एवैष गायत्रः। अथ यदन्तरा छन्दसी तत्सूददोहाः। अथ यच्छन्दःस्वन्नं तत्पुरीषम्। ता आहुतयः। ताः समिधः। अथ यच्छन्दांसीत्याख्यायते—तल्लोकम्पृणा। तद्वा एतत्सर्वं छन्दांसीत्याख्यायते—तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते। स यो हैतदेवं वेद। लोकम्पृणाम्। एनं भूतमेतत्सर्वमभिसम्पद्यते॥८॥

---

उत चतुरक्षरात्मिकानि 'त्रिचानि' प्रत्येकं ऋक्त्रयात्मकानि, त्रिचश्चितसंख्यासिद्धये त्रिचानीत्युक्तम्। तत्संख्यामाह—तेषां सप्त च शतानीति। तथा प्रत्येकमृक्त्रयात्मना सप्तानां छन्दसां सम्भूयाक्षरपरिगणने सति विंशत्यधिकानि सप्तशतानि षट्त्रिंशदधिकानि चाक्षराणि भवन्ति। तत्र यानि विंशत्यधिकानि सप्तशतान्यक्षराणि तद्विंशत्यक्षरात्मकेषु, षट्त्रिंशदक्षराणि पादत्रिंश, तानि 'पशुमन्त'। अथावशिष्टानां षट्त्रिंशदक्षराणामात्मादिरूपाणां विभागमाह—त्रिंशदात्मेति। 'आत्मा' मध्यमभागः त्रिंशदक्षरात्मकः, 'प्रतिष्ठा' पादौ द्व्यक्षरात्मकः, 'प्राणाः' चक्षुरादयो द्व्यक्षरा भवन्ति, शिरो द्व्यक्षरं भवति ॥ ७ ॥

एवमभिहितानां षट्त्रिंशदक्षराणां विभागमुक्त्वा तावद्भिरक्षरैर्बृहती सम्पाद्य तां नानाछन्दोमयत्वेन सम्पादयति—तस्यै वा एतस्यै षट्त्रिंशदक्षरायै बृहत्यै इति। तत्र षट्त्रिंशदक्षरायां बृहत्यां यानि प्रथमानि आदिमानि दशाक्षराणि तैर्दशाक्षरा एकपदा विराट् सम्पन्ना। अत्र विराजः पादत्रयं न्यूनमित्येकपदा इत्युक्तं। एवं यानि बृहत्याः प्रथमानि विंशतिरक्षराणि तैर्विंशत्यक्षरा द्विपदा विराट् सम्पन्ना। अथ यानि बृहत्या-

ता वाऽएताः । (ऽ) एकविꣳशतिर्बृहत्य ऽएकविꣳशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेव स्वर्गं लोकमभिसम्पद्यतऽएकविꣳशं च स्तोमं बृहतीं च च्छन्दः ॥ ९ ॥

संवत्सरो ह त्वेवैषोऽग्निश्चितः । (स्तु) तस्य रात्रय ऽएव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्य रात्रयोऽहानि यजुष्मत्य ऽइष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहान्यथ याऽअमूः षट्त्रिꣳशदिष्टकाऽअतियन्ति यः स त्रयोदशो मासऽआत्माऽर्द्धमासाश्च ते मासाश्च चतुर्विꣳशतिरर्धमासा द्वादश मासाऽअथ यदन्तराऽहोरात्रे तत्सूददोहाऽअथ यदहोरात्रेष्वन्नं तत्पुरीषं ताऽआहुतयस्ताः समिधोऽथ यदहोरात्राणीत्याख्यायते तल्लोकम्पृणा तद्वाऽएतत्सर्वमहोरात्राणीत्येवाख्यायते तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते स यो हैतदेवं वेद लोकम्पृणामेनं भूतमेतत्सर्वमभिसंपद्यते ॥ १० ॥

---

ता वाऽएता एकविंशतिर्बृहत्यः एकविंशो वै स्वर्गो लोकः । बृहती स्वर्गो लोकः । तदेव स्वर्गं लोकमभिसम्पद्यते । एकविंशं च स्तोमम् । बृहतीं च छन्दः ॥ ९ ॥

सम्वत्सरो ह त्वेवैषोऽग्निश्चितः । तस्य रात्रय एव परिश्रितः । ताः षष्टिश्च त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतानि सम्वत्सरस्य रात्रयः । अहानि यजुष्मत्य इष्टकाः । ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतानि सम्वत्सरस्याहानि । अथ

---

त्रिपदक्षराणि तेस्त्रिपदस्तस्य विराट् भवन्ति । एवं त्रयस्त्रिंशतासीदेशावदक्षरा विराट् । अथ चतुस्त्रिंशदक्षरैस्ता-
वद्भवति स्वराडाख्यं छन्दः सम्पन्नम् । एवमत्र सा दृष्टैव नानाच्छन्दोरूपेण स्तुता । अतिच्छन्दोरूपमाह-
अथ यत्सर्वैरिति । यस्मात् ' अयमग्निः ' सर्वैर्गायत्र्यादिभिः ' छन्दोभिः ' ' चित ' छन्दसोरधानसमये
तस्मादयमतिच्छन्दा इत्युच्यते चित्याग्निरतिच्छन्दा इति—यत् तेन सर्वा इष्टका अतिच्छन्दोमय इत्युक्तम् ।
इष्टकैव नाम्न्यपि छन्दः सम्पादयति—इष्टकेति त्रीण्यक्षराणि त्रिपदा गायत्रीति । सख्यासाम्यात्—अत
इष्टका गायत्र्यक्षरसंख्याविशेषे इति गायत्र इत्युच्यते । इष्टकाकरणाना मृदसामपि सख्यासाम्यात् गायत्र्यं-
छन्दस्त्वं स्यादग्नेर्गायत्रत्वं सम्पादयति—मृदाप इति त्रीण्यक्षराणीति । अथ च्छन्दोमयाग्नि पूर्वं सूददोहपुरी-
षादिकं सम्पादयति—अथ यदन्तरा च्छन्दसी इति । यदुभयोश्छन्दसोर्मध्यमेव मध्यगतं वा वस्तु तत्सूद-
दोहस्थानीयं, छन्दसीत्याख्यानमेव लोकम्पृणेष्टकास्थानीयम् ॥ ८ ॥

ता वा एता एकविंशतिर्बृहत्य इत्यादिकं पूर्ववद्व्याख्येयम् ॥ ९ ॥

सम्वत्सरस्यात्मनो स्थाने षष्ट्यधिकत्रिशतसंख्याका रात्रय एव परिश्रित इष्टका । तावत्संख्यान्यहानि

ता वाऽएताः । (ऽ) एकविंशतिर्बृहत्यऽ एकविंशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गं लोकमभिसम्पद्यतऽएकविंशं च स्तोमं बृहतीं च च्छन्दः ॥ ११ ॥

(ऽ) आत्मा ह त्वेवैषोऽग्निश्चितः । (स्त) तस्यास्थीन्येव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्यास्थीनि मज्जानो यजुष्मत्यऽइष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्य मज्जानोऽथ याऽअमूः षट्त्रिंशदिष्टकाऽअतियन्ति यः स त्रयोदशो मासऽआत्मा प्राणः स तस्य त्रिंशदात्मन्विधाः प्रतिष्ठायां द्वे प्राणेषु द्वे शीर्षन्द्वे तद्यत्ते द्वे भवतो द्विकपालं हि शिरोऽथ येनेमानि पर्वाणि सन्ततानि तत्सूददोहाऽअथैतत्त्रयं येनायमात्मा प्रच्छन्नो लोम त्वङ्मांसमिति तत्पुरीषं यत्पिबति ताऽआहुतयो यदश्नाति ताः समिधोऽथ यदात्मेत्याख्यायते तल्लोकम्पृणा तद्वाऽएतत्सर्वमात्मेत्येवाख्यायते तत्सर्वोऽग्निर्लोक-

---

या अमूः षट्त्रिंशदिष्टका अतियन्ति । यः स त्रयोदशो मास आत्मा । अर्धमासाश्च ते मासाश्च । चतुर्विंशतिरर्धमासाः, द्वादश मासाः । अथ यदन्तराऽहोरात्रे तत्सूददोहाः । अथ यदहोरात्रेष्वन्नम्–तत्पुरीषम् । ता आहुतयः । ताः समिधः । अथ यदहोरात्राणीत्याख्यायते–तल्लोकम्पृणा । तद्वा एतत्सर्वमहोरात्राणीत्येवाख्यायते–तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते । स यो हैतदेवं वेद । लोकम्पृणाम् । एनं भूतमेतत्सर्वमभिसम्पद्यते ॥ १० ॥

ता वा एता एकविंशतिर्बृहत्यः । एकविंशो वै स्वर्गो लोकः । बृहती स्वर्गो लोकः । तदेष स्वर्गं लोकमभिसम्पद्यते । एकविंशं च स्तोमम्, बृहतीं च छन्दः ॥ ११ ॥

आत्मा ह त्वेवैषोऽग्निश्चितः–तस्यास्थीन्येव परिश्रितः । ताः षष्टिश्च त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्यास्थीनि । मज्जानो यजुष्मत्य इष्टकाः । ताः षष्टिश्चैव

---

यजुष्मत्यः । यजुष्मत्यश्च पुरीषेण सह चतुश्चतुःशतसंख्याका इति चतुर्थाध्याये दृष्टम् ( श. प १०।४।१।१४–१९ ) तत्र षष्ट्यधिकत्रिशतसंख्या मज्जसंख्या ध्येया. । अधिका याः षट्त्रिंशत्संख्याकाः सन्ति—स संवत्सरात्मकस्त्रयोदशमासः स एवार्धमासमासात्मक आत्मा । तच्चतुर्विंशतिरर्धमासरूपाः द्वादशमासरूपाः अहोरात्राण्याख्यायते, तत्सर्वं लोकम्पृणेष्टकात्मकम् ॥ १०–११ ॥

अथेदानीमनेन स्वशरीरमेवाग्निरूपत्वेनोपासनीयमिति विधत्ते—आत्मा ह त्वेवैषोऽग्निश्चित इति । स्वश-रीरस्थाः षष्ट्यधिकत्रिशतसंख्याकान्यस्थीनि परिश्रिद्रूपेणोपासनीयानि । तावत्संख्याका मज्जानो यजुष्मती-

म्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनं भूतमेतत्सर्वम-
भिसम्पद्यते ॥ १२ ॥

ता वा एताः । (ऽ) एकविᳩंशतिर्बृहत्यऽ एकविᳩंशो वै स्वर्गो लोको
बृहती स्वर्गो लोकस्तदेष स्वर्गं लोकमभिसम्पद्यतऽ एकविᳩंशं च स्तोमं
बृहतीं च च्छन्दः ॥ १३ ॥

सर्वाणि ह त्वेव भूतानि । सर्वे देवाऽ एषोऽग्निश्चितऽ आपो वै सर्वे
देवाः सर्वाणि भूतानि ता हैताऽआपऽ एवैषोऽग्निश्चितस्तस्य नाव्याऽ
एव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च

---

त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्य मज्जानः । अथ या अमूः षट्त्रिंशदिष्टका अतियन्ति-यः स त्रयोदशो मास आत्मा-प्राणः सः । तस्य त्रिंशदात्मन्विधा-प्रतिष्ठाया द्वे, प्राणेषु द्वे, शीर्षन् द्वे । तद् यत्ते द्वे भवतः-द्विकपालं हि शिरः । अथ येनेमानि पर्वाणि सन्ततानि-तन्सूददोहाः । अथैतत्त्रयं येनायमात्मा प्रच्छन्नः-लोम, त्वङ्, मासमिति तत्पुरीषम्। यत्पिबति ता आहुतयः । यदश्नाति ताः समिधः । अथ यदात्मेत्याख्यायते-तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते । स यो हैतदेवं वेद । लोकम्पृणाम् । एनं भूतमेतत्सर्वमभिसम्पद्यते ॥ १२ ॥

ता वा एता एकविंशतिर्बृहत्यः । एकविंशो वै स्वर्गो लोकः । बृहती स्वर्गो लोकः । तदेष स्वर्गं लोकमभिसम्पद्यते । एकविंशं च स्तोमं, बृहतीं च छन्दः ॥ १३ ॥

सर्वाणि ह त्वेव भूतानि । सर्वे देवा एषोऽग्निश्चितः । आपो वै सर्वे देवाः । सर्वाणि भूतानि । ता हैता आप एवैषोऽग्निश्चितः । तस्य नाव्या एव परिश्रितः । ताः षष्टिश्च त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्याः समन्तं परियन्ति । ना'''ग उ एव यजुष्मत्य इष्टकाः ।

---

रूपा । अथ या षट्त्रिंशदधिका यजुष्मत्योऽतियन्ति-तासां विभागमाह-सः त्रयोदशो मास आत्मा प्राणः स तस्य त्रिंशदात्मन्विधा इति । 'तस्य शरीरस्थे 'आत्मन्' आत्मनि 'त्रिंशद्विधा' यजुष्मत्यो ध्येया । 'प्रतिष्ठाया' पादयो 'द्वे' इष्टकाद्वयम् । 'प्राणेषु' चक्षुः श्रोत्रादिषु इष्टकाद्वयम् 'शीर्षन्' शिरसि इष्टकाद्वयम् । पूर्वत्र पर्यायेषु त्रिंशदात्मा प्रतिष्ठा 'द्वे' प्राणा 'द्वे' शिर एव षट्त्रिंशदिति । आत्मप्रतिष्ठाप्राणशिरोरूपेणाधिका षट्त्रिंशदुपासनाया इत्युक्तम् । अत्र शरीरे प्राणपादचक्षुरादिशिरसां सद्भावात्तत्रेष्टका ध्येया इति विशेष । सन्ततानि पर्वाण्येव सूददोहा लोमत्वङ्मांसरामा प्रच्छन्न इति नात्रयमेवात्र पुरीषत्वेन ध्येयम् । यत्पिबति ता एव आहुतय । यदश्नाति भक्ष्यादि ता एव समिधो ध्येया । यदात्मेत्याख्यानं तल्लोकम्पृणेष्टकारूपम् ॥ १२ ॥

बृहतीसम्पादनादिकं पूर्ववद्बोद्धव्यम् ॥ १३ ॥

अथाब्रूपेणाग्नेरुपासनविधिसुरतां सर्वदेवभूतात्मकत्वमाह-सर्वाणि ह त्वेव भूतानि सर्वे देवा एषो-

शतान्यादित्यं नाव्याः समन्तं परियन्ति नाव्या उ ह्येव यजुष्मत्य इष्टकास्ताः षट्त्रिंशच्च त्रीणि च शतानि भवन्ति षट्त्रिंशद्ध वै त्रीणि च शतान्यादित्यं नाव्या अभिक्षरन्त्यथ यदन्तरा नाव्ये तत्स्वूददोहा अथ या अमूः षट्त्रिंशदिष्टका अतियन्ति यः स त्रयोदशो मास आत्मा ऽयमेव स योऽयं हिरण्मयः पुरुषः ॥ १४ ॥

( स्त ) तस्यैते प्रतिष्ठे । रुक्मश्च पुष्करपर्णं चापश्चादित्यमण्डलं च स्रुचौ बाहू ताविन्द्राग्नी द्वे स्वयमातृण्णे ऽइयं चान्तरिक्षं च तिस्रो विश्वज्योतिष ऽएता देवता ऽअग्निर्वायुरादित्य ऽएता ह्येव देवता विश्वं ज्योतिर्द्वादशर्तव्याः स संवत्सरः स ऽ आत्मा पञ्च नाकसदः पञ्चपञ्चचूडाः स यज्ञस्ते देवा ऽअथ यद्विकर्णी च स्वयमातृण्णा चाऽइमा पृश्नि-

---

ताः षट्त्रिंश ह वै त्रीणि च शतानि भवन्ति । षट्त्रिंश ह वै त्रीणि च शतान्यादित्यं नाव्या अभिरक्षन्ति । अथ यदन्तरा नाव्ये—तत्सूददोहाः । अथ या अमूः षट्त्रिंशदिष्टका अतियन्ति, यः स त्रयोदशो मासः—आत्माऽयमेव स योऽयं हिरण्मयः पुरुषः ॥ १४ ॥

तस्यैते प्रतिष्ठे—रुक्मश्च पुष्करपर्णं च । आपश्चादित्यमण्डलं च । स्रुचौ बाहू—ताविन्द्राग्नी । द्वे स्वयमातृण्णे । इयं चान्तरिक्षं च तिस्रो विश्वज्योतिषः—एता देवताः । अग्निर्वायुरादित्य एता

---

ऽग्निश्चिन इति । 'सर्वाणि' 'भूतानि' 'सर्वे देवा' अग्नित्वेन ध्येया इत्यर्थः । "आप एव सर्वभूतदेवात्मिका, आपो वा इदं सर्वम्, विश्वाभूतान्यापः, प्राणा वा आपः, पशव आपः, इति सर्वमापः, सर्वा देवता आपः"—इति तैत्तिरीयश्रुतेः । तत्र अप्सु भैरादित्यमण्डलपरिमरवर्तिन्यो 'नाव्याः' नावा तार्याः षट्षष्टिकत्रिशतसंख्याका नाव्या एव परिश्रिन । तावत्संख्याका एव नाव्या यजुष्मत्य इष्टकाः सूर्यमण्डलसमीपे नानासंख्याका नद्य सन्ति इत्याद्युक्त तैत्तिरीयके—" इत सहस्राणि प्रयुतानि नाव्यानामय यः श्वेतो रश्मि." इति । 'नाव्ये अन्तरा यत्' उभयोर्नाव्ययोर्मध्ये यदस्ति तत्सूददोहत्वेन ध्येयम् । अधिकानां षट्त्रिंशत्संख्यानामिष्टकानां विशेषेण विभाग विष्णुपादौ सामान्येनानूद्याह नमह—अथ या अमूः षट्त्रिंशदिष्टका इति । या अधिका इष्टकास्ताः अधोऽन्तु पर्यायेषु संवत्सररूपाण्यवयवत्रयोदशमासात्मिका आपः, अन्याम ना ध्येयानानन्तमात्मेत्यर्थः । आत्मस्वरूपमाह—अयमेव स इति । योऽयमात्मेत्यर्थः । अयमेव हिरण्मयः पुरुष अधिदैव, मण्डलान्तर्वर्ती पुरुषोऽधिज्ञ, प्रथमचितावुपहितपुरुषोऽग्निरूपाणामयमात्मेत्यर्थः ॥ १४ ॥

अधोऽन्तु पर्यायेषु या अमू षट्त्रिंशदित्युक्तं तद्विभागमाह—तस्यैते प्रतिष्ठे इति । योऽयं हिरण्मयः पुरुष आत्मेत्युक्तः तस्याधियज्ञं रुक्मपुष्करपर्णाख्ये अधिदैवतमादित्यमण्डलात्मके द्वे इष्टके 'प्रतिष्ठे'—पादौ

यस्मिंश्चितेऽग्निर्निधीयते सा पञ्चत्रिꣳशी लोकम्पृणायै यजुः षट्त्रिꣳशी सोऽस्यैष सर्व्वस्यान्ततमेवात्मा स ऽएष सर्वासामेषां मध्ये स ऽएष सर्व्वैः कामैः सम्पन्न ऽआपो वै सर्व्वे कामाः स ऽएषोऽकामः सर्व्वकामो न ह्येतं कस्य चन कामः ॥ १५ ॥

( ख ) तदेष श्लोको भवति। विद्यया तदारोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणा यन्ति नाविद्वाꣳसस्तपस्विन ऽइति न हैव तं लोकं दक्षिणाभिर्न तपसाऽनेवंविदश्नुतऽएवं विदाꣳ हैव स लोकः ॥ १६ ॥

---

ह्येव देवताः। विश्वज्योतिर्दशाऽन्याः। सैषा सप्तत्रयः स आत्मा। पञ्च नाकसदः। पञ्च पञ्चचूडाः। स यजुः। ते देवाः। अथ या विकर्णी च स्वयमातृण्णा चाश्मा पृश्निः। यस्मिंश्चितेऽग्निर्निधीयते–सा पञ्चत्रिंशी लोकम्पृणायै। यजुः षट्त्रिंशी। सोऽस्यैष सर्वस्यान्ततमेवात्मा। स एष सर्वासामेषां मध्ये स एष सर्वैः कामैः सम्पन्नः। आपो वै सर्वे कामाः। स एषोऽकामः, सर्वकामो वा। न ह्येतं कस्य चन कामः॥ १५॥

तदेष–श्लोको भवति–" विद्यया तदारोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः " इति। न हैव तं लोकं दक्षिणाभिः, न तपसा, अनेवंविदश्नुते। एवंविदां हैव स लोकः॥ १६॥

---

पञ्चदश्य ध्वरा। बाहुल्येन ध्येयं द्वे स्रुचौ। भूम्यन्तरिक्षात्मके द्वे स्वयमातृण्णे इष्टके। अग्निवाय्वादित्यात्मना ध्येयास्तिस्रो विश्वज्योतिषः। द्वादशमासात्मना ऋतव्येष्टका संवत्सरात्मना ध्येया, यज्ञात्मना देवात्मना च स्तुता 'पञ्च नाकसदः' 'पञ्च पञ्चचूडाः' अष्टमकाण्डे "नाकसदः पञ्चचूडाः स त्रिवृत्पञ्चदशसप्तदशादि ... दिशमभ्यः वसुरुद्रादि ... च ... स्तुताः" (श. प. ८।६।१।१–१२) इति। ततोऽत्र स यजुस्ते देवा इत्युक्तम्, एवं ... पञ्चचूडान्ता एकत्रिंशज्जाता, 'विकर्णी' 'स्वयमातृण्णा' इति द्वे, आश्मीर्षि ... 'अश्मा' 'पृश्नि' एका, एवं चतुस्त्रिंशज्जाता, ... आहवनीयोऽग्नि पञ्चत्रिंशी, लोकम्पृणोपधानयजुश्च षट्त्रिंशी, ... लोकम्पृणानां ... 'लोकम्पृण छिद्रम्पृण' (वा॰ सं॰ १२। ५४) इति तदुपधानमन्त्र एक इति स एव षट्त्रिंशीष्टकेति परिगृह्यते। एवं षट्त्रिंशदिष्टकामयो हिरण्मयः पुरुष आत्मा सर्वभूतदेवात्म- नामरागरूपात्मना ध्येयानां मध्ये वर्तत इत्याह–सोऽस्यैष सर्वस्येति। 'स' 'एष' 'सर्वैः कामैः' 'सम्पन्न' इत्यादिना सर्वासामेतासां मध्यवर्ती आत्मा सर्वकामसम्पन्नः स्वयम् 'अकाम' इत्युक्तम्। एतदेव विवृणोति–नह्येतं कस्य चनेति॥ १५॥

तदमुं आत्मा सर्वैः कामैः सम्पन्नो न कामयतीति मन्त्रवाक्येन प्रतिपादयति–तदेष श्लोको भवति– विद्यया तदारोहन्तीति। मन्त्रस्यायमर्थः–'यत्र' स्वरूपे 'कामाः' सर्वे 'परागताः' निवृत्ताः स्वयम्

ता वाऽएताः । (ऽ) एकविंशतिर्बृहत्यऽएकविंशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गं लोकमभिसम्पद्यतऽएकविंशं च स्तोमं बृहतीं च च्छन्दः ॥ १९ ॥

इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ १०–४–२ ॥ (९. ४.) ॥

कुश्रिर्ह व्वाजश्रवसोऽग्निं चिक्ये । तुᳬ होवाच सुश्रवाः कौश्यो गौतम यदग्निमचैषीः प्राञ्चमेनमचैषीः प्रत्यञ्चमेनमचैषीर्न्यञ्चमेनमचैषीरुत्तानमेनमचैषीः ॥ १ ॥

( यं ) यद्यहैनं प्राञ्चमचैषीः । ( र्थ ) यथा पराचऽआसीनाय पृष्ठतोऽन्नाद्यमुपाहरेत्तादृक्तन्न ते हविः प्रतिग्रहीष्यति ॥ २ ॥

---

ता वा एता एकविंशतिर्बृहत्यः । एकविंशो वै स्वर्गो लोकः । बृहती स्वर्गो लोकः । तदेष स्वर्गं लोकमभिसम्पद्यते । एकविंशं च स्तोमं बृहतीं च छन्दः ॥ १९ ॥

कुश्रिर्ह वाजश्रवसोऽग्निं चिक्ये । तं होवाच सुश्रवाः कौश्यः । गौतम यदग्निमचैषीः–प्राञ्चमेनमचैषीः । प्रत्यञ्चमेनमचैषीः । न्यञ्चमेनमचैषीः । उत्तानमेनमचैषीः ॥ १ ॥

यद्यहैनं प्राञ्चमचैषीः–यथा पराच आसीनाय पृष्ठतोऽन्नाद्यमुपाहरेत्तादृक् तत् । न ते हविः प्रतिग्रहीष्यति ॥ २ ॥

---

ता वा एता एकविंशतिर्बृहत्य इत्यादि पूर्ववद्व्याख्येयम । अत्र नानारूपपरिचितबृहतीनां विंशत्यधिकसमशतमङ्ख्यानां हस्तपुष्करपर्णादीनां लोकम्पृणामनन्तराणां षट्त्रिंशत्सङ्ख्यानां च बृहतीसम्पादन विशेष ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
दशमकाण्डे पञ्चमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( १०–५–४ ) ॥

उत्तरब्राह्मणे चित्याग्नेः सर्वदिग्गतमुखत्वपृथक्शिरस्त्वो निरूहणामाव प्रतिपाद्यते । तत्रैकैकदिग्गतमुखत्वे दोषमुद्भावयितु तान्पक्षान्पुरावृत्तेनानुवदति–कुश्रिर्ह वाजेति । वाजश्रवसोऽपत्य कुश्रिर्नाम 'अग्निं चिक्ये' चितवान् । त कुश्रिं कौश्य कुशगोत्रज सुश्रवा नामोवाच पृष्टवान् । गौतमेति कुश्रे सबुद्धि । यदग्निं चितवानसि तदा किम् 'एनम्' अग्निं 'प्राञ्च' पूर्वमुखम् 'अचैषी', 'प्रत्यञ्च' प्रत्यङ्मुखम् 'न्यञ्च' अवाङ्मुख 'उत्तानम्' ऊर्ध्वमुखमिति चत्वार पक्षा उद्दिष्टा ॥ १ ॥

तेषु यथाक्रम दोषान् स्वयमेव सुश्रवा आह–यद्यहैनं प्राञ्चमिति । यदि प्राङ्मुखोऽग्निश्चित । तर्हि प्राङ्मुखेनापि यजमानेन तत्र हवि प्रक्षेप । यदि प्रत्यङ्मुखम् 'अचैषी' तर्हि कस्माद्धेतो. 'पुच्छं' पश्चिमत.

यद्वु वा एनं प्रत्यञ्चमन्वैषीः । कस्मादस्य तर्हि पश्चात्पुच्छमकार्षीः ॥३॥

( खं ) यद्वु वा एनं न्यञ्चमन्वैषीः । ( खं ) यथा नीचः सन्नस्य पृष्ठेऽन्नाद्यं प्रतिधास्यत्येतादृक्सन्नेव ते हविः प्रतिग्रहीष्यति ॥ ४ ॥

यद्वु वा एनमुत्तानमन्वैषीः । ( नं ) न वा उत्तानं वयः स्वर्गं लोकमभिवहति न त्वा स्वर्गं लोकमभिवक्ष्यत्यस्वर्ग्य उ ते भविष्यतीति ॥ ५ ॥

स होवाच प्राञ्चमेनमन्वैषं प्रत्यञ्चमेनमन्वैषं न्यञ्चमेनमन्वैषमुत्तानमेनमन्वैषं सर्वा अनु दिश एनमन्वैषमिति ॥ ६ ॥

स यत्प्राञ्चं पुरुषमुपदधाति । प्राच्यौ स्रुचौ तस्मादु चीयेतेऽथ यत्प्रत्यञ्चं कूर्ममुपदधाति प्रत्यञ्चि पशुशीर्षाणि तस्मात्तद् चीयतेऽथ यन्न्यञ्चं कूर्म-

---

यद्वु वा एनं प्रत्यञ्चमन्वैषीः—कस्मादस्य तर्हि पश्चात्पुच्छमकार्षीः ॥ ३ ॥

यद्वु वा एनं न्यञ्चमन्वैषीः—यथा नीचः सन्नस्य पृष्ठेऽन्नाद्यं प्रतिधास्यत्येतादृक् सन् । नैव ते हविः प्रतिग्रहीष्यति ॥ ४ ॥

यद्वु वा एनमुत्तानमन्वैषीः—न वा उत्तानं वयः स्वर्गं लोकमभिवहति । न त्वा स्वर्गं लोकमभिवक्ष्यति । अस्वर्ग्य उ ते भविष्यतीति ॥ ५ ॥

स होवाच—प्राञ्चमेनमन्वैषम् । प्रत्यञ्चमेनमन्वैषम् । न्यञ्चमेनमन्वैषम् । उत्तानमेनमन्वैषम् । सर्वा अनु दिश एनमन्वैषमिति ॥ ६ ॥

स यत्प्राञ्चं पुरुषमुपदधाति—प्राच्यौ स्रुचौ तस्माद् चीयेते । अथ यत्प्रत्यञ्चं कूर्ममुपदधाति—प्रत्यञ्चि पशुशीर्षाणि तस्मात्तद् चीयन्ते । अथ न्यञ्चं कूर्ममुपदधाति—न्यञ्चि पशुशीर्षाणि,

मुपदधाति न्यञ्चि पशुशीर्षाणि नीचीरिष्टकास्तन्न्यङ् चीयतेऽथ यदुत्तानं पुरुषमुपदधात्युत्ताने स्रुचाऽउत्तानमुलूखलमुत्तानामुखां तदुत्तानश्चीयतेऽथ यत्सर्वाऽअनु दिशः परिसर्पमिष्टकाऽउपदधाति तत्सर्वतश्चीयते ॥ ७॥
( अर्धप्रपाठकः कंडिका संख्या ॥ ३८ ॥ )

( तेऽथ ) अथ ह कोशा धावयन्तः । ( न्तो ) निरूढशिरसमग्निमुपाधावयाञ्चक्रुस्तेषाꣳ हैकऽउवाच श्रीर्वै शिरः श्रियमस्य निरौहीत्सर्वज्यानिं ज्यास्यतऽइति स ह तथैवास ॥ ८ ॥

---

नीचीरिष्टकाः । तत् न्यङ् चीयते । अथ यदुत्तानं पुरुषमुपदधाति—उत्ताने स्रुचा उत्तानमुलूखलम्, उत्तानामुखां तदुत्तानश्चीयते । अथ यत्सर्वा दिशः परिसर्पमिष्टका उपदधाति । तत्सर्वतश्चीयते ॥ ७ ॥

अथ ह कोशा धावयन्तो निरूढशिरसमग्निमुपाधावयाञ्चक्रुः । तेषां हैक उवाच—श्रीर्वै शिरः, श्रियमस्य निरौहीत् । सर्वज्यानिं ज्यास्यते—इति । स ह तथैवास ॥ ८ ॥

---

पुरुषस्य स्रुचोश्च प्राङ्मुखत्वेनोपधानादग्नेः प्राङ्मुखत्वेन चयनं जातम् । कूर्मस्य पशुशीर्षाणां प्रत्यक्त्वेनाधोमुखत्वेन चोपधानात्प्रत्यक्त्वमधस्त्वं च, अग्रे इष्टकानां नीचीनत्वेनोपधानं नाम अनुक्तेऽस्मादग्निनिष्ठत्वादित्यादिविधानमुपरिभागे दर्शनं पशुशीर्षोपधाने पुरुषस्यापि स्रुचोरुलूखलोखयोश्चोत्तानत्वेनोपधानादग्ने ऊर्ध्वं चयनं सिद्धमित्यर्थः । अथ यत्सर्वा अनु दिशः—इत्यस्यायमर्थः—'परिसर्पम्' परिसृप्य । णमुल् प्रत्ययः । अनन्यासाधारणपदस्थिर्नादित्यादिवदन्यादिषु सर्वत उपधानमिति अग्नेः सर्वतश्चयनं निष्पन्नमित्यर्थः ॥ ७ ॥

अथ पक्षिरूपस्य चित्याग्नेरिष्टकोपधानक्रमेण कूर्मपशुशिरः परोक्षम्—आहवनीयाग्निरेव प्रत्यक्षं शिरः—न तु पशुपुच्छवत् पृथक् शिरसः करणमिति वक्तुं पृथक्करणस्य पुराकल्पकथनेन निन्दति—अथ ह कोशा धावयन्तो निरूढशिरस इति । 'कोशा' नाम—ऋषयः 'धावयन्तः' आविश्याय गच्छन्तः याजयन्तः 'अग्निं' 'निरूढशिरसम्' 'उपाधावयाञ्चक्रुः' । यस्य कस्य चन यजमानस्य गृहे शिरः पृथक् चिन्वन्ति । कात्यायनेनापि शिरसः पृथक्पृथक्त्वस्यासौ निरूपितो विधते । "शिरसो निरूहणं न विद्यत इत्यपरम्" इति । 'तेषाम्' इत्यादिना तन्निराकरणम् । तेषां तथा चिन्वतां कोशानां याजयितॄणां मध्ये 'एकः' उक्तवान् । किमिति तदाह—शिरो नाम 'श्रीः' । शिरसः श्रीत्वम् सर्वदेवाश्रयणादिति षष्ठ काण्डादौ ( श॰ प॰ ६ । १ । १ । ४—७ ) प्रतिपादितम् । अस्य यजमानस्य श्रियं शिरः निरौहीत् पृथक्कृतमकार्षीत् । ऋत्विग्जनं इत्यध्याहारः । अतोऽयं पृथक् शिरसो निरूहणेन यजमानम् श्रीरेवमेव पृथक् कृता । अतोऽयं यष्टा 'सर्वज्यानिं' 'ज्यास्यते' सर्वथा क्षीणो भविष्यतीति—स ह तथैवास इति वाक्येन श्रुतिः स्वयमृषिणा कोशैस्तथा पृथक्करणेन यजमानोऽपि तथा निःश्रीकः भवतीति तन्मतनिन्दनेनोक्तवती ॥ ८ ॥

( प्राऽथ ) अथ हैकऽ उवाच। प्राणा वै शिरः प्राणानस्य निराहीत्क्षिप्रेऽमुं लोकमेष्यतीति सऽ उ ह तथैवास ॥ ९ ॥

( सो ) ऊर्ध्वो वा ऽएषु ऽएतच्चीयते। यद्दर्भस्तम्बो लोगेष्टकाः पुष्करपर्णꣳ रुक्मपुरुषौ स्रुचौ स्वयमातृण्णा दूर्वेष्टका द्वियजू रेतःसिचौ विश्वज्योतिर्ऋतव्येऽअषाढा कूर्मोऽथ हास्यैतदेव प्रत्यक्षतमाꣳ शिरो यदग्निरिते ऽग्निर्निधीयते तस्मान्न निरूहेत् ॥ १० ॥

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ १०-४-३ ॥ ( ५. ५. ) ॥
इति पञ्चमोऽध्यायः समाप्तः ॥ १०-५ ॥

---

अथ हैक उवाच-प्राणा वै शिरः, प्राणानस्य निराहीत्। क्षिप्रेऽमुं लोकमेष्यतीति। स उ ह तथैवास ॥ ९ ॥

ऊर्ध्वो वा एष एतच्चीयते। यत्-दर्भस्तम्बः, लोगेष्टकाः, पुष्करपर्णम्, रुक्मपुरुषौ, स्रुचौ, स्वयमातृण्णा, दूर्वेष्टका, द्वियजू, रेतःसिचौ, विश्वज्योतिः, ऋतव्ये, अषाढा, कूर्मः। अथ हास्यैतदेव प्रत्यक्षतमां शिरो यदग्निरिते-अग्निर्निधीयते। तस्मान्न निरूहेत् ॥ १० ॥

---

अथ शिरस प्राणरूपत्वमेव मत तत्रैव दोषान्तर समुच्चिनोति-अथ हैक उवाच प्राणा वै शिर इति। 'शिर' नाम प्राणास्तदाधारत्वात् यतोऽग्नेः पृथक्करणेन यजमानात् प्राणाना पृथक्करणम्, अत स क्षिप्रेण वेगेनामु परलोकमेष्यति न तु चिरजीविष्यतीति 'एक उवाच'। स उ ह तथैवास इति। निन्दाप्रदर्शनाय वाक्योपन्यास. ॥ ९ ॥

एव शिरस पृथक्करणपक्षो निन्दित. यद्येनर्हि यज्ञिरूपोऽग्नि शिरोरहित. स्यादितीमामाशङ्का परिहर्तुमिष्टकानिव परोऽक्षमपरोऽक्ष च शिर. सम्पादयति-ऊर्ध्वो वा एष एतच्चीयत इति। 'एष.' अग्निः 'ऊर्ध्वश्चीयते' तदुत्तरोत्तरक्रमेणोर्ध्व उन्नतश्चित। यथा निष्ठत. पुरुषस्य पादबाह्वादयोऽवयवा उत्तरोत्तरक्रमेणावस्थिता. सतो मूर्धान्त यति एव चास्य चित्याग्नेरवयवरूपेष्टकानिवेश दर्शयति-यद्दर्भस्तम्बो लोगेष्टका इत्यादिना। दर्भस्तम्बादिदूर्वेष्टकापर्यन्तमुत्तरोत्तर क्रमेणोपहितानां मध्ये पुष्करपर्णरुक्मौ पादरूपौ पुरुषो हिरण्मयो हृदयान्तवर्ती, 'स्रुचौ' बाहुद्वयस्थानीये, 'स्वयमातृण्णा' कण्ठात्मिका, 'दूर्वेष्टका' लोमरूपा, एव 'द्वियजूरेत सिचौ विश्वज्योतिर्ऋतव्ये अषाढा' इत्येता इष्टका यथायथमवयवरूपा. कल्पनीयाः 'कूर्मः' मूर्धस्थानीयः, एवमिष्टकोपधानक्रमेण पादादिमूर्धान्तपरिकल्पनया कूर्म एव परोक्षशिर इत्युक्तम्। अथ प्रत्यक्षतम शिरो दर्शयति-अथ हास्यैतदेव प्रत्यक्षतमां शिर इति। यद्यपि कूर्मः परोक्षो मूर्धा, अथापि तस्योपरीष्टकोपधानादनन्तर्हितो मूर्धेति ये मन्यन्ते तान् प्रति प्रत्यक्षतमशिरोवर्णन

चित्याग्नेरुपरि निहितोऽग्निराहवनीय एव प्रत्यक्षतमां सर्वैरप्यन्त दृष्ट शिर इत्यर्थ । यत कूर्म आहवनीयोऽग्निश्च चित्याग्ने शिर ' तस्मान्न निरूहेत् ' पृथक् शिर इष्टकाभिर्न कुर्यादित्यर्थ ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
दशमकाण्डे पञ्चमेऽध्याये पचम ब्राह्मणम् ॥ ( १०—५—५ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वर ॥ १ ॥

ब्रह्माण्ड गोसहस्र कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताम्भोधीन्पचसीरीत्रिदशतरुलताधेनुगौर्स्वर्गभूमी ।
रत्नोस्रा हेमवाजिद्विपमहितरथौ सायणि मिश्रणार्यो,
व्यश्राणीद्विश्वचक्र प्रथितत्रिभिमहाभूतयुक्त घट च ॥
धान्याद्रिं धन्यजन्मा तिलमचमतुल स्वर्णज वर्णमुख्य,
कार्पासीय कृपावान्गुडकृतमजडो राजत राजपूज्य ।
आज्योत्थ प्राज्यजन्मा लवणजमतुला शार्करं चान्निजा,
रत्नाढ्यो रत्नरूप गिरिमकृत मुदा पात्रसात्सिङ्गणार्य ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणा
चार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
दशमकाण्डे पञ्चमोऽध्याय समाप्त ॥ ( १०—५ ) ॥



# अथ षष्ठेऽध्याये प्रथमं ब्राह्मणम् ।

# चतुर्थप्रपाठके च चतुर्थं ब्राह्मणम् ।



अथ हैतेऽरुणे । (७८) औपवेशौ समाजग्मुः सत्ययज्ञः पौलुषिर्महाशालो जाबालो बुडिल ऽआश्वतराश्विरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यस्ते ह वैश्वानरे समासत तेषाᳬं ह वैश्वानरे न समियाय ॥ १ ॥

ते होचुः । (३) अश्वपतिर्वाऽअयं कैकेयः सम्प्रति वैश्वानरं वेद तं गच्छामेति ते हाश्वपतिं कैकेयमाजग्मुस्तेभ्यो ह पृथगावसथान्पृथगपचितीः पृथक्साहस्रान्त्सोमान्प्रोवाच ते ह प्रातरसंविदाना ऽएव समित्पाणयः प्रतिचक्रमिरऽउप त्वायामेति ॥ २ ॥

---

वैश्वानराग्न्युपासन ब्राह्मणम् ।

अथ हैतेऽरुणे औपवेशौ समाजग्मुः–सत्ययज्ञः पौलुषिः, महाशालो जाबालः, बुडिल आश्वतराश्विः, इन्द्रद्युम्नो भाल्लवेयः, जनः शार्कराक्ष्यः । ते ह वैश्वानरे समासत । तेषां ह वैश्वानरे न समियाय ॥ १ ॥

ते होचुः–अश्वपतिर्वा अयं कैकेयः सम्प्रति वैश्वानरं वेद । तं गच्छामेति । ते हाश्वपतिं कैकेयमाजग्मुः । तेभ्यो ह पृथगावसथान्, पृथगपचितीः, पृथक्साहस्रान्त्सोमान्प्रोवाच । ते ह प्रातरसंविदाना एव समित्पाणयः प्रतिचक्रमिरे । उप त्वायामेति ॥ २ ॥

---

स यत्पशुना यक्ष्यमाणः । ( ण८ ) एकारत्निं यूपङ्कुरुत ऽइममेव तेन लोकञ्जयत्यथ यद्द्व्यरत्निमन्तरिक्षलोकमेव तेन जयत्यथ यत्त्र्यरत्निन्दिवमेव तेन जयत्यथ यच्चतुररत्निन्दिश ऽ एव तेन जयति स वा ऽएष त्र्यरत्निर्वैव चतुररत्निर्वा पशुबन्धयूपो भवत्यथ यो ऽत्र ऊर्ध्वः सौम्यस्यैव सोऽध्वरस्य ॥ १ ॥

तदाहुः । ( स्थं ) यजेदाज्यभागौ ना ३ ऽ इति यजेदित्याहुश्चक्षुषी वा ऽ एते यज्ञस्य यदाज्यभागौ किमृते पुरुषश्चक्षुर्भ्याᳪं स्यादिति यावद्वै भागिनᳪं स्वेन भागधेयेन न निर्भजन्त्यनिर्भक्तो वै स तावन्मन्यते ऽथ यदेव तᳪं स्वेन भागधेयेन निर्भजन्त्यथैव स निर्भक्तो मन्यते स यन्ने-

---

अशनायुका हास्य भार्या भवन्ति । तस्मात्तादृगमन्नाद्यकामो यूपं न कुर्वीत । अथ य एष आनत उपरिष्टादुपनतो मध्ये । सोऽन्नाद्यस्य रूपम् । तस्मात्तादृगमन्नाद्यकामो यूपं कुर्वीत ॥ ३ ॥

स यत्पशुना यक्ष्यमाण एकारत्निं यूपं कुरुते । इममेव तेन लोकं जयति । अथ यत् द्व्यरत्निम्, अंतरिक्षलोकमेव तेन जयति । अथ यत् त्र्यरत्निं, दिवमेव तेन जयति । अथ यच्चतुररत्निं, दिश एव तेन जयति । स वा एष त्र्यरत्निर्वैव चतुररत्निर्वा पशुबंधयूपो भवति । अथ योऽत्र ऊर्ध्वः, सौम्यस्यैव सोऽध्वरस्य ॥ १ ॥

तदाहुः-यजेदाज्यभागौ ना३ इति । यजेदित्याहुः । चक्षुषी वा एते यज्ञस्य । यदाज्यभागौ । किमृते पुरुषश्चक्षुर्भ्यां स्यादिति । यावद्वै भागिनं स्वेन भागधेयेन न निर्भजंति ।

---

इथ यूपार्हं वृक्ष तल्लक्षणं चाभिधाय, अथ यूपप्रमाणमाह-स यत् पशुना यक्ष्यमाण इत्यादिना । 'तेन' एकारत्नियूपस्वीकारेण 'इम लोकं जयति' । पर न स्वर्गमित्यर्थः । एव 'द्व्यरत्निमन्तरिक्षलोकमेव' । एव त्र्यरत्निचतुररत्निभ्यां द्युलोक एव दिशश्च जयति । तस्माल्लोकविशेषकामस्य इत्त्वात् त्र्यरत्निं चतुररत्निं वा कुर्यात् । ननु-इत परमपि अरत्निप्रमाणविशेषोऽस्ति स किं नोपादीयते इत्याकाङ्क्षायां तस्य सोमयागविषयतामाह-अथ योऽत्र ऊर्ध्व इति ॥ १ ॥

इथ यूपस्योपादेयप्रमाणमभिधाय तत्राज्यभागयोरवश्यकर्तव्यतामाह-तदाहुर्यजेदाज्यभागौ ना३ इतीर्नि । आज्यभागौ हि यज्ञस्य चक्षुषी । यथा 'चक्षुर्भ्यामृते' इत्योरभावे 'पुरुष' 'किं स्यात् ?' न किञ्चिद्भवति । इत्यन्वेतैवयर्थः । तस्मादवश्यमनुष्ठेयौ इत्यभिप्रायः । अथ पशुविशसनविषयप्रश्नमध्ये "अस्मा इत्र

तद्धोताऽन्वाहास्ना रक्षः सथुँसृजताहिति तदेनथुँ स्वेन भागधेयेन निर्भजति ॥ २ ॥

( त्ये ) एतद्वै पशोः संज्ञप्यमानस्य । हृदयथुँ शुक्समवैति हृदयाच्छू-लन्तद्वे सह हृदयेन पशुथुँ श्रपयन्ति पुनः पशुथुँ शुगनुविष्यन्देत पार्श्वतऽ एवैनत्काष्ठे प्रवृह्य श्रपयेत् ॥ ३ ॥

( द्र ) उपस्तृणीतऽ आज्यम् । ( न्तु ) तत्पृथिव्यै रूपङ्करोति हिरण्य-

---

अनिर्भक्तो वै स तावन्मन्यते । अथ यदैव तं स्वेन भागधेयेन निर्भजन्ति । अथैव स निर्भक्तो मन्यते । स यत्रैतद्धोताऽन्वाह । "अस्ना रक्षः संसृजतात्"-इति । तदेनं स्वेन भागधेयेन निर्भजति ॥ २ ॥

एतद्वै पशोः संज्ञप्यमानस्य हृदयं शुक् समवैति । हृदयाच्छूलम् । तद् ये सह हृदयेन पशुं श्रपयंति । पुनः पशु शुगनुविष्यन्देत । पार्श्वत एवैनत्काष्ठे प्रवृह्य श्रपयेत् ॥ ३ ॥

उपस्तृणीत आज्यम्, तत्पृथिव्यै रूपं करोति । हिरण्यशकल्ममवदधाति, तदग्ने रूपं करोति ।

---

संसृजतात्" इति य प्रैषभाग तेन रक्षोभ्य स्वभागदानेन कृत भवतीति लोकदृष्टान्तेन दर्शयति-यावद्वै भागिनमित्यादिना । 'यावद्वै भागिनं' भागार्हं 'स्वेन भागधेयेन' तदीय भागो दत्त इति वा तस्य तदीय भाग प्रयच्छत इति वा अनियानपुरुषर 'न निर्भजति' निर्गतभाग कुर्वंति । 'स' पुमान् 'अनिर्भक्तो वै' भागाभिष्कान्तो न भवति खलु । अनिर्भक्त अहमिति 'तावन्मन्यते' सतृर्ग मन्यते । 'अथ' तदनन्तरमेव 'यदैव' खलु लोभादिना 'न' भागार्हं पुरुष 'स्वेन भागधेयेन निर्भजति' निर्गतभाग न कुर्वंति । 'अथैव' तदा खलु । 'स' तु भागान्निर्भक्तोऽ भागनिर्गतोऽ इत्यात्मान 'मन्यते' । तस्माल्लोके एव दर्शनात् 'स होता' 'यत्र' यदा एतद्विदानीं 'अन्वाह' । कथ ! "अस्ना रक्ष संसृजतात्" इति । 'अस्ना' पशुरक्तेन 'रक्ष' राक्षस 'संसृजतादिति' ब्रूयात् । 'तदा एन स्वेन भागधेयेन निर्भजति' अनेन इत्यादेयागविषयप्रैषवत् एतत् प्रैषवाक्यमपि अवश्य वक्तव्यमिति उक्त भवति ॥ २१ ॥

अथ पशुश्रपणप्रकारविषय कश्चिद्विशेषमाह एतद्वै पशोरित्यादिना । 'संज्ञप्यमानस्य' पशो 'शुक्' मरणान्त्य शोक 'हृदय' मभ्याप्नोति, तस्य सुखदु खोपलम्भनस्थानत्वात् । तत 'हृदयात्' हृदयशूल 'समवैति' । तस्मात् 'हृदयेन सह' हृदयशूलयुक्ताया पाके सति कृत्स्न पशुश्रयर पुन पुन शुक प्राप्नोति, तस्मात्तद्दोषपरिहाराय-पार्श्वत एवैनदिति । 'एनत्' हृदयपुण्डरीक 'काष्ठे' शूलाकारे 'प्रवृह्य' प्रविद्ध कृत्वा कुम्भ्यां पार्श्वत एव 'श्रपयेत्' ॥ ३ ॥

अथ वसावदानस्य पश्चात्तत्प्रकार सम्पादयन् पृथिव्यादित्रैलोक्यात्मना अग्न्यादित्यात्मना च प्रशंसति-

---

१-शूले हृदय प्रवृह्य शामित्रे श्रपयति । का. श्रौ सू ६ । १६२ । इति ।

२-वसया पात्र्यन्तुपस्तीर्य हिरण्यमवधाय वसामवदायान्त्यग्निस्था छागस्य वसायं मरुतोऽनुब्रूहीति । हिरण्यमवधाय द्विरभिघारण प्रेषे । का. श्रौ सू ६ । १६३—१६२ । इति ।

शकलमुवदधाति तदग्ने रूपङ्करोति व्पामुवदधाति तदन्तरिक्षस्य रूपङ्करोति हिरण्यशकलमुवदधाति तदादित्यस्य रूपङ्करोत्यथ यदुपरिष्टादभिघारयति तद्दिवो रूपङ्करोति सा वाऽ एषा पञ्चावत्ता व्पा भवति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः सम्वत्सरस्य तस्मात्पञ्चावत्ता व्पा भवति ॥ ४ ॥

इति चतुर्थप्रपाठके दशमं ब्राह्मणम् ॥ ११-४-१० ॥ ( ७. ४. ) ॥

सप्तमोऽध्यायश्च समाप्तः ॥ ( ११ । ७ ) ॥

---

वपामवदधाति, तदन्तरिक्षस्य रूपं करोति । हिरण्यशकलमवदधाति तदादित्यस्य रूपं करोति । अथ यदुपरिष्टादभिघारयति, तद्दिवो रूपं करोति । सा वा एषा पञ्चावत्ता वपा भवति । पाङ्क्तो यज्ञः, पाङ्क्तः पशुः, पञ्चर्तवः संवत्सरस्य, तस्मात्पञ्चावत्ता वपा भवति ॥ ४ ॥

---

उपस्तृणीत आज्यमित्यादिना । धानाकरम्भादिपञ्चद्रव्यसाध्यत्वात् ' यज्ञ पाङ्क्त ' । लोमत्वङ्मांसास्थिमज्जारूपपञ्चधातुमयत्वात् ' पशु पाङ्क्त ' । सुगममन्यत् ॥ ४ ॥

इति श्रीमायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे सप्तमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ११ । ७ । ४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वर ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनककलतुलापूरुषौ स्वर्णगर्भं,
सप्ताम्भोधीन्पृथ्वीन्त्रिदशतरुलताधेनुसौवर्णभूमी ।
रत्नोस्त्रं स्वर्णवाजिद्विपमहितरथौ मातृभिः सिद्धगार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविभिमहाभूतयुक्तं घटं च ॥
धन्याद्रिं धन्यजन्मा तिलभवमतुलं स्वर्णजं वर्णमुख्यं,
कार्पासीयं कृपावानुदञ्चनमजडो राजतं राजपुङ्गः ।
आज्यौघं प्राज्यजन्मा लवणमनृणः शार्करं चारुतेजा,
रत्नाढ्यो रत्नरूपं गिरिमहह मुदा पात्रसात्सिद्धगार्य. ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे सप्तमोऽध्याय समाप्त ॥ ( ११ । ७ ) ॥

# अथाष्टमेऽध्याये प्रथमं ब्राह्मणम् ।
# चतुर्थप्रपाठके च एकादशं ब्राह्मणम् ।



तद्यथा ह वै । ( वाऽ ) इदᳪ रथचक्रं वा कौलालचक्रम्वा प्रतिष्ठितङ्क्रन्देदेवᳪ हैवेमे लोकाऽ अध्रुवाऽअप्रतिष्ठिताऽ आसुः ॥ १ ॥

स ह प्रजापतिरीक्षाञ्चक्रे । कथन्न्विमे लोका ध्रुवाः प्रतिष्ठिताः स्युरिति सुऽ एभिश्चैव पर्व्वतैर्नदीभिश्चेमामदृᳪहद्वयोभिश्च मरीचिभिश्चान्तरिक्षञ्जीमूतैश्च नक्षत्रैश्च दिवम् ॥ २ ॥

( ᳪ ) स महऽ इति व्याहरत् । ( त्र ) पशवो वै महस्तस्माद्यस्यैते बहवो भवन्ति भूयिष्ठमस्य कुले महीयन्ते बहवो ह वाऽअस्यैते भवन्ति भूयिष्ठᳪ हास्य कुले महीयन्ते तस्माद्येनमायतनाद्धायेरन्वा प्र वा याप्रयेयुरग्निहोत्रᳪ हुत्वा महऽ इत्युपतिष्ठेत प्रति प्रजया पशुभिस्तिष्ठति नायतनाच्च्यवते ॥ ३ ॥

इति चतुर्थप्रपाठके एकादशं ब्राह्मणम् ॥ ११।४।११ ॥ ( ८-१ ) ॥

---

अग्निहोत्रे महउपस्थानम् ।

तद्यथा ह वा इदं रथचक्रं वा कौलालचक्रं वा प्रतिष्ठितं क्रंदेत् । एवं हैवेमे लोका अध्रुवा अप्रतिष्ठिता आसुः ॥ १ ॥

स ह प्रजापतिरीक्षांचक्रे । कथं न्विमे लोका ध्रुवाः प्रतिष्ठिताः स्युरिति । स एभिश्चैव पर्वतैर्नदीभिश्चेमामदृंहत् । वयोभिश्च मरीचिभिश्चान्तरिक्षम् । जीमूतैश्च नक्षत्रैश्च दिवम् ॥ २ ॥

स मह इति व्याहरत् । पशवो वै महः । तस्माद्यस्यैते बहवो भवन्ति । भूयिष्ठमस्य कुले महीयंते । बहवो ह वा अस्यैते भवंति । भूयिष्ठं हास्य कुले महीयंते । तस्माद्येनमायतनाद्धायेरन्

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अग्निहोत्रे कर्मणि मह इत्युपस्थानं वक्तुं तदर्थं कर्त्यनिमित्तं त्रिगतु आख्यायिकामाह—तद्यथा ह वा इदमित्यादिना । यथा लोके रथादिचक्रं आलम्बनकाष्ठादिरहित्येन भूमाववस्थितं सत् चलति । 'एवमिमे' त्रय 'लोका' 'अप्रतिष्ठिता आसु' ॥ १ ॥

तस्य परिहारोपाय प्रजापतिर्विचिन्त्य 'नदीभि' 'पर्वतैश्च' उर्वीं, पक्षिभि रश्मिभिश्च 'अन्तरिक्षम्,' मेघैर्नक्षत्रैश्च 'दिव,' दृढीचकार ॥ २ ॥

'स' तथा दृढान् दृष्ट्वा 'मह' इत्युवाच । तत्र मह शब्दार्थमाह—पशवो वै मह इति । उक्तमर्थं लोकप्रसिद्ध्या प्रमाणयति—तस्माद्यस्यैते बहव इति । यत एभि पशुभि 'महीयन्त'। अत 'एते'

चत्वारो ह वाऽ अग्नयः । (ऽ) आहितऽ उद्धृतः प्रहृतो विहृतोऽयमेव लोकऽ आहितोऽन्तरिक्षलोकऽ उद्धृतो द्यौः प्रहृतो दिशो विहृतोऽग्निरेवाहितो वायुरुद्धृतऽ आदित्यः प्रहृतश्चन्द्रमा विहृतो गार्हपत्यऽ एवाहितऽ आहवनीयऽ उद्धृतोऽथ यमेतमाहवनीयात्प्राञ्चम्प्रणयन्ति स प्रहृतोऽथ यमेतमुदञ्चं पशुश्रपणायाहरन्ति यश्चोपयड्भ्यः स विहृतस्तस्मात्प्रहार्य्येऽग्नौ पशुबन्धेन यजेत ॥ १ ॥

इति चतुर्थप्रपाठके द्वादशं ब्राह्मणम् ॥ ११-४-१२ ॥ ( ८. २. ) ॥

---

वा, प्र वा यापयेयुः । अग्निहोत्रं हुत्वा मह इत्युपतिष्ठेत । प्रति प्रजया पशुभिस्तिष्ठति । नायतना-च्च्यवते ॥ ३ ॥

## अग्नेश्चातुर्विध्याभिधायकं ब्राह्मणम् ।

चत्वारो ह वा अग्नयः । आहितः, उद्धृतः, प्रहृतः, विहृतः । अयमेव लोक आहितः । अन्तरिक्षलोक उद्धृतः । द्यौः प्रहृतः । दिशो विहृतः । अग्निरेवाहितः । वायुरुद्धृतः । आदित्यः प्रहृतः । चंद्रमा विहृतः । गार्हपत्य एवाहितः । आहवनीय उद्धृतः । अथ यमेतमाहवनीयात्प्रांचं प्रणयन्ति स प्रहृतः । अथ यमेतमुदंचं पशुश्रपणायाहरंति यं चोपयड्भ्यः स विहृतः । तस्मात्प्रहार्येऽग्नौ पशुबन्धेन यजेत ॥ १ ॥

---

' महः ' । उक्तार्थज्ञानं प्रशंसति—चहवो ह वा इति । एते भवन्ति परत्र इत्यर्थः । इदानीं मह इत्युपस्थाने विधत्ते—तस्मायदेनामिति । इममग्निं ' आयतनात् ' स्वस्थानात् ' वावेतन् ' किंचिद्दूरमेव चक्रुः । ' प्र वा यापयेयु ' आयतनादन्यत्र गमयेयुर्वा । तदा ' अग्निहोत्रं हुत्वा ' ' मह इत्युपतिष्ठेत '। तथा सति सोऽग्निः प्रतिष्ठितो भवति । यजमानोऽपि प्रजादिभिः प्रतिष्ठितो भवति । न प्रच्युतो भवति । अथवा ' महः ' इत्युपस्थानविधानात् फलप्रदर्शनपरमिदं वाक्यम् । तस्मिन्पक्षे एवमुक्तविधिना उपस्थानकर्तारं ' आयतनात् ' स्वगृहक्षेत्रादेः सकाशात् । गतमन्यत् ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादश-काण्डेऽष्टमेऽध्याये प्रथमं ब्राह्मणम् ॥ ११।८।१ ॥

अथाहवनीयात्प्राक्प्रहृते उत्तरवेदिके अग्नौ पशुयागः कर्तव्य इति विधातुं अग्नेराहितादिभेदेन चातुर्विध्यं दर्शयति—चत्वारो ह वा अग्नय इत्यादिना । अन्वाधानेन हुत्वा नूतनमुत्पाद्य स्थापितोऽग्निः ' आहितः ' । उद्धरणात्स्थापित ' उद्धृत ' । प्राक्प्रणयनात्स्थापित ' प्रहृत '। इतस्ततो विहरणात् ' विहृत. ' । उक्तमाहितादिचतुष्टयं भूरादात्मना अग्न्यादात्मना च स्तौति—अयमेव लोक इत्यादिना । भूरादीना-मग्न्यादीनां आहितादिरूपत्वं वदतैतानां पूर्वं पूर्वं प्रति उत्तरस्योत्तरस्य उपर्युपरि वर्तमानत्वं साम्यम् । इदानीं आहितादीनां अभिधेयमर्थं स्वयमेव विवृणोति—गार्हपत्य एवाहित इत्यादिना । पशुश्रपणार्थो यः अग्निः स

तदाहुः । किन्देवत्यऽ एष पशुः स्यादिति प्राजापत्यः स्यादित्याहुः प्रजापतिर्वाऽएतमग्रेऽभ्यपश्यत्तस्मात्प्राजापत्यऽ एवैष पशुः स्यादिति ॥ १ ॥

( त्य ) अथोऽअप्याहुः । सौर्य्यऽ एवैष पशुः स्यादिति तस्मादेतस्मिन्नस्तमिते पशवो बध्यन्ते बध्नन्त्येकान्यथा गोष्ठमेकऽ उप समायन्ति तस्मात्सौर्य्यऽएवैष पशुः स्यादिति ॥ २ ॥

(त्य) अथोऽअप्याहुः । (रे) ऐन्द्राग्नऽ एवैष पशुः स्यादित्येते वै देवतेऽअन्वन्ये देवा यद्यार्तो यजते पारयतऽ एव यदि महसा यजते पारयतऽ एव तस्मादैन्द्राग्नऽ एवैष पशुः स्यादिति ॥ ३ ॥

पशुदेवताविकल्पाभिधायकं ब्राह्मणम् ।

तदाहुः-किंदेवत्य एष पशुः स्यादिति । प्राजापत्यः स्यादित्याहुः । प्रजापतिर्वा एतमग्रेऽभ्यपश्यत् । तस्मात्प्राजापत्य एवैष पशुः स्यादिति ॥ १ ॥

अथो अप्याहुः । सौर्य एवैष पशुः स्यादिति । तस्मादेतस्मिन्नस्तमिते पशवो बध्यन्ते । बध्नन्त्येवान्यथा गोष्ठम् एक उप समायन्ति । तस्मात्सौर्य एवैष पशुः स्यादिति ॥ २ ॥

अथो अप्याहुः । ऐन्द्राग्न एवैष पशुः स्यादिति । एते वै देवते अन्वन्ये देवाः । यद्यार्तो यजते पारयत एव । यदि महसा यजते पारयत एव । तस्मादैन्द्राग्न एवैष पशुः स्यादिति ॥ ३ ॥

शामित्र, यत्र गुदकाण्डहोमार्थ. स ' शिक्त. ' । उप समीपे अग्न्यागारानन्तर यत्र्व्या गुदहोमा ' उपयजः ' । तदर्थं इत इत्यर्थ । तदर्थमेव नामित तत्प्रयोजनमाह—तस्मात् महार्येऽग्नौ पशुबन्धेन यजेतेति । 'महार्ये' उत्तरवेदिकै इत्यर्थ. ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डेऽष्टमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ११ । ८ । २ ॥

अथास्य पशो प्रजापति सूर्य इन्द्राग्नी चेति अयो देवा विकल्पिता इति दर्शयितु क्रमेण त त पक्षं सोपपत्तिकमाह—तदाहुः किंदेवत्य एष पशुः स्यादित्यादिना । प्रजापतिना आदौ दृष्टवात् अस्य पशोः प्रजापतिर्देवतेति केचिदाहुः ॥ १ ॥

अपरे सूर्ये अस्तमिते पशूनां स्वस्वस्थाने बन्धनदर्शनात् सर्वेषां स्वस्वस्थाने प्राप्तेश्च हेतोः सूर्यायत्तत्वादित्वात् ' सौर्य एव ' इत्याहुः ॥ २ ॥

अन्ये तु इन्द्राग्न्यो सर्वदेवतासामान्यात् स्तोत्रेणेन यागं कृतवता क्रमेणाग्निनायकत्वात् महसः प्रापकत्वाच्च पशोरिन्द्राग्नी एव देवते इत्याहुः ॥ ३ ॥

---

१—ऐन्द्राग्न सौर्यं प्राजापत्यो वा यमिच्छेत् । का. श्रौ. सू. ६ । ८० ।

प्राणऽ एव पशुबन्धः । ( स्तु ) तस्माद्यावज्जीवति नास्यान्यः पशूनामीष्टे बद्धा ह्यस्मिन्नेते भवन्ति ॥ ४ ॥

स ह प्रजापतिरग्निमुवाच । यजै त्वया त्वाऽऽलभाऽ इति नेति होवाच वायुम्ब्रूहीति स ह वायुमुवाच यजै त्वया त्वाऽऽलभाऽ इति नेति होवाच पुरुषम्ब्रूहीति स ह पुरुषमुवाच यजै त्वया त्वाऽऽलभाऽ इति नेति होवाच पशून्ब्रूहीति स ह पशूनुवाच यजै युष्माभिरा वो लभाऽ इति नेति होचुश्चन्द्रमसम्ब्रूहीति स ह चन्द्रमसमुवाच यजै त्वया त्वाऽऽलभाऽ इति नेति होवाचादित्यम्ब्रूहीति स हादित्यमुवाच यजै त्वया त्वाऽऽलभा इति तथेति होवाच यऽ उ तऽ एते नार्चीकमन्त किमु मऽ एतेषु स्यादिति यद्यत्कामयेथाऽ इति तथेति तमालभत सोऽस्यायम्पशुरालब्धः संज्ञप्तोऽश्वयत्तमेताभिराप्रीभिराप्रीणात्तद्यदेनमेताभिराप्रीभिराप्रीणात्तस्मादाप्रियो नाम तस्मादु पशुᳫँ संज्ञप्तं ब्रूयाच्छेतानु मुहूर्तमिति स यावन्तमश्वमेधेनेष्ट्वा लोकञ्जयति तावन्तमेतेन जयति ॥ ५ ॥

---

प्राण एव पशुबन्धः । तस्माद्यावज्जीवति । नास्यान्यः पशूनामीष्टे । बद्धा ह्यस्मिन्नेते भवन्ति॥४॥

स ह प्रजापतिरग्निमुवाच । यजै त्वया त्वाऽऽलभा इति । नेति होवाच । वायुं ब्रूहीति । स ह वायुमुवाच । यजै त्वया त्वाऽऽलभा इति । नेति होवाच । पुरुषं ब्रूहीति । स ह पुरुषमुवाच । यजै त्वया त्वाऽऽलभा इति । नेति होवाच । पशून् ब्रूहीति । स ह पशूनुवाच । यजै युष्माभिरा वो लभा इति । नेति होचुः । चन्द्रमसं ब्रूहीति । स ह चन्द्रमसमुवाच । यजै त्वया त्वाऽऽलभा

---

पशुबन्धस्य प्राणात्मकता तत्प्राणस्य पशुना आर्तिहेतुना समर्थयते—प्राण एव पशुबन्ध इति । तस्मात् पशो प्राणाभिमानित्वात् स पशुबन्धयाजी यावन्तं कालं 'जीवति' 'अस्य' यजमानस्य 'पशूनाम्' 'नान्य' तस्कराद्दि स्वामी भवति । किं तु 'अस्मिन्' सबद्धा एव 'एते' पशव 'भवन्ति' । तस्मात् प्राणरूपता युक्ता ॥ ४ ॥

विहितस्य पशो उक्तप्राणरूपतोपपादनाय तस्यैव अग्न्यादिषड्देवतामयत्वोपपादनाय च आख्यायिकामाह—स ह प्रजापतिरग्निमुवाचेत्यादिना । पुरा किल 'प्रजापतिरग्निमुवाच' । किमिति ? यजै त्वयेति । त्वां पशुं कृत्वा 'यजै' इति । तस्यैव व्याख्यानम्—त्वाऽऽलभै इति । पशुभूतस्य तव आलम्भं करिष्यामीति स प्रजापतिना पृष्टोऽग्निः 'नेति होवाच' निराकरणार्थं । हेत्यनेन पुरावृत्तं द्योत्यते । एवं निराकुर्वन्नग्निः अन्ते आदित्य एव पशुर्भविष्यतीति अमुमर्थं मनसि कृत्वा 'वायुं ब्रूहि' इत्युवाच । एवं वायुपुरुषपशुचन्द्रा प्रजापतिना पशुभावाय पृष्टा स्वं स्वं प्रतिषिध्य उत्तरमुत्तरं पृष्टेत्यूचु । अथ तेषु निरा-

ताँश्चिन्न विन्देदपि स्वयमेवानुपरिक्राममनुप्राण्यात्स सर्वमायुरेत्या हैव जरायै जीवति ॥ ६ ॥

स प्राणमेवाग्नेरादत्त । तस्मादेष नानुपन्मातो नानुपन्वालितो ज्वलत्यात्तो ह्यस्य प्राणऽआ ह वै द्विषतो भ्रातृव्यस्य प्राणन्दत्ते यऽ एवं वेद ॥ ७ ॥

रूपमेव वायोरादत्त । तस्मादेतस्य ठेलयतऽ इवैवोपशृण्वन्ति न त्वेनं पश्यन्त्यात्तꣳ ह्यस्य रूपमा ह वै द्विषतो भ्रातृव्यस्य रूपन्दत्ते यऽएवं वेद ॥ ८ ॥

---

स्तदधात् । तस्मादु पुत्रं जातमकृत्तनाभिं पंच ब्राह्मणान् ब्रूयादित्येनमनुप्राणितेति । यद्युनान्न विन्देत् । अपि स्वयमेवानुपरिक्राममनुप्राण्यात् । स सर्वमायुरेति । आ हैव जरायै जीवति ॥ ६ ॥

स प्राणमेवाग्नेरादत्त । तस्मादेष नानुपध्मातो नानुपज्वालितो ज्वलति । आत्तो ह्यस्य प्राणः । आ ह वै द्विषतो भ्रातृव्यस्य प्राणं दत्ते । य एवं वेद ॥ ७ ॥

रूपमेव वायोरादत्त । तस्मादेतस्य ठेलयत इवैवोपशृण्वंति । न त्वेनं पश्यति । आत्तं ह्यस्य रूपम् । आ ह वै द्विषतो भ्रातृव्यस्य रूपं दत्ते । य एवं वेद ॥ ८ ॥

---

प्राणनेन 'अदधात्' स्थापितवन्ति । तथा 'दक्षिणा दिक्' 'व्यान' इत्युक्त्वा 'अनुप्राणन्' तेन 'व्यानमस्मिन्नदधात्' । एवं प्रतीच्युदीच्यूर्ध्वाऽऽख्यास्तिस्रोऽपि दिशः क्रमेण 'अपान उदान समान' च 'तस्मिन्' अस्थु । प्रसंगात् किंचित्पुरुषार्थं प्रयोगमाह—तस्मादु पुत्रं जातमकृत्तनाभिमिति । नाभिच्छेदनात्पूर्वं पंच ब्राह्मणान् "एष एनमनुप्राणित" 'इति ब्रूयात्' । इतिशब्देन निरुक्त प्रकारः प्रदर्श्यते । पंच ब्राह्मणान् पंच दिशु अवस्थाप्य प्राच्यादिक्रमेण प्राणोऽसीत्युक्त्वा शिशोरुपरि श्वासं प्रक्षिपेदित्यर्थः । ब्राह्मणानामलाभे कथमिति तत्राह—यद्यु तानिति । ब्राह्मणालाभे स्वपित्रैव सर्वत्र परिक्रम्योक्तप्रकारं कुर्यात् । एवं कृते सति शिशु 'सर्वं' शतसंवत्सरलक्षणम् 'आयुरेति' च 'आ हैव जरायै जीवति' जरापर्यन्तं जीवतीत्यर्थः । अनेन प्राण एव वायुरिति अभिभावना प्रदर्शिता भवति ॥ ६ ॥

"दिशु स एतेषु स्यात्" इति आदिशेन उक्तं सति "वायुरामयेथा" इति प्रजापतिना यत् प्रार् दत्तम्, तस्य स्वीकारं दर्शयति—स प्राणमेवाग्नेरादत्तेत्यादिना । प्राण आत्तोऽग्नेरिति वाय निर्धीयत इति । तत्र लिंगमाह—तस्मादेष इति । तस्मादप्राणत्वादेव अग्निरनुपध्मातो मुखस्थेन वायुनाऽप्रेर्यमाण तथा काष्ठादिना उपसन्नमप्रज्ज्वलनादिरहितः 'न ज्वलति' । अत अग्निस्थाने प्राण आदिशेन स्वीकृत इति आ ह वै द्विषत इति । वेदितुः फलकथनम् ॥ ७ ॥

चित्तमेव पुरुषस्यादत्त । तस्मादाहुर्देवचित्तन्त्वाऽवतु मा मनुष्यचित्तमित्यात्तꣳ ह्यस्य चित्तमा ह वै द्विषतो भ्रातृव्यस्य चित्तन्दत्ते यऽएवं वेद ॥ ९ ॥

चक्षुरेव पशूनामादत्त । तस्मादेते चाक्ष्यमाणाऽ इवैव न जानन्त्यथ यदैवापश्यन्त्यथ जानन्त्यात्तꣳ ह्येषाञ्चक्षुरा ह वै द्विषतो भ्रातृव्यस्य चक्षुर्दत्ते यऽ एवम्वेद ॥ १० ॥

भामेव चन्द्रमस आदत्त । तस्मादेनयोः सदृशयोः सतोर्नेतरश्चन्द्रमा भात्यात्ता ह्यस्य भाऽआ ह वै द्विषतो भ्रातृव्यस्य भान्दत्ते यऽ एवं वेद तद्यदादत्त तस्मादादित्यः ॥ ११ ॥

इति चतुर्थप्रपाठके त्रयोदशं ब्राह्मणम् ॥ ११-४-१३ ॥ ( ८. ३. ) ॥

---

चित्तमेव पुरुषस्यादत्त, तस्मादाहुः, देवचित्त त्वाऽवतु, मा मनुष्यचित्तमिति । आत्त ह्यस्य चित्तम् । आ ह वै द्विषतो भ्रातृव्यस्य चित्त दत्ते, य एवं वेद ॥ ९ ॥

चक्षुरेव पशूनामादत्त, तस्मादेते चाक्ष्यमाणा इवैव न जानन्ति । अथ यदैवापश्यन्ति । अथ जानन्ति । आत्त ह्येषां चक्षुः । आ ह वै द्विषतो भ्रातृव्यस्य चक्षुर्दत्ते, य एवं वेद ॥ १० ॥

भामेव चन्द्रमस आदत्त तस्मादेनयोः सदृशयोः सतोर्नेतरश्चन्द्रमा भाति । आत्ता ह्यस्य भाः । आ ह वै द्विषतो भ्रातृव्यस्य भा दत्ते । य एवं वेद । तद्यदादत्त, तस्मादादित्यः ॥ ११ ॥

---

केशिगृहपतीनामु ह । सम्राड्दुघाᳬ शार्दूलो जघान स ह स सत्त्रिणऽ आमन्त्रयाञ्चक्रे केह प्रायश्चित्तिरिति ते होचुर्नेह प्रायश्चित्तिरस्ति खण्डिकऽएवौद्भारिरस्य प्रायश्चित्तिम्वेद सुऽउ तऽएतादृक्चैव कामयतेऽतश्च पापीयऽइति ॥ १ ॥

स होवाच । संग्रहीतर्युङ्ग्धि मेऽस्यन्त्स्यामि स यद्यह मे वक्ष्यति समाप्स्यामि यद्यु मा मारयिष्यति यज्ञविकृष्टमनुविकृक्ष्यऽइति ॥ २ ॥

स ह युक्त्वा ययावाजगाम । तᳬ ह प्रतिख्यायोवाच यन्वेतान्येवाजिनानि मृगेषु भवन्त्युयेषाम्पृष्टीरपि शीर्ष्णि पचामहे कृष्णाजिनम्मे ग्रीवास्वाबद्धमित्येव मेऽमथयोऽप्युपरस्यन्तᳬ श्मिति ॥ ३ ॥

अथ पशुप्रायश्चित्तीयाः स्तुतिहोमाः ।

केशिगृहपतीनामु ह सम्राड्दुघा शार्दूलो जघान । सह स सत्रिण आमन्त्रयाञ्चक्रे. केह प्रायश्चित्तिरिति । ते होचुः-नेह प्रायश्चित्तिरस्ति । खण्डिक एवौद्भारिरस्य प्रायश्चित्तिं वेद । स उ त एतादृक चैव कामयते । अतश्च पापीय इति ॥ १ ॥

स होवाच-संग्रहीतर्युङ्ग्धि मे । स्यन्त्स्यामि । स यद्यह मे वक्ष्यति । समाप्स्यामि । यद्यु मा मारयिष्यति । यज्ञ विकृष्टमनुविकृक्ष्य इति ॥ २ ॥

स ह युक्त्वा ययौ । आजगाम । तं ह प्रतिख्यायोवाच । यन्वेतान्येवाजिनानि मृगेषु

अथ स्तुत्याख्यान् होमान् पशुप्रायश्चित्ततया विधातुं आख्यायिकामाह-केशिगृहपतीनामु हेत्यादिना । पुरा किल केशिनो नाम राजानः सत्रयागमनुतिष्ठन्त गृहपतय आसुः । तदा 'सम्राड्दुघां' प्रवर्ग्यदोहनार्थां गां 'शार्दूलः' दुष्टमृगः 'जघान' । तेन च सह स सत्रिणः 'ऋत्विजः' 'आमन्त्रयाञ्चक्रे' । कथमिह धर्म-धुग्हननविषये 'का प्रायश्चित्तिरिति' तेन पृष्टास्ते नेह प्रायश्चित्तिरस्तीति उक्त्वा प्रायश्चित्तज्ञमकथयन् । उद्भारिपुत्रः 'खण्डिक एवास्य प्रायश्चित्तं' जानाति । 'स' 'उ' 'एतादृक्' एतादृशमेव 'कामयते' । कीदृशमिति तदाह-अतश्च पापीय इति । अत्यन्तं पापयुक्तं गोहत्यादोषयुक्तमित्यर्थः । तस्मात्तमेव पृच्छेति ॥ १ ॥

अथ गुरुत्वेन प्रमाणभूतं केशिराज स्वसारथिमुवाच-हे रथ 'युङ्ग्धि' योजय । 'स्यन्त्स्यामि' गमिष्यामि । 'स' ह खण्डिकः 'यदि अह मे वक्ष्यति' प्रायश्चित्तिं तर्हि 'समाप्स्यामि' सत्त्रम् । अथ प्रायश्चित्तिकथनमकृत्वा निराकरिष्यति । तदा 'विकृष्टं' विकारं प्राप्तं 'यज्ञमनु' अहमपि 'विकृक्ष्ये' विकारं प्राप्स्ये ॥ २ ॥

'स ह' स्यन्दनं सारथिना संयोज्य खण्डिकसमीपं 'ययौ' । सोऽपि खण्डिकः 'तं' केशिनं 'आजगाम' । गत्वा च विकृतं केशिनं 'प्रतिख्याय' निराकृत्य स्वयमेव प्रथमं 'उवाच' । हे केशिन् ! त्वया यत् धर्मदुघाया

नेति होवाच । सम्राड्ढुवाऽइ मे भगवः शार्दूलोऽवधीत्स यद्वह मे वक्ष्यसि समाप्स्यामि यद्यु मा मारयिष्यसि यज्ञं विक्रुष्टमनुविक्रक्ष्यऽइति ॥४

स होवाच । ( चा ) आमंत्रणीयान्वामंत्रयाऽ इति तान्हामंत्र्योवाच यद्यस्मै वक्ष्याम्यमुष्यैवेदम्प्रजा भविष्यति न मम लोकी त्वहम्भविष्यामि यद्यु वाऽ अस्मै न वक्ष्यामि ममैवेदम्प्रजा भविष्यति नामुष्य लोकी त्वसौ भविष्यतीति ते होचुर्मा भगवो वोचोऽयम्वाव क्षत्रियस्य लोकऽ इति स होवाच वक्ष्याम्येवामूर्व्वै रात्रयो भूयस्यऽ इति ॥ ५ ॥

---

भवन्ति । अथैषा पृष्टीरपि शीर्षं पचामहे । कृष्णाजिनं मे ग्रीवास्वाबद्धमिति । एव मेदमधृषोऽभ्यवस्यन्तु ३ मिति ॥ ३ ॥

नेति होवाच । सम्राड्ढुवा वै मे भगवः शार्दूलोऽवधीत् । स यद्वह मे वक्ष्यसि । समाप्स्यामि । यद्यु मा मारयिष्यसि । यज्ञं विक्रुष्टमनुविक्रक्ष्य इति ॥ ४ ॥

स होवाच–आमंत्रणीयान्वामन्त्रया इति । तान् हामन्त्र्योवाच । यद्यस्मै वक्ष्यामि, अमुष्यैवेदं प्रजा भविष्यति, न मम, लोकी त्वहं भविष्यामि । यदु वा अस्मै न वक्ष्यामि ममैवेद प्रजा भविष्यति, नामुष्य, लोकी त्वसौ भविष्यतीति । ते होचुः–मा भगवो वोच' । अयं वाव क्षत्रियस्य लोक इति । स होवाच–वक्ष्याम्येव, अमूर्वै रात्रयो भूयस्य इति ॥ ५ ॥

---

गो अजिनं ग्रीवासु धृतम् । ' एतान्येव ' एतादृशान्येव ' अजिनानि मृगेषु भवन्ति ' उपलभ्यन्ते । ' अथैषां ' मध्ये ' पृष्टी ' अपरशरीरा मृगीरपि ' शीर्षं ' शिरश्च कृत्वा ' पचामहे ' । तदीयं ' कृष्णाजिनं मे ग्रीवासु ' कण्ठे ' आबद्ध ' ' इति ' ' अभ्यवस्यन्तु ' हन्तु ' मा ' मां ' इदमदृष धार्ष्ट्यं कृतवान् ॥ ३ ॥

एवं तेन खाण्डिक्येनोक्ते ' स ' ' राजा ' नेति होवाच ' अयमभिप्रायो न भवति । किंतु हे भगवन् ! सम्राड्दुघा ' ' शार्दूलोऽवधीत् ' । तस्मात् ' स ' त्व ' यद्वह ' यदेव ' मे ' ' वक्ष्यसि ' तस्य समाधानोपायं तर्हि यज्ञं ' समाप्स्यामि ' । अथ ' यदि उ ' ' मा ' मां ' मारयिष्यसि ' तदा यज्ञं न समाप्स्यामि । तथा सति त्वया स यज्ञो विक्रुष्टो भविष्यति । तं ' विक्रुष्टं यज्ञमनु ' अहमपि ' विक्रक्ष्ये ' इत्युवाच ॥ ४ ॥

' स होवाच ' एवमुक्तः खाण्डिक्यः कथनविषये सन्दिहानः सन् ' आमंत्रणीयान् ' आप्तान् ' तत् ' क्षिप्रं ' आमंत्रये ' आह्वये इत्युवाच । तानामन्त्रणीयान् ' आमन्त्र्य ' इत्थमुवाच । हे विचारकाः ! शृणुत । ' यदि अस्मै ' केशिने ' वक्ष्यामि ' प्रायश्चित्तविधिं तर्हि ' अमुष्य ' केशिन ' एव ' ' इदं ' सर्वं ' प्रजा ' भविष्यति, ' न मम ' भविष्यति प्रजा । विद्याप्रातये अस्मत्तोऽपगतत्वात् । परं ' अहं ' ' लोकी ' विद्याप्रदानसुकृतेन परलोकवानेव भविष्यामि । यदि ' अस्मै न वक्ष्यामि ' । तर्हि ' ममैव ' ' प्रजा भविष्यति ' । ' नामुष्य ' राज्ञः, प्रजाफलसाधकविद्याया अप्राप्तत्वात् । न पुनः ' लोकी ' लोकवान् ' असौ ' राजा ' भविष्यति ' । कर्मवैगुण्यस्य अपरिहार्यत्वमापन्नत्वात् । एवं विरोधे उद्भाविते सति ' ते ' आप्ता ' ऊचु

तस्मा उ ह हैतदुवाच । स्पृणीहि त्वाऽन्याग्राजनेति ब्रूतात्सा ते सम्राड्दुघा स्यादिति चन्द्रास्ते मनः स्पृणोमि स्वाहा सूर्यास्ते चक्षुः स्पृणोमि स्वाहा वातात्ते प्राणान्त्स्पृणोमि स्वाहा दिग्भ्यस्ते श्रोत्रꣳ स्पृणोमि स्वाहाऽद्भ्यस्ते लोहितꣳ स्पृणोमि स्वाहा पृथिव्यै ते शरीरꣳ स्पृणोमि स्वाहेत्यथान्याग्राजनेति ब्रूतात्सा ते सम्राड्दुघा स्यादिति ततो ह वै स उत्ससाद केशिनीर्हैवेमा अप्येतर्हि प्रजा जायन्ते ॥ ६ ॥

इति चतुर्थप्रपाठके चतुर्दशं ब्राह्मणम् ॥ ११-४-१४ ॥ ( ८.४. ) ॥

इति चतुर्थः प्रपाठकः समाप्तः ॥ ११-४ ॥

कण्डिकासंख्या ॥ १०२ ॥ अष्टमोऽध्यायश्च समाप्तः ॥ ११-८ ॥

अस्मिन्काण्डे कण्डिकासंख्या ॥ ४२७ ॥

इति माध्यन्दिनीये शतपथब्राह्मणे संग्रहापरनामधेयम् अष्टाध्यायीनामकमेकादशं काण्डं समाप्तम् ॥ ११ ॥

---

तस्मा उ हैतदुवाच—स्पृणीहि त्वाऽन्याग्राजनेति ब्रूतात् । सा ते सम्राड्दुघा स्यादिति । " चन्द्रास्ते मनः स्पृणोमि स्वाहा । सूर्यास्ते चक्षुः स्पृणोमि स्वाहा । वातात्ते प्राणान् स्पृणोमि स्वाहा । दिग्भ्यस्ते श्रोत्रं स्पृणोमि स्वाहा । अद्भ्यस्ते लोहितं स्पृणोमि स्वाहा । पृथिव्यै ते शरीरं स्पृणोमि स्वाहा " इति । अथान्याग्राजनेति ब्रूतात् । सा ते सम्राड्दुघा स्यादिति । ततो ह वै स उत्ससाद । केशिनीर्हैवेमा अप्येतर्हि प्रजा जायन्ते ॥ ६ ॥

ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम् ।



हरिस्वामिभाष्यसमेतम् ।

तत्र

## द्वादशं काण्डम् १२ ।



# अथात्र शतपथब्राह्मणस्य परिशेषाख्यो भागः ।

## अथ मध्यमसौत्रामण्युभयनामकं द्वादशं काण्डम् ।

### प्रथमोऽध्यायः प्रारभ्यते ।

तत्र प्रथमं ब्राह्मणम् ।

प्रथमप्रपाठके च प्रथमं ब्राह्मणम् ।

अयं वै यज्ञो योऽयम्पवते । तमेतऽ ईप्सन्ति ये संवत्सराय दीक्षन्ते तेषाङ्गृहपतिः प्रथमो दीक्षतेऽयम्वै लोको गृहपतिरस्मिन्वै लोकऽ इदꣳ सर्वम्प्रतिष्ठितङ्गृहपतावु वै सत्त्रिणः प्रतिष्ठिताः प्रतिष्ठायामेवैतत्प्रतिष्ठाय दीक्षन्ते ॥ १ ॥

गवामयनब्राह्मणम् ।

अयं वै यज्ञो योऽयं पवते । तमेते ईप्सन्ति, ये संवत्सराय दीक्षन्ते । तेषां गृहपतिः प्रथमो दीक्षते । अयं वै लोको गृहपतिः । अस्मिन् वै लोके इदं सर्वं प्रतिष्ठितम् । गृहपतौ उ वै सत्त्रिणः प्रतिष्ठिताः । प्रतिष्ठायामेवैतत् प्रतिष्ठाय दीक्षन्ते ॥ १ ॥

हरिस्वामिभाष्यमाकाण्डान्तम् ।

अथ गवामयनम् । तत्रेह यजमानानां दीक्षाक्रम उच्यते । एष श्रुत्यन्तरेषु द्वादशाह एवोक्तः । अत्रैव वक्तव्यम् । कथं ? गवामयनं हि संवत्सरसत्रम् । तत्र सत्रात्मकस्य द्वादशाहस्य विकार इति द्वादशाह एवोच्यते । विहितो दीक्षाक्रमः तत एव लभ्यते । ननु—गवामयने क्रमो विहितः सन् द्वादशाहे प्राप्नोति । अपेक्षितश्च तेनापि यजमानानां दीक्षाक्रमः । कथम् ? बहुकर्तृकत्वात्—"सप्तदशावराश्चतुर्विंशतिपरमाः सत्रमासीरन्" इति हि वचनात् द्वादशाहो बहुयजमानकः । तेन सर्वं दीक्षणीयाः पत्नीप्रतिग्रहीतृसंस्कारत्वाद्दीक्षायाः । तेषां च यजमानानामेकं कल्पयन् यजमानान् करोति । स तेनासाधारणात् गृहपतिकर्मणो गृहपतिरिति व्यपदिश्यते । अन्ये तु—"य उ वा ऋत्विजस्ते यजमानाः" इति वचनात् ब्रह्मवादिनिश्चयं कुर्वन्तम् ऋत्विजिमित्तरं ब्रह्मा उद्गाता इत्यादिविशेषणैः व्याख्यन्ते । तत्र स्वापेक्षितत्वासम्भवदर्शनात् द्वादशाह एव । "तेषां गृहपतिः प्रथमो दीक्षते अथ ब्रह्माणं दीक्षयति" इत्यादि क्रमविधानं शाखान्तरोक्तमप्यत्र योग्यत्वात्तदेतस्येदमिह पठ्यते । दर्शनं विशेषार्थम् । 'अयं वै' यज्ञस्य कारणमाश्रयश्चेति 'यज्ञः' 'य अयं पवते' वायुः, स हि सर्वभूतानां साधारणः

१-अनयोर्द्वादशत्रयोदशकाण्डयो "परिशेष" इति संज्ञान्तरम् । "तत एतेषां कृत्स्नं यज्ञस्य उपसदम् । चक्र सप्त-तिरोभ च" (म. मा. शां प. मो ध ४२ । १६) इत्यत्र प्रतिपादितम् ॥ —सायणभाष्य गोपकम् ।

(न्तुऽथ) अुथ ब्रह्माणं दीक्षयति। चन्द्रमा वै ब्रह्मा सोमो वै चन्द्रमाः सौम्याऽओषधयऽओषधीस्तुदनेन लोकेन सुन्दधाति तुस्मादेतावुन्तरेणान्यो न दीक्षेत स युद्धैतावुन्तरेणान्यो दीक्षेतौषधीस्तुदनेन लोकेन नाना कुर्य्यादुच्छोषुका ह स्युस्तस्मादेतावुन्तरेणान्यो न दीक्षेत ॥ २ ॥

(तु) अुथोद्गातारन्दीक्षयति। पर्ज्जन्यो वाऽउद्गाता पर्ज्जन्याद्धु वै व्वृष्टिर्जायते व्वृष्टिं तदोषधिभिः सुन्दधाति तुस्मादेतावुन्तरेणान्यो न दीक्षेत स युद्धैतावुन्तरेणान्यो दीक्षेत व्वृष्टिन्तदोषधिभिर्न्नाना कुर्य्यादवर्षुको ह स्यात्तुस्मादेतावुन्तरेणान्यो न दीक्षेत ॥ ३ ॥

---

अथ ब्रह्माणं दीक्षयति। चन्द्रमा वै ब्रह्मा। सोमो वै चन्द्रमाः। सौम्या ओषधयः। ओषधीस्तदनेन लोकेन संदधाति। तस्मादेतावन्तरेणान्यो न दीक्षेत। स यद्धैतावन्तरेणान्यो दीक्षेत। ओषधीस्तदनेन लोकेन नाना कुर्यात्। उच्छोषुका ह स्युः। तस्मादेतावन्तरेणान्यो न दीक्षेत ॥ २ ॥

अथोद्गातारं दीक्षयति। पर्जन्यो वा उद्गाता। पर्जन्याद्धु वै वृष्टिर्जायते। वृष्टिं तदोषधिभिः संदधाति। तस्मादेतावन्तरेणान्यो न दीक्षेत। स यद्धैतावन्तरेणान्यो दीक्षेत। वृष्टिं तदोषधिभिर्नाना कुर्यात्। अवर्षुको ह स्यात्। तस्मादेतावन्तरेणान्यो न दीक्षेत ॥ ३ ॥

---

प्राण। प्राणमेव [illegible] प्राण [illegible] सम्व [illegible] प्रतितिष्ठति। 'त' वायु साधारणमेते आमु मि [illegible] ये सवत्सराय दीक्षेत इति। मत्र सरमत्रिण उपन्यास उत्तरवाक्यसम्बधार्थं। तेषां गृहपतिरिति। [illegible] नियमवचनम्। गृहपति' गृहपतिग्रहण यजमानोपलक्षणार्थम्। यज्ञपतिरित्यर्थ। [illegible] अन्यथा न विरोधवचनात् [illegible] यजमानद्वारा गृहपतिर्गृह्यते। 'अयं वै लोको गृहपति'। [illegible] सामान्यादित्यत आह–अस्मिन् वै लोक इदं सर्वं प्रतिष्ठितमित्यादि ॥ १ ॥

अथ ब्रह्माणमिति। ब्रह्माण' [illegible] 'दीक्षयति' अध्वर्यु। प्रकृतौ तेन दीक्षितत्वात्। 'चन्द्रमा वै ब्रह्मा'। दैव 'सोमो वै चन्द्रमा' सोमरसमय। 'सौम्या' सोमदेवत्या 'ओषधय'। सोम ओषधीनामधिदैवमित्यर्थ। गृहपतेरनन्तर ब्रह्माण दीक्षयति। 'ओषधीस्तदनेन संदधाति'। 'उच्छोषुका' शोषणधर्मका 'स्यु' ॥ २ ॥

अथोद्गातारमिति। प्रसन्नप्रायमत परम्। 'अवर्षुक' अवर्षणधर्मक ॥ ३ ॥

---

१–अध्वर्युर्दीक्षयति ब्रह्मादीन्। का० श्रौ० सू० १२। ४१।

( त्रा ) अथ होतारं दीक्षयति । (त्य) अग्निर्वै होताऽधिदेवतं वागध्यात्ममन्नम्वृष्टिरग्निञ्च तद्वाचञ्चान्नेन सन्दधाति तस्मादेतावन्तरेणान्यो न दीक्षेत स यद्धैतावन्तरेणान्यो दीक्षेताग्निञ्च तद्वाचञ्चान्नेन नाना कुर्य्यादशनायुका ह स्युस्तस्मादेतावन्तरेणान्यो न दीक्षेतैतांश्चतुरोऽध्वर्युर्दीक्षयति ॥ ४ ॥

( त्यु ) अथाध्वर्य्युम्प्रतिप्रस्थाता दीक्षयति । मनो वाऽअध्वर्य्युर्वाग्घोता मनश्च तद्वाचञ्च सन्दधाति तस्मादेतावन्तरेणान्यो न दीक्षेत स यद्धैतावन्तरेणान्यो दीक्षेत मनश्च तद्वाचञ्च नाना कुर्य्यात्प्रमायुका ह स्युस्तस्मादेतावन्तरेणान्यो न दीक्षेत ॥ ५ ॥

( त्रा ) अथ ब्रह्मणे ब्राह्मणाच्छꣳसिनन्दीक्षयति । तꣳ हि सोऽन्वथोद्गात्रे प्रस्तोतारन्दीक्षयति तꣳ हि सोऽन्वथ होत्रे मैत्रावरुणन्दीक्षयति तꣳ हि सोऽन्वेतांश्चतुरः प्रतिप्रस्थाता दीक्षयति ॥ ६ ॥

( त्यु ) अथाध्वर्य्युं प्रतिप्रस्थातारन्नेष्टा दीक्षयति । तꣳ हि सोऽन्वे-

---

अथ होतारं दीक्षयति । अग्निर्वै होताऽधिदेवतम् । वागध्यात्मम् । अन्नं वृष्टिः । अग्निं च तद्वाचं चान्नेन सन्दधाति । तस्मादेतावन्तरेणान्यो न दीक्षेत । स यद्धैतावन्तरेणान्यो दीक्षेत । अग्निं च तद्वाचं चान्नेन नाना कुर्यात् । अशनायुका ह स्युः । तस्मादेतावन्तरेणान्यो न दीक्षेत । एतांश्चतुरोऽध्वर्युर्दीक्षयति ॥ ४ ॥

अथाध्वर्युं प्रतिप्रस्थाता दीक्षयति । मनो वा अध्वर्युः । वाग् होता । मनश्च तद्वाचं च सन्दधाति । तस्मादेतावन्तरेणान्यो न दीक्षेत । स यद्धैतावन्तरेणान्यो दीक्षेत । मनश्च तद्वाचं च नाना कुर्यात् । प्रमायुका ह स्युः । तस्मादेतावन्तरेणान्यो न दीक्षेत ॥ ५ ॥

अथ ब्रह्मणे ब्राह्मणाच्छंसिनं दीक्षयति । तं हि सोऽनु । अथोद्गात्रे प्रस्तोतारं दीक्षयति । तं हि सोऽनु । अथ होत्रे मैत्रावरुणं दीक्षयति । तं हि सोऽनु । एतांश्चतुरः प्रतिप्रस्थाता दीक्षयति ॥ ६ ॥

अथाध्वर्यवे प्रतिप्रस्थातारं नेष्टा दीक्षयति । तं हि सोऽनु । एतेषां वै नवानां कल्पिमन्वितरे

तेषाम्वै नवानाङ्कॢप्तिमन्वितरे कल्पन्ते नव वै प्राणाः प्राणानेवैष्वे- तद्दधाति तथा सर्वमायुर्यन्ति तथो ह न पुराऽऽयुषोऽस्माल्लोका- त्प्रयन्ति ॥ ७ ॥

( न्यु ) अथ ब्रह्मणे पोतारन्दीक्षयति । तᳫँ हि सोऽन्वथोद्गात्रे प्रति- हर्तारन्दीक्षयति तᳫँ हि सोऽन्वथ होत्रेऽच्छावाकन्दीक्षयति तᳫँ हि सोऽन्वेतांश्चतुरो नेष्टा दीक्षयति ॥ ८ ॥

( त्यु ) अथाध्वर्यवे नेष्टारमुन्नेता दीक्षयति । तᳫँ हि सोऽन्वथ ब्रह्मण- ऽआग्नीध्रन्दीक्षयति तᳫँ हि सोऽन्वथोद्गात्रे सुब्रह्मण्यं दीक्षयति तᳫँ हि सोऽन्वथ होत्रे ग्रावस्तुतन्दीक्षयति तᳫँ हि सोऽन्वेतांश्चतुरऽउन्नेता दीक्षयति ॥ ९ ॥

---

कल्पन्ते । नव वै प्राणाः । प्राणानेवैष्वेतद्दधाति । तथा सर्वमायुर्यन्ति । तथा उ ह न पुराऽऽयुषो ऽस्माल्लोकात् प्रयन्ति ॥ ७ ॥

अथ ब्रह्मणे पोतारं दीक्षयति । तं हि सोऽनु । अथोद्गात्रे प्रतिहर्तारं दीक्षयति । तं हि सोऽनु । अथ होत्रेऽच्छावाकं दीक्षयति । तं हि सोऽनु । एतांश्चतुरो नेष्टा दीक्षयति ॥ ८ ॥

अथाध्वर्यवे नेष्टारमुन्नेता दीक्षयति । तं हि सोऽनु । अथ ब्रह्मण आग्नीध्रं दीक्षयति । तं हि सोऽनु । अथोद्गात्रे सुब्रह्मण्यं दीक्षयति । तं हि सोऽनु । अथ होत्रे ग्रावस्तुतं दीक्षयति । तं हि सोऽनु । एतांश्चतुर उन्नेता दीक्षयति ॥ ९ ॥

---

दीक्षयन । किं तर्हि ब्राह्मणाच्छंस्यर्थमेव । परिशेषात् मन्त्रप्रमाणे षष्ठ्यर्थे यथा चतुर्थी । एवमुद्गात्रे इत्यादौ योऽपि । कः पुनर्ब्रह्मणो ब्राह्मणाच्छंसिनः स्वः प्रत्यासिकः संबन्धः । न खलु कश्चित्, अस्ति तु प्रकृतौ ज्योतिष्टोमे तस्यादीक्षितत्वेऽपि । अत्र वाक्योपदेशात् भविष्यति । कः पुनः सः, यावत्यो ब्रह्मणो दक्षिणा । तावतीनामर्द्धं ब्राह्मणाच्छंसिनः इत्येष संबन्धः । एतावती तृतीयादे । तुरीयमग्नीधश्चेति । एष ब्रह्मणस्तत्पुरुषाणां संबन्धः । एवमुद्गात्रादीनां प्रस्तोत्रादीनां च । वाक्यं शाखान्तरेषु स्पष्टमाम्नातम् । चोदितः संबन्धः—"ततस्तं प्रति प्रस्थाता दीक्षयित्वा आहुतो दीक्षयति ब्राह्मणाच्छंसिनं ब्राह्मणम्" इत्यादिना । ननु च—अर्द्धिनः, तृतीयिनः, तुरीयिणः, इत्येते व्यपदेशाः प्रकृतौ उपयुज्यते । ब्राह्मणाच्छंस्यादीनां भागविशेषाः कल्प्यन्ते । एते ब्राह्मणाः उद्गातुरित्यादयो व्यपदेशाः एते न किंचिदुपयुज्यते । ब्राह्मणादीनां तुल्यभागवात् । एवं तर्हि अन्येऽप्येवमुपात्ता व्यपदेशा उपयोक्ष्यन्ते । "तं प्राची दिक् होतुः दक्षिणा ब्रह्मणः" इत्यादीननु कम्य "तदेव होत्रिका अन्वाभक्ता" इत्युच्यन्ते । तत्रैतेभ्यो व्यपदेशेभ्यः होतृपुरुषाः प्राच्यां दिशि तु आम

---

१-नेष्टारमुन्नेता । का श्रौ सू १२ । ४३ ॥

( त्यु ) अथोन्नेतारम् । ( ७ॅ ) स्नातको वा ब्रह्मचारी वाऽन्यो वा दीक्षितो दीक्षयति न पूतः पावयेदिति ह्याहुः सैषाऽनुपूर्वदीक्षा स यत्र हैवंविद्वाᳬसो दीक्षन्ते दीक्षमाणा हैव ते यज्ञङ्कल्पयन्ति यज्ञस्य क्लृप्तिमनु सत्रिणां योगक्षेमः कल्पते सत्रिणां योगक्षेमस्य क्लृप्तिमन्वपि तस्यार्द्धस्य योगक्षेमः कल्पते यस्मिन्नर्द्धे यजन्ते ॥ १० ॥

तेषां वा उन्नेतात्तमो दीक्षते । प्रथमोऽवभृथादुदायतामुदेति प्राणो वाऽउन्नेता प्राणमेवैष्वेतदुभयतो दधाति तथा सर्वमायुर्यन्ति तथो ह न पुराऽऽयुषोऽस्माल्लोकात्प्रयन्ति सैषाऽनुपूर्वदीक्षा स यत्र हैवं विद्वाᳬसो दीक्षन्तेऽतदेव दीक्षेत ॥ ११ ॥

इति प्रथमप्रपाठके प्रथम ब्राह्मणम् ॥ १२।१।१ ॥ ( १-१ ) ॥

---

अथोन्नेतारं स्नातको वा ब्रह्मचारी वाऽन्यो वा दीक्षितो दीक्षयति । न पूतः पावयेत् इति ह्याहुः । सैषाऽनुपूर्वदीक्षा । स यत्र हैवं विद्वांसो दीक्षन्ते । दीक्षमाणा हैव ते यज्ञं कल्पयन्ति । यज्ञस्य क्लृप्तिमनु सत्रिणां योगक्षेमः कल्पते । सत्रिणां योगक्षेमस्य क्लृप्तिमन्वपि तस्यार्द्धस्य योगक्षेमः कल्पते । यस्मिन्नर्द्धे यजन्ते ॥ १० ॥

तेषां वा उन्नेतोत्तमो दीक्षते । प्रथमोऽवभृथादुदायतामुदेति । प्राणो वा उन्नेता । प्राणमेवै

---

ष्वन्ते । दक्षिणस्या ब्रह्मणा ऽस्मादन्यो ब्रह्मपुरुषा । स्यादिति मेऽस्यति । तस्मादुपपन्नमेतत् षष्ठ्यर्थे चतुर्थी । ( पा सू २ । ३ । ६२ वा ) इति ॥ ६-९ ॥

' स्नातको वा ' तस्यैवोत्सृष्ट शिष्य । ' ब्रह्मचारी वा ' तस्यैव शिष्य । कुत एतत् । ' अन्यो वा दीक्षित ' इति पृथगुपादानात् । यदि तु सामान्येन स्नातको ब्रह्मचारी वा गृह्येत । तत अन्यो वेति नोपपद्येत । न हि स्नातकब्रह्मचारिभ्यामन्यो दीक्षयितोऽस्ति । न तावदनुपनीत श्रोत्रियः कर्तुम् ईश स्नातको वा निवृत्ताधिकारात् । कात्यायनोऽप्येव सूत्रयामास " अध्वर्युर्गृहपतिं दीक्षयति ब्रह्माणञ्च इति " ब्रह्मो द्गातृहोतॄन् इत्यर्थः । ' अध्वर्यादीन् प्रतिप्रस्थाता ' । अध्वर्युब्रह्मणा उन्निप्रस्तोतृमैत्रावरुणान् इत्यर्थः । " प्रतिप्रस्थातार्द्धिनः " इति । प्रतिप्रस्थातृप्रभृतिप्रतिहर्त्रच्छावाकान् इत्यर्थः । " नेष्टारमुन्नेता " इति । नेष्टृप्रभृतिसुब्रह्मण्यापर्यन्तान् इत्यर्थः । उन्नेतारं ब्रह्मचारी स्नातकोऽन्यो वा ब्राह्मणो न पूतः पावयेत् इति श्रुते " ( का. श्रौ. सू १२ । ४३ ) इति ॥ १० ॥

प्राणो वा उन्नेता । उन्नेतृत्वस्योन्नेतृत्वात् । अनुपूर्वदीक्षेति । ' तदेव दीक्षेत ' तत्रैव विद्वद्भिः सह दीक्षेत, नाविद्वद्भिरित्यर्थः ॥ ११ ॥

इति श्रीमदाचार्यहरिस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे प्रथमेऽध्याये प्रथमं ब्राह्मणम् ॥ ( १२ । १ । १ ) ॥

श्रद्धाया वै देवाः । ( ० ) दीक्षान्निरमिमतादित्यै प्रायणीयꣳ सोमात्क्रयम्विष्णोरातिथ्यमादित्यात्प्रवर्ग्यꣳ स्वधायाऽउपसदोऽग्नीषोमाभ्यामुपवसथमस्माल्लोकात्प्रायणीयमतिरात्रम् ॥ १ ॥

( ꣳ ) संवत्सराच्चतुर्विꣳशमहः । ( ब्रं ) ब्रह्मणोऽभिप्लवं क्षत्रात्पृष्ठ्यमग्नेरभिजितमद्भ्यः स्वरसाम्नऽ आदित्याद्विषुवन्तमुक्ताः स्वरसामानऽ इन्द्राद्विश्वजितमुक्तौ पृष्ठ्याभिप्लवौ मित्रावरुणाभ्यां गोऽआयुषी विश्वेभ्यो देवेभ्यो दशरात्रं दिग्भ्यो दाशरात्रिकम्पृष्ठ्यꣳ षडहमेभ्यो लोकेभ्यश्छन्दोमान् ॥ २ ॥

( त्सं ) संवत्सराद्दशममहः । प्रजापतेर्महाव्रतꣳ स्वर्गाल्लोकादुदयनीयमतिरात्रन्तदेतत्संवत्सरस्य जन्म स यो हैवमेतत्संवत्सरस्य जन्म वेदा हास्माच्छ्रेयाञ्जायते सात्मा भवति संवत्सरो भवति संवत्सरो भूत्वा देवानप्येति ॥ ३ ॥

इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ १२।१।२॥ ( १–२ ) ॥

---

ऽरेतदुभयतो दधाति । तथा सर्वमायुर्यन्ति । तथा उ ह न पुराऽऽयुषोऽस्माल्लोकात्प्रयन्ति । सैषाऽनुपूर्वंदीक्षा । स यत्र हैव विद्वांसो दीक्षेरन् । तदेव दीक्षेत ॥ ११ ॥

श्रद्धाया वै देवा दीक्षा निरमिमत । अदित्यै प्रायणीयम् । सोमात् क्रयम् । विष्णोरातिथ्यम् । आदित्यात्प्रवर्ग्यम् । स्वधाया उपसदः । अग्नीषोमाभ्यामुपवसथम् । अस्माल्लोकात् प्रायणीयमतिरात्रम् ॥ १ ॥

संवत्सरात् चतुर्विंशमहः । ब्रह्मणोऽभिप्लवम् । क्षत्रात् पृष्ठ्यम् । अग्नेरभिजितम् । अद्भ्यः स्वरसाम्नः । आदित्याद्विषुवंतम् । उक्ताः स्वरसामानः । इंद्राद्विश्वजितम् । उक्तौ पृष्ठ्याभिप्लवौ । मित्रावरुणाभ्यां गोआयुषी । विश्वेभ्यो देवेभ्यो दशरात्रम् । दिग्भ्यो दाशरात्रिकं पृष्ठ्यं षडहम् । एभ्यो लोकेभ्यश्छन्दोमान् ॥ २ ॥

संवत्सराद्दशममहः । प्रजापतेर्महाव्रतम् । स्वर्गाल्लोकादुदयनीयमतिरात्रम् । तदेतत्संवत्सरस्य जन्म । स यो हैवमेतत्संवत्सरस्य जन्म वेद । आ हास्माच्छ्रेयान् जायते । सात्मा भवति । संवत्सरो भवति । संवत्सरो भूत्वा देवानप्येति ॥ ३ ॥

---

'श्रद्धाया वै'। श्रद्धादिभ्यो देवताभ्य दीक्षाद्यभिमानिनो विग्रहवन्तो देवा देवैर्निर्मिता । सम्भूय च इति प्रादुर्भाविता इत्येषा उपासना अत्र ब्राह्मणे उच्यते । प्रसन्नम् एव ॥ १–३ ॥

इति श्रीमदाचार्यहरिस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे प्रथमेऽध्याये द्वितीयं ब्राह्मणम् ॥ १२ । १ । २ ॥

यद्द्रे दीक्षन्ते । ( न्तेऽग्ना ) अग्नाविष्णूऽएव देवते यजन्तेऽग्नाविष्णू देवते भवन्त्यग्नाविष्णोः सायुज्यꣳ सलोकतां जयन्ति ॥ १ ॥

( न्त्यु ) अथ यत्प्रायणीयेन यजन्ते । ( न्तेऽदि ) अदितिमेव देवतां यजन्तेऽदितिर्देवता भवन्त्यदितेः सायुज्यꣳ सलोकतां जयन्ति ॥ २ ॥

( न्त्यु ) अथ यत्क्रयेण चरन्ति । सोममेव देवतां यजन्ते सोमो देवता भवन्ति सोमस्य सायुज्यꣳ सलोकताञ्जयन्ति ॥ ३ ॥

( न्त्यु ) अथ यदातिथ्येन यजन्ते । विष्णुमेव देवतां यजन्ते विष्णुर्देवता भवन्ति विष्णोः सायुज्यꣳ सलोकतां जयन्ति ॥ ४ ॥

( न्त्यु ) अथ यत्प्रवर्ग्येण यजन्ते । ( न्तऽआ ) आदित्यमेव देवतां यजन्तऽआदित्यो देवता भवन्त्यादित्यस्य सायुज्यꣳ सलोकतां जयन्ति॥५॥

( न्त्यु ) अथ यदुपसदऽउपयन्ति । ( न्त्ये ) एताऽएव देवता यजन्ते याऽएताऽउपसत्स्वेता देवता भवन्त्येतासां देवतानाꣳ सायुज्यꣳ सलोकतां जयन्ति ॥ ६ ॥

---

देवविद्याब्राह्मणम् ।

यद्द्रे दीक्षन्ते । अग्नाविष्णू एव देवते यजन्ते । अग्नाविष्णू देवते भवन्ति । अग्नाविष्णोः सायुज्यं सलोकता जयन्ति ॥ १ ॥

अथ यत् प्रायणीयेन यजन्ते । अदितिमेव देवता यजन्ते । अदितिर्देवता भवन्ति । अदितेः सायुज्यं सलोकता जयन्ति ॥ २ ॥

अथ यत् क्रयेण चरन्ति । सोममेव देवतां यजन्ते । सोमो देवता भवन्ति । सोमस्य सायुज्यं सलोकता जयन्ति ॥ ३ ॥

अथ यदातिथ्येन यजन्ते । विष्णुमेव देवता यजन्ते । विष्णुर्देवता भवन्ति । विष्णोः सायुज्यं सलोकतां जयन्ति ॥ ४ ॥

अथ यत्प्रवर्ग्येण यजन्ते । आदित्यमेव देवता यजन्ते । आदित्यो देवता भवन्ति । आदित्यस्य सायुज्यं सलोकता जयन्ति ॥ ५ ॥

अथ यदुपसद उपयन्ति । एता एव देवता यजन्ते । या एता उपसत्सु । एता देवता भवन्ति । एतासां देवताना सायुज्यं सलोकता जयन्ति ॥ ६ ॥

---

यद्द्रे दीक्षन्ते ' । एतदादि कर्मसु देवविद्याब्राह्मणम् । प्रत्यक्षमेव । ' अग्नाविष्णू देवते भवन्ति ' अभेद-

( न्त्यु ) अथ यदग्नीषोमीयेण पशुना यजन्ते । ( न्तऽग्नी ) अग्नीषोमावेव देवते यजन्तेऽग्नीषोमौ देवते भवन्त्यग्नीषोमयोः सायुज्यꣳ सलोकतां जयन्ति ॥ ७ ॥

( न्त्यु ) अथ यत्प्रायणीयमतिरात्रमुपयन्ति । ( न्त्य ) अहोरात्रे एव देवते यजन्तेऽहोरात्रे देवते भवन्त्यहोरात्रयोः सायुज्यꣳ सलोकतां जयन्ति ॥ ८ ॥

( न्त्यु ) अथ यच्चतुर्विꣳशमहरुपयन्ति । संवत्सरमेव देवतां यजन्ते संवत्सरो देवता भवन्ति सम्वत्सरस्य सायुज्यꣳ सलोकतां जयन्ति ॥ ९ ॥

( न्त्यु ) अथ यदभिप्लवꣳ षडहमुपयन्ति । ( न्त्य ) अर्द्धमासांश्च मासांश्च देवता यजन्तेऽर्द्धमासाश्च मासाश्च देवता भवन्त्यर्द्धमासानाञ्च मासानाञ्च सायुज्यꣳ सलोकतां जयन्ति ॥ १० ॥

( न्त्यु ) अथ यत्पृष्ठ्यꣳ षडहमुपयन्ति । ( न्त्यृ ) ऋतूनेव देवता यजन्तऽऋतवो देवता भवन्त्यृतूनाꣳ सायुज्यꣳ सलोकतां जयन्ति ॥ ११ ॥

( न्त्यु ) अथ यदभिजितमुपयन्ति । ( न्त्य ) अग्निमेव देवतां यजन्तेऽग्निर्देवता भवन्त्यग्नेः सायुज्यꣳ सलोकतां जयन्ति ॥ १२ ॥

---

अथ यदग्नीषोमीयेण पशुना यजन्ते । अग्नीषोमावेव देवते यजन्ते । अग्नीषोमौ देवते भवन्ति । अग्नीषोमयोः सायुज्य सलोकता जयन्ति ॥ ७ ॥

अथ यत् प्रायणीयमतिरात्रमुपयन्ति । अहोरात्रे एव देवते यजन्ते । अहोरात्रे देवते भवन्ति । अहोरात्रयोः सायुज्य सलोकता जयन्ति ॥ ८ ॥

अथ यच्चतुर्विंशमहरुपयन्ति । संवत्सरमेव देवता यजन्ते । संवत्सरो देवता भवन्ति । संवत्सरस्य सायुज्यं सलोकता जयन्ति ॥ ९ ॥

अथ यदभिप्लवं षडहमुपयन्ति । अर्द्धमासाश्च मासाश्च देवता यजन्ते । अर्द्धमासाश्च मासाश्च देवता भवन्ति । अर्द्धमासाना च मासाना च सायुज्यं सलोकता जयन्ति ॥ १० ॥

अथ यत्पृष्ठ्य षडहमुपयन्ति । ऋतूनेव देवता यजन्ते । ऋतवो देवता भवन्ति । ऋतूना सायुज्यं सलोकता जयन्ति ॥ ११ ॥

अथ यदभिजितमुपयन्ति । अग्निमेव देवता यजन्ते । अग्निर्देवता भवन्ति । अग्नेः सायुज्यं सलोकतां जयन्ति ॥ १२ ॥

---

दर्शिन । 'अग्नाविष्णवो सायुज्य सलोकतां जयन्ति' देवदर्शिन । तत्रापि प्रहष्टश्रिया 'सायुज्य जयन्ति' । अन्तरा. 'सलोकताम्' इति श्लिष्टः । एवमुत्तरत्रापि वाच्यम् ॥ १–२१ ॥

( न्त्यु ) अथ यत्स्वरसाम्नऽउपयन्ति । ( न्त्य ) अपऽएव देवता यजन्तऽआपो देवता भवन्त्यपाꣳ सायुज्यꣳ सलोकतां जयन्ति ॥ १३ ॥

( न्त्यु ) अथ यद्विषुवन्तमुपयन्ति । ( न्त्या ) आदित्यमेव देवतां यजन्तऽआदित्यो देवता भवन्त्यादित्यस्य सायुज्यꣳ सलोकतां जयन्त्युक्ताः स्वरसामानः ॥ १४ ॥

( नोऽथ ) अथ यद्विश्वजितमुपयन्ति । ( न्ती ) इन्द्रमेव देवतां यजन्तऽइन्द्रो देवता भवन्तीन्द्रस्य सायुज्यꣳ सलोकतां जयन्त्युक्तौ पृष्ठ्याभिप्लवौ ॥ १५ ॥

( वावु ) अथ यद्गोऽआयुषीऽउपयन्ति । मित्रावरुणावेव देवते यजन्ते मित्रावरुणौ देवते भवन्ति मित्रावरुणयोः सायुज्यꣳ सलोकतां जयन्ति ॥ १६ ॥

( न्त्यु ) अथ यद्दशरात्रमुपयन्ति । विश्वानेव देवान्देवता यजन्ते विश्वे देवा देवता भवन्ति विश्वेषान्देवानाꣳ सायुज्यꣳ सलोकतां जयन्ति ॥ १७ ॥

( न्त्यु ) अथ यद्दाशरात्रिकम्पृष्ठ्यꣳ षडहमुपयन्ति । दिशऽ एव देवता यजन्ते दिशो देवता भवन्ति दिशाꣳ सायुज्यꣳ सलोकतां जयन्ति ॥१८॥

---

अथ यत् स्वरसाम्न उपयन्ति । अप एव देवता यजन्ते । आपो देवता भवन्ति । अपा सायुज्यं सलोकता जयन्ति ॥ १३ ॥

अथ यद्विषुवन्तमुपयन्ति । आदित्यमेव देवता यजन्ते । आदित्यो देवता भवन्ति । आदित्यस्य सायुज्यं सलोकता जयन्ति । उक्ताः स्वरसामानः ॥ १४ ॥

अथ यद्विश्वजितमुपयन्ति । इन्द्रमेव देवता यजन्ते । इन्द्रो देवता भवन्ति । इन्द्रस्य सायुज्यं सलोकता जयन्ति । उक्तौ पृष्ठ्याभिप्लवौ ॥ १५ ॥

अथ यत् गोआयुषी उपयन्ति । मित्रावरुणावेव देवते यजन्ते । मित्रावरुणौ देवते भवन्ति । मित्रावरुणयोः सायुज्यं सलोकता जयन्ति ॥ १६ ॥

अथ यद्दशरात्रमुपयन्ति । विश्वानेव देवान् देवता यजन्ते । विश्वे देवा देवता भवन्ति । विश्वेषां देवानां सायुज्यं सलोकता जयन्ति ॥ १७ ॥

अथ यद्दाशरात्रिकं पृष्ठ्यं षडहमुपयन्ति । दिश एव देवता यजन्ते । दिशो देवता भवन्ति । दिशां सायुज्यं सलोकतां जयन्ति ॥ १८ ॥

( न्यु ) अथ यच्छन्दोमानुपयन्ति । ( न्ती ) इमानेव लोकान्देवता यजन्तऽइमे लोका देवता भवन्त्येषां लोकानाꣳ सायुज्यꣳ सलोकतां जयन्ति ॥ १९ ॥

( न्यु ) अथ यद्दशममहरुपयन्ति । संवत्सरमेव देवतां यजन्ते संवत्सरो देवता भवन्ति संवत्सरस्य सायुज्यꣳ सलोकतां जयन्ति ॥ २० ॥

( न्यु ) अथ यन्महाव्रतमुपयन्ति । प्रजापतिमेव देवतां यजन्ते प्रजापतिर्देवता भवन्ति प्रजापतेः सायुज्यꣳ सलोकतां जयन्ति ॥ २१ ॥

( न्यु ) अथ यदुदयनीयमतिरात्रमुपयन्ति । संवत्सरमेव तदाप्त्वा स्वर्गे लोके प्रतिनिष्ठन्ति तान्यदि पृच्छेयुः कामद्य देवतां यजध्वे का देवता स्थ कस्यान्देवतायां वसथेत्यतऽएवैकतमाम्ब्रूयुर्यस्यै तु नेदिष्ठꣳ स्युरेते ह वै सतिसदऽएते हि सतीषु देवतासु सीदन्तो यन्ति सत्रसदो हैवेतरे स यो हैवं विदुषां दीक्षितानां पापकꣳ सत्रे कीर्तयेदेताभ्यस्त्वा देवताभ्यऽआवृश्चामऽइत्येनम्ब्रूयुः स पापीयान्भवति श्रेयाꣳसऽआत्मना ॥ २२ ॥

---

अथ यच्छन्दोमानुपयन्ति । इमानेव लोकान् देवता यजन्ते । इमे लोका देवता भवन्ति । एषां लोकानां सायुज्यं सलोकतां जयन्ति ॥ १९ ॥

अथ यद्दशममहरुपयन्ति । संवत्सरमेव देवता यजन्ते । संवत्सरो देवता भवन्ति । संवत्सरस्य सायुज्यं सलोकतां जयन्ति ॥ २० ॥

अथ यन्महाव्रतमुपयन्ति । प्रजापतिमेव देवता यजन्ते । प्रजापतिर्देवता भवन्ति । प्रजापतेः सायुज्यं सलोकतां जयन्ति ॥ २१ ॥

अथ यदुदयनीयमतिरात्रमुपयन्ति । संवत्सरमेव तदाप्त्वा स्वर्गे लोके प्रतिनिष्ठन्ति । तान् यदि पृच्छेयुः । कामद्य देवता यजध्वे । का देवता स्थ । कस्यां देवतायां वसथेति । अत एवैकतमां ब्रूयुः यस्यै तु नेदिष्ठं स्युः । एते सतिसदः । एते हि सतीषु देवतासु सीदन्तो यन्ति । सत्रसदो हैवेतरे । स यो हैवं विदुषां दीक्षितानां पापकं सत्रे कीर्तयेत् । "एताभ्यस्त्वा देवताभ्य आवृश्चामः" इत्येनं ब्रूयुः । स पापीयान् भवति । श्रेयांस आत्मना ॥ २२ ॥

---

'यस्यै' यस्या देवतायाः 'नेदिष्ठं' अन्तिकतमं भवेयुः । तामेव ब्रूयुरग्नाविष्णू अदो यजामहे इति । 'एते ह वै सतिसद' इति एते वै उपासना उच्यन्ते । इत्युपासनागुणव्यपदेशेन वचनम् । 'सतीषु देवतासु' सीदन्तीति

सऽ एष संवत्सरस्त्रिमहाव्रतः । ( श्र ) चतुर्विꣳशे महाव्रतं विषुवति महाव्रतम्महाव्रतऽ एव महाव्रतन्तꣳ ह स्मैतं पूर्वेऽभ्युपयन्ति त्रिमहाव्रतन्ते ते तेजस्विनऽ आसुः सत्यवादिनः सꣳशितव्रताऽअथ यऽउ हैनमप्येतर्हि तथोपेयुर्यथाऽऽमपात्रमुदकऽआसिक्ते विम्रियेतैवꣳ हैव ते विम्रियेरन्नुपर्युपयन्ति तदेषाꣳ सत्येन श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभिरवरुद्धम्भवति ॥ २३ ॥

इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥ १२-१-३ ॥ ( १. ३. ) ॥

पुरुषो वै संवत्सरः । ( स्तु ) तस्य पादावेव प्रायणीयोऽतिरात्रः पादाभ्याꣳ हि प्रयन्ति तयोर्यच्छुक्लन्तदह्नो रूपं यत्कृष्णं तद्रात्रेर्नखान्येवौषधिवनस्पतीनाꣳ रूपमूरू चतुर्विꣳशमहरुरोऽभिप्लवः पृष्ठ्यम्पृष्ठ्यः॥१।

स एष संवत्सरस्त्रिमहाव्रतः । चतुर्विंशे महाव्रतम् । विषुवति महाव्रतम् । महाव्रत एव महाव्रतम् । तं ह स्मैतं पूर्वे उपयंति त्रिमहाव्रतं ते । ते तेजस्विन आसुः । सत्यवादिनः । संशितव्रताः अथ य उ ह एनमप्येतर्हि तथोपेयुः । यथाऽऽमपात्रमुदक आसिक्ते विम्रियेत् । एवं हैव विम्रियेयुः । उपर्युपयंति । तदेषा सत्येन श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभिरवरुद्धं भवति ॥ २३ ।

अध्यात्मविद्ब्राह्मणम् ।

पुरुषो वै संवत्सरः । तस्य पादावेव प्रायणीयोऽतिरात्रः । पादाभ्यां हि प्रयन्ति । तयोर्यच्छुक्ल

मतिमदः । सत्रे सीदन्तीति सत्रसदः इतरे केवलं सत्रैककर्मामात्रे सीदन्ति । न देवतास्विति सत्रसद अनुपासका ॥ २२ ॥

तमेन ' त्रिमहाव्रत ' संवत्सर ' पूर्वे ' प्राक्कलियुगादुपयन्ति स्म न सम्प्रति । किं कारणम् । यस्मात्ते ' तेजस्विनः ' बभूवु ॥

सत्यवादिन इति । तीक्ष्णीकृतव्रता. इति येषां आस्याऽस्मि, ते त्रिमहाव्रतयाजिन इत्येतत् गृह्यते अन्यथ विम्रियेत् वर्म विनश्येत् नैऽपि विम्रियेयु विनश्येयुरित्यर्थ । ' उपरि ' उपान्त्यदिवसे ' उपयन्ति ' यत्तर्हि कलियुगे नव कथं ? विनाशदोषो न भविष्यतीत्यत आह—तदुपर्युपगम्यमानमेषां साम्प्रतिकाना श्रमादिभिरवरुद्ध भवति । न विनश्यति ॥ २३ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे प्रथमेऽध्याये तृतीयं ब्राह्मणम् ॥ १२ । १ । ३ ॥

' पुरुषो वै ' । कर्मणो अध्यात्मविदा ब्राह्मणमेतत् । प्रमन्नप्रायम् । पुरुष इति । ' अध्यात्म ' संवत्सर-

१-प्रमध्यवर्तमानेत्यः ।

( एषोऽय ) अयमेव दक्षिणो बाहुरभिजित् । ( दि ) इमऽ एव दक्षिणे त्रयः प्राणाः स्वरसामानो मूर्द्धा विषुवानिमऽ एवोत्तरे त्रयः प्राणाः स्वरसामानः ॥ २ ॥

( नोऽयु ) अयमेवोत्तरो बाहुर्विश्वजित् । ( दु ) उरुौ पृष्ठ्याभिप्लवौ यावर्वाञ्चौ प्राणौ ते गोऽआयुषीऽ अङ्गानि दशरात्रो मुखं महाव्रतꣳ हस्तावेवोदयनीयोऽतिरात्रो हस्ताभ्याꣳ ह्युद्यन्ति तयोर्यच्छुक्लं तदह्नो रूपं यत्कृष्णं तद्रात्रेर्नखान्येव नक्षत्राणाꣳ रूपꣳ सऽएष संवत्सरो-ऽध्यात्मम्प्रतिष्ठितः स यो हैवमेतꣳ संवत्सरमध्यात्मम्प्रतिष्ठितं वेद प्रति-तिष्ठति प्रजया पशुभिरस्मिँल्लोकेऽमृतत्वेनामुष्मिन् ॥ ३ ॥

इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ १२।१।४ ॥ ( १-४ )

प्रथमोऽध्यायः समाप्तः ॥ १२ । १ ॥ कण्डिकासंख्या ४० ॥

---

तदह्नो रूपम् । यत्कृष्णं तद्रात्रेः । नखान्येवौषधिवनस्पतीना रूपम् । ऊरू चतुर्विंशमहः । उरो ऽभिप्लवः । पृष्ठं पृष्ठ्यः ॥ १ ॥

अयमेव दक्षिणो बाहुरभिजित् । इम एव दक्षिणे त्रयः प्राणाः स्वरसामानः । मूर्द्धा विषुवान् इम एवोत्तरे त्रयः प्राणाः स्वरसामानः ॥ २ ॥

अयमेवोत्तरो बाहुर्विश्वजित् । उरू पृष्ठ्याभिप्लवौ । यावर्वाञ्चौ प्राणौ ते गोआयुषी । अङ्गानि दशरात्रः । मुखं महाव्रतम् । हस्तावेवोदयनीयोऽतिरात्रः । हस्ताभ्यां ह्युद्यन्ति । तयोर्यच्छुक्लं तदह्नो रूपम् । यत्कृष्णं तद्रात्रेः । नखान्येव नक्षत्राणां रूपम् । स एष संवत्सरोऽध्यात्मं प्रतिष्ठितः । स यो हैवमेतं संवत्सरमध्यात्मं प्रतिष्ठितं वेद । प्रतितिष्ठति प्रजया पशुभिरस्मिन् लोके, अमृतत्वेना-मुष्मिन् ॥ ३ ॥

---

प्रसवत्वादध्यात्मकं, नाधिदैवो गृह्यते । कुत एतत् " नखान्येवौषधिवनस्पतीना रूप नक्षत्राणां वेति " वच नात् । उरोऽभिप्लव इति । दक्षिण उरसो भाग । पृष्ठभागस्य उत्तर । " उरू पृष्ठ्याभिप्लवौ " इति बाहस्य पृथग्वचनात् ॥ १-३ ॥

इति श्रीमदाचार्यहरिस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे प्रथमेऽध्याये चतुर्थं ब्राह्मणम् ॥ १२ । १ । ४ ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन् हरिः । श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥

श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥

भूभर्त्रा विक्रमार्केण कल्मा कनकवेदिकाम् । दानायाप्यस्य कृतवान् श्रुत्यर्थविवृतिं हरेः ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे प्रथमोऽध्यायः समाप्तः ॥ ( १२-१ ) ॥

# अथ द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ।

## प्रथमप्रपाठके च पञ्चमं ब्राह्मणम् ।



समुद्रं वा एते प्रतरन्ति । ये संवत्सराय दीक्षन्ते तस्य तीर्थमेव प्रायणीयोऽतिरात्रस्तीर्थेन हि प्रस्नान्ति तद्यत्प्रायणीयमतिरात्रमुपयन्ति यथा तीर्थेन समुद्रम्प्रस्नायुस्तादृक्तत् ॥ १ ॥

(द्वा) गाधमेव प्रतिष्ठा चतुर्विंशमहः । (र्व्यु) यथोपपक्षदघ्नम्वा कण्ठदघ्नं वा यतो विश्रम्य प्रस्नान्ति प्रस्नेयोऽभिप्लवः प्रस्नेयः पृष्ठ्यः ॥२॥

(प्रचो) गाधमेव प्रतिष्ठाऽभिजित् । (थु) यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्योत्क्रामन्त्यूरुदघ्नऽएव प्रथमः स्वरसामा जानुदघ्नो द्वितीयः कुल्फदघ्नस्तृतीयो द्वीपः प्रतिष्ठा विषुवान्कुल्फदघ्नऽएव प्रथमोऽर्वाक्सामा जानुदघ्नो द्वितीयऽऊरुदघ्नस्तृतीयः ॥ ३ ॥

---

सम्वत्सरे समुद्रप्रतरणोपासनम् ।

समुद्रं वा एते प्रतरन्ति । ये संवत्सराय दीक्षन्ते । तस्य तीर्थमेव प्रायणीयोऽतिरात्रः । तीर्थेन हि प्रस्नाति । तद्यत्प्रायणीयमतिरात्रमुपयन्ति । यथा तीर्थेन समुद्रं प्रस्नायुः । तादृक्तत् ॥ १ ॥

गाधमेव प्रतिष्ठा चतुर्विंशमहः । यथोपपक्षदघ्नं वा कंठदघ्नं वा यतो विश्रम्य प्रस्नाति । प्रस्नेयोऽभिप्लवः । प्रस्नेयः पृष्ठ्यः ॥ २ ॥

गाधमेव प्रतिष्ठाऽभिजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्योत्क्रामन्ति । ऊरुदघ्न एव प्रथमः स्वरसामा । जानुदघ्नो द्वितीयः । कुल्फदघ्नस्तृतीयः । द्वीपः प्रतिष्ठा विषुवान् । कुल्फदघ्न एव प्रथमोऽर्वाक्सामा । जानुदघ्नो द्वितीयः । ऊरुदघ्नस्तृतीयः ॥ ३ ॥

---

"समुद्रं वा" एताभि पञ्चभि कण्डिकाभि संवत्सरे समुद्रप्रतरणोपासनमुच्यते । तीर्थगाधोद्धृत्तरणादि प्रकरणानि च प्रायणीयादीनां नामत्वेनानि प्रदर्श्यन्ते । स्नानाद्यनुत्वाच्च फलम् । संवत्सरोऽप्यत्र दीक्षा एव द्रष्टव्य । 'प्रस्नाति' 'ष्णा शौचे' (पा धा प प ४७) इत्येव प्रवृत्तं प्रकरणे वर्तते । प्रतरन्तीत्यर्थः । 'प्रस्नायु' प्रातयु ॥ १ ॥

गाधमेव साधनं अल्पोदकम् । प्रतितिष्ठन्त्यस्मिन्निति 'प्रतिष्ठा' । 'उपपक्षदघ्न' पक्षयो समीपमुपपक्ष प्रमाणमस्य उपपक्षदघ्नम् । कण्ठप्रमाणं 'कण्ठदघ्न' । 'प्रस्नेय' 'प्रस्नान्ति' प्रतरणार्ह इत्यर्थ ॥ २ ॥

सर्वान् कामान् अवाप्य सुखं । अवाप्य न च नाम्ना इत्येव ध्याने शाकशाखीयादिकपदलोपसमम ॥ ३ ॥ ४ ॥

( घ ) गाधमेव प्रतिष्ठा विश्वजित् । ( ङ ) यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्य प्रस्नान्ति प्रस्नेयः पृष्ठ्यः प्रस्नेयोऽभिप्लवः प्रस्नेये गोऽआयुषी प्रस्नेयो दशरात्रः ॥ ४ ॥

( च ) गाधमेव प्रतिष्ठा महाव्रतम् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्योत्स्नान्ति तीर्थमेवोदयनीयोऽतिरात्रस्तीर्थेन ह्युत्स्नान्ति तद्युदुदयनीयमतिरात्रमुपयन्ति यथा तीर्थेन समुद्रम्प्रस्नाय तीर्थेनोत्स्नायुस्तादृक्तत् ॥ ५ ॥

( छ ) तदाहुः । कति संवत्सरस्यातिरात्राः कत्यग्निष्टोमाः कत्युक्थ्याः कति षोडशिनः कति षडहा ऽइति । द्वावतिरात्रौ षड्शतमग्निष्टोमा द्वे चत्वारिंशे शते ऽउक्थ्यानामिति नु य ऽउक्थ्यान्त्स्वरसाम्न ऽउपयन्ति ॥ ६ ॥

गाधमेव प्रतिष्ठा विश्वजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्य प्रस्नान्ति । प्रस्नेयः पृष्ठ्यः । प्रस्नेयोऽभिप्लवः । प्रस्नेये गोआयुषी । प्रस्नेयो दशरात्रः ॥ ४ ॥

गाधमेव प्रतिष्ठा महाव्रतम् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्योत्स्नान्ति । तीर्थमेवोदयनीयोऽतिरात्रः । तीर्थेन ह्युत्स्नान्ति । तद्युदुदयनीयमतिरात्रमुपयन्ति । यथा तीर्थेन समुद्रं प्रस्नाय तीर्थेनोत्स्नायुः । तादृक्तत् ॥ ५ ॥

तदाहुः—कति संवत्सरस्यातिरात्राः । कत्यग्निष्टोमाः । कत्युक्थ्याः । कति षोडशिनः । कति षडहा इति । द्वावतिरात्रौ । षड्शतमग्निष्टोमाः । द्वे चत्वारिंशे शते उक्थ्यानाम् । इति नु य उक्थ्यान् स्वरसाम्न उपयन्ति ॥ ६ ॥

( न्त्यु ) अथ येऽग्निष्टोमाः । (न्द्वा) द्वादशशतमग्निष्टोमा द्वे चतुस्त्रिंशे शतेऽउक्थ्यानां द्वादश षोडशिनः षष्टिः षडहाऽइति नु संवत्सरस्याप्तिः ॥ ७ ॥

( द्वां ) द्वादश वै मासाः संवत्सरस्य । तेषामेतत्तेजऽइन्द्रियं यत्पृष्ठानि तद्यन्मासि मासि पृष्ठान्युपयन्ति मासशऽएव तत्संवत्सरस्य तेजऽआप्नुवन्त्यथ कथं त्रयोदशस्य मासस्य तेजऽआप्नुवन्तीत्युपरिष्टाद्विषुवतो विश्वजितं सर्वपृष्ठमग्निष्टोममुपयन्त्येवमु त्रयोदशस्य मासस्य तेजऽआप्नुवन्ति ॥ ८ ॥

( न्त्ये ) एतद्ध स्म वै तद्विद्वानाह । श्वेतकेतुरारुणेयः संवत्सराय न्वाऽअहं दीक्षिष्यऽइति तं ह पितोपेक्ष्योवाच वेत्थ न्वायुष्मन्त्संवत्सरस्य गाधप्रतिष्ठाऽइति वेदेति होवाचैतद्ध तद्विद्वानुवाच ॥ ९ ॥

इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥ १२।१।५ ॥ ( २-१ ) ॥

---

अथ षडग्निष्टोमान् । द्वादशशतमग्निष्टोमाः । द्वे चतुस्त्रिंशे शते उक्थ्यानाम् । द्वादश षोडशिनः । षष्टिः षडहाः । इति नु संवत्सरस्याप्तिः ॥ ७ ॥

द्वादश वै मासाः संवत्सरस्य । तेषामेतत्तेजः, इन्द्रियं यत्पृष्ठानि । तद्यन्मासि मासि पृष्ठान्युपयन्ति । मासश एव तत्संवत्सरस्य तेज आप्नुवन्ति । अथ कथं त्रयोदशस्य मासस्य तेज आप्नुवन्ति इति । उपरिष्टाद् विषुवतो विश्वजितं सर्वपृष्ठमग्निष्टोममुपयन्ति । एवमु त्रयोदशस्य मासस्य तेज आप्नुवन्ति ॥ ८ ॥

एतद्ध स्म वै तद्विद्वानाह श्वेतकेतुरारुणेयः । संवत्सराय न्वा अहं दीक्षिष्य इति । तं ह पितोपेक्ष्योवाच । वेत्थ न्वायुष्मन् संवत्सरस्य गाधप्रतिष्ठा इति । वेदेति होवाच । तद्ध तद्विद्वानुवाच ॥९॥

तुदाहुः । कुस्मादुभयुतोज्योतिपोऽभिप्लुवा भुवन्त्यन्युतोज्योतिः पृष्ठ्यऽ इतीमे वै लोकाऽ अभिप्लुवाऽ उभयुतोज्योतिषो वा ऽइमे लोकाऽ अग्निनेतुऽ आदित्येनामुतुऽऋतुवः पृष्ठ्योऽन्युतोज्योतिषो वाऽ ऋतुवऽ एषऽ एषां ज्योतिर्य्युऽ एष तुपति ॥ १ ॥

देवचक्रे वाऽ एते पृष्ठ्यप्रतिष्ठिते । यजमानस्य पाप्मानं तृꣳहतो परिप्लवेते स यो हैवं विदुषां दीक्षितानां पापकꣳ संशं कीर्त्तयत्येते हास्य देवचक्रे शिरश्छिन्तो दशरात्रऽ उद्भिः पृष्ठ्याभिप्लवौ चक्रे ॥ २ ॥

---

तदाहुः—कस्मादुभयतोज्योतिषोऽभिप्लवा भवन्ति । अन्यतोज्योतिः पृष्ठ्य इति । इमे वै लोका अभिप्लवाः । उभयतोज्योतिषो वा इमे लोकाः—अग्निनेतः, आदित्येनामुतः । ऋतवः पृष्ठ्यः । अन्यतोज्योतिषो वा ऋतवः । एष एषां ज्योतिः । य एष तपति ॥ १ ॥

देवचक्रे वा एते पृष्ठ्यप्रतिष्ठिते यजमानस्य पाप्मानं तृंहती परिप्लवेते । स यो हैवं विदुषां

---

क्रमाच्च पूर्वपक्षे अभिप्लवपूर्वा मासाः । उत्तरपक्षे तु—पृष्ठ्यपूर्वा सेत्स्यति । तदाह—द्वादश मासा । माससम्मिता त्रिंशसंख्याका अस्य कर्मसंवत्सरस्य भागा कल्प्या इति शेषः । तेषां द्वादशानां माससम्मितानां कर्मभागानामन्त स्थाना ' तेज '। " तिज निशाने "। ( धा. पा. चु. प. ११९ ) इति धातुः । अतिशयेन तीक्ष्ण इन्द्रियं वर्द्धयन् स्वकार्यक्षमनममित्यर्थः । ' य पृष्ठानि ' पृष्ठस्तोत्रसाधनानि रथन्तरादीनि । तैरत्र पृष्ठ्या षडहमुपयन्ति । तेन ' मासश ' मासं मासे संवत्सरस्य तेजसि स्थानमगम् । तदाप्नुवन्तीत्येव प्रतिमास पृष्ठ्याहृतिरुच्यते । अथ कथमिति । त्रयोदशमासस्य यत् । एतद्ध स्मेति । ' गाधप्रतिष्ठा ' ( संवत्सराग्नितेज स्वयेच्छेति द्रष्टव्यम् । ) सर्वेषामेतेषामत्र वचनात् ॥ ८ ॥ ९ ॥

इति श्रीमदाचार्यहरिस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे
द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ॥ ( १२ । २ । १ ) ॥

**तदाहुः कस्मादिति** । प्रतिमास पृष्ठ्याभिप्लवौ उपेतव्याविति युक्तम् । तावेव तु अत्र आधियज्ञिकेन आधिदैविकेन च रूपेण निरूप्येते । ज्योति शब्देनाग्निष्टोम उच्यते । ' उभयत ' अद्यावन्ते च ज्योतिरग्निष्टोमो यस्य मध्य, चत्वार उक्थ्या । एकश्च षोडशी सोऽन्यतोज्योति । कुत एतत्, उत्तरत्रास्य ' उभयतोज्योति '। तादृशाश्चत्वार अभिप्लवा । ' अन्यत ' अन्यतर आदावेव ज्योतिरग्निष्टोमो यस्य अन्ये चत्वार उक्थ्या, ' एकश्च षोडश', स ' अन्यतोज्योति '। कुत एतत् । उत्तरस्य क्षीरकरणात् । नव अग्निमा मासि सम्पद्यन्ते । एकविंशतिरुक्थ्या । एक उक्थ्य षोडशिमानिति । सर्वमिदं स्पष्टीकरिष्यते । इमे वै लोका अभिप्लवा इति । ज्योतिर्गौरायुरित्येत एव तु ये अनुलोमा प्रतिलोमाश्च अभिप्लवा ते त्रित्वसामान्यल्लोका इति अभिप्राय । ' ऋतव पृष्ठ्या ' षट्त्वसामान्यात् ॥ १ ॥

' देवचक्रे '। ' एते ' यौ पृष्ठ्याभिप्लवौ एते देवानां रथचक्रे । कुत एतत् रथचक्रे इति । " दशरात्र

तदाहुः । (स्तु) यत्समऽएव चक्रे भवतोऽथैते विषमा स्तोमाः कथमस्यैते समा स्तोमाऽउपेता भवन्तीति यदेव षडन्यान्यहानि षडन्यानि तेनेति ब्रूयात् ॥ ३ ॥

(स्पृ) पृष्ठ्याभिप्लवौ तन्त्रे कुर्वीतेति ह स्माह पैङ्ग्यः । (स्तु) तयोः स्तोत्राणि च शस्त्राणि च सञ्चारयेदिति स यत्सञ्चारयति तस्मादिमे प्राणा नाना सन्तऽएकोतयः समानमूतिमनु सञ्चरन्त्यथ यत्र सञ्चारयेत्प्रमायुको यजमानः स्यादेष ह वै प्रमायुको योऽन्धो वा बधिरो वा ॥ ४ ॥

---

दीक्षितानां पावकं सत्रे कीर्तयति । एते ह्यस्य देवचक्रे शिरसिऽउतः । तथात्र उदिः । पृष्ठ्याभिप्लवौ चक्रे ॥ २ ॥

तदाहुः—यत्समे एव चक्रे भवतः । अथैते विषमाः । स्तोमाः । कथमस्यैते समा स्तोमाः । उपेता भवन्तीति । यदेव षडन्यान्यहानि षडन्यानि । तेनेति ब्रूयात् ॥ ३ ॥

पृष्ठ्याभिप्लवौ तन्त्रे कुर्वीत । इति ह स्माह पैङ्ग्यः । तयोः स्तोत्राणि च शस्त्राणि च सञ्चारयेदिति । स यत्संचारयति । तस्मादिमे प्राणा नाना सन्त एकोतयः समानमूतिमनु सञ्चरन्ति । अथ यत्र संचारयेत् । प्रमायुको यजमानः स्यात् । एष ह वै प्रमायुकः । योऽन्धो वा बधिरो वा ॥४॥

---

उदिः" इति वचनात् । पृष्ठ्यप्रतिष्ठिते इति । 'पृष्ठ्यप्रतिष्ठिते' 'यजमानस्य प्राणानम्' पानमरहन्तव्यम् 'वृहती' इति परिस्तरेते । कथं पुन पृष्ठ्यप्रतिष्ठिते नाम अभिप्लवे नारभ्ये ? पृष्ठ्ये नाम तिष्ठते । स च बलवत्तर इत्येतत् एतेन प्रकारेणोच्यते च । केनेति च पृष्ठ्यस्य गुरुत्व चेति । "अतिरिक्त, सर्वे स्तोमे सर्वे पृष्ठे गुरुत्व सामभि स्वर्गं लोकमश्नुवन्" । तस्मात् पृष्ठ्य इति । ततश्च पृष्ठ्यो महावीर्यत्वात् आत्मप्रतिष्ठित इत्येतदभिप्राय पृष्ठ्यप्रतिष्ठितत्व द्रष्टव्यम् । 'दशपात्र उदिः' दर्शित्वात् ॥ २ ॥

तदाहुः यत्समे एव चक्रे भवतोऽथ विषमा एते स्तोमा इति । युग्मानिवृतो स्तोमा । पृष्ठ्ये त्रिवृदादयः षट्, प्रतिदिनमेकैकः । अभिप्लवे चत्वार एव त्रिवृदादयः । यदेव षडन्यानीति । यद्यपि स्तोमेयुग्मान एते चक्रे । तथापि अहःसंख्यया समे इत्यर्थः । ततश्च स्तोमसमता अपि ते षट् भवन्तीत्यभिप्रायः ॥३॥

'पृष्ठ्याभिप्लवौ' न केवल पृष्ठ्याभिप्लवौ स्तोत्रदेवत्य इत्युपासीत इति नाहं तन्त्रे एते इत्युपासीत नोतने इति । तन्त्रता च का । ( यथा कुर्विन्दयदत्र पतानकं कुरुन् । तत्र वततमम् । ते त भूत वासेनेव । तत्रोपृष्ठ्याभिप्लवाभ्यासाभिवत्तो न युज्यते । तत्र स्वस्वभावभूतान् षडहस्तोत्रशस्त्रान् त्रिवृदादयस्ते सचाराः । षष्ठोत्तमसंत्री । पूर्वस्मिन् वा हत्यन्त स्तम्भनुसरन् । स्तोत्रं कुर्वात । ) तदनुसारा पृष्ठ्यादयो नानित्याः सन्तः सन्त समानमपि स्वर्गादुदयशादीननुसञ्चरन्ति ॥ ४ ॥

नवाग्निष्टोमा मासि सम्पद्यन्ते । नव वै प्राणाः प्राणानेवैष्वेतद्दधाति तथा सर्वमायुर्यन्ति तथो ह न पुराऽऽयुषोऽस्माल्लोकात्प्रयन्ति ॥ ५ ॥

(स्त्ये) एकविंशतिरुक्थ्याः । (०) द्वादश वै मासाः सम्वत्सरस्य पञ्चर्तव-स्त्रयो लोकास्तद्विंशतिरेषऽएवैकविंशो यऽ एष तपत्येतामभिस-म्पदं सऽ एतया सम्पदा मासि मासि स्वर्गं लोकं रोहति मासशः स्वर्गं लोकं समश्नुतऽ एकविंशश्च स्तोमम्बृहती च छन्दः ॥ ६ ॥

( श्रु ) चतुस्त्रिंशदग्निष्टोमा मासि सम्पद्यन्ते । त्रयस्त्रिंशद्वै देवाः प्रजापतिश्चतुस्त्रिंशः सर्वासान्देवतानामाप्त्याऽ एकऽ उक्थ्यः षोड-शिमानन्नं वाऽउक्थ्या वीर्यं षोडशी ॥ ७ ॥

( इये ) एतेन वै देवाः । ( ० ) वीर्येणान्नेन सर्वान्कामानाप्नुवन्त्सर्वा-न्कामानाश्नुवत तथाऽएवैषऽएतेन वीर्येणान्नेन सर्वान्कामानाप्नोति

---

नवाग्निष्टोमा मासि सपद्यन्ते । नव वै प्राणाः । प्राणानेवैष्वेतद्दधाति । तथा सर्वमायुर्यन्ति । तथा उ ह न पुराऽऽयुषोऽस्माल्लोकात्प्रयन्ति ॥ ५ ॥

एकविंशतिरुक्थ्याः । द्वादश वै मासाः संवत्सरस्य । पञ्चर्तवः । त्रयो लोकाः । तद्विंशतिः । एष एवैकविंशः । य एष तपति एतामभिसंपदम् । स एतया सपदा मासि मासि स्वर्गं लोकं रोहति । मासशः स्वर्गं लोकं समश्नुते । एकविंशं च स्तोमं बृहतीं च छन्दः ॥ ६ ॥

चतुस्त्रिंशदग्निष्टोमा मासि सपद्यन्ते । त्रयस्त्रिंशद्वै देवाः । प्रजापतिश्चतुस्त्रिंशः । सर्वासां देवताना-माप्त्यै । एक उक्थ्यः षोडशिमान् । अन्नं वा उक्थ्यः । वीर्यं षोडशी ॥ ७ ॥

एतेन वै देवा वीर्येणान्नेन सर्वान् कामानाप्नुवन् । सर्वान् कामानाश्नुवत । तथा उ एवैष एतेन

---

'नवाग्निष्टोमा' प्रथम एव मासे भवन्ति चतुर्थाभिप्लवे पृष्ठ्ये षार्ष्टिके नवम । 'प्राणानेवैषु' । एतद् एव कुर्वन् आयुर्दधाति ॥ ५ ॥

'एकविंशति' आभिप्लविका षोडश उक्थ्या । पाष्ठिका पञ्च । सहषोडशिमानिति चतुस्त्रिंशत् सा एक-विंशतिरुक्थ्या । तेषां द्वादशभि स्तोत्रैर्विंशतिरग्निष्टोमो भवति । ॥ । त्रीणि च स्तोत्राणि अतिरिक्तानि तानि पृष्ठैर्भवन्ति । पूर्वं सह चतुस्त्रिंशदग्निष्टोमा मासशः सपद्यते । अपरा एव उक्थ्या षोडशिनोऽभ्यासे भवन्ति । उक्थ्यस्योपरि षोडश्यतिरिक्तो भवतीत्यर्थ । (अत वै उच्छ्रामूस्य त्रिंशस्तो प्रस १) स्तोत्रशस्त्राणि भवति । (मदमद-करोविविराद्विराद् इत्यानुमिति श्रुतेर्वीर्यषोडशपर्वणकर्वीर्येनद्वानिंद्रो अस्य देवत सोऽपि वीर्यतदीय स्तोत्रम् । तदन्वया षोडशिनोऽभ्यस्तदु तत्वीर्यवदित्यभिप्राय २) 'एतेन वै' वीर्येणान्नेन चेति चशब्दो वक्तव्य ॥६-८॥

सर्वान्कामानश्नुते तस्मात्पृष्ठ्याभिप्लवाऽ उपैवेयात्सम्वत्सराय दीक्षितऽ एतस्मै कामाय ॥ ८ ॥

( गा ) अथादित्याश्च ह वाऽ अङ्गिरसश्च । ( श्रो ) उभये प्राजापत्याऽ अस्पर्द्धन्त व्ययम्पूर्वे स्वर्गं लोकमेष्यामो व्ययम्पूर्वाऽ इति ॥ ९ ॥

तऽ आदित्याः । ( श्च ) चतुर्भि स्तोमैश्चतुर्भिः पृष्ठैर्लघुभिः सामभिः स्वर्गं लोकमभ्यप्लवन्त यदभ्यप्लवन्त तस्मादभिप्लवाः ॥ १० ॥

अन्वञ्चऽ इवाङ्गिरसः । सर्वैः स्तोमैः सर्वैः पृष्ठैर्गुरुभिः सामभिः स्वर्गं लोकमस्पृशन्यदस्पृशँस्तस्मात्पृष्ठ्यः ॥ ११ ॥

( प्रयोऽभि ) अभिप्लवः षडहः । षड्ढ्यहानि भवन्त्यभिप्लवः पञ्चाहः पञ्च ह्यहानि भवन्ति यद्ध्येव प्रथममहस्तदुत्तममभिप्लवश्चतुरहश्चत्वारो हि स्तोमा भवन्ति त्रिवृत्पञ्चदशः सप्तदशऽ एकविंशऽ इत्यभिप्लवस्त्र्यहस्त्र्यावृद्धि ज्योतिर्गौरायुरभिप्लवो द्व्यहो द्वे ह्येव सामनी भवतो बृहद्रथन्तरेऽ एवाभिप्लवऽ एकाहऽएकाहस्यो हि स्तोमैस्तायते चतुर्णामुक्थ्यानां द्वादश स्तोत्राणि द्वादश शस्त्राण्युतियन्ति स सप्तमोऽग्निष्टोमऽ एवमु सप्ताग्निष्टोमाः संपद्यन्ते ॥ १२ ॥

---

वीर्येणानेन सर्वान् कामानाप्नोति । सर्वान् कामानश्नुते । तस्मात् पृष्ठ्याभिप्लवाऽपैवेयात्-संवत्सराय दीक्षित एतस्मै कामाय ॥ ८ ॥

अथादित्याश्च ह वा अंगिरसश्च उभये प्राजापत्या अस्पर्द्धंत । वयं पूर्वे स्वर्गं लोकमेष्यामो वयं पूर्वे इति ॥ ९ ॥

त आदित्याश्चतुर्भिः स्तोमैश्चतुर्भिः पृष्ठैर्लघुभिः सामभिः स्वर्गं लोकमभ्यप्लवन्त । यदभ्यप्लवन्त । तस्मादभिप्लवाः ॥ १० ॥

अन्वंच इवांगिरसः सर्वैः स्तोमैः सर्वैः पृष्ठैर्गुरुभिः सामभिः स्वर्गं लोकमस्पृशन् । यदस्पृशन् । तस्मात् पृष्ठ्यः ॥ ११ ॥

अभिप्लवः षडहः । षड्ढ्यहानि भवन्ति । अभिप्लवः पञ्चाहः । पञ्च ह्यहानि भवन्ति । यद्ध्येव प्रथममहः । तदुत्तमम् । अभिप्लवश्चतुरहः । चत्वारो हि स्तोमा भवन्ति । त्रिवृत् पञ्चदशः सप्तदश

---

अथादित्याश्चेति । निर्वचनकदिशा स्ना प्रश्नना । अभिप्लवा यस्य उसाम्या इति शेष ॥ ९-११ ॥

यद्ध्येव प्रथममहस्तदुत्तममिति । एक एव सोऽग्निष्टोम चोदन इत्यभिप्राय । ' चत्वारो हि स्तोमा भवन्तीति ' इमामन्तर्भूतस्तोमानस्यामहर्मध्ये चत्वारे सामान्युत्तमानित्यभिप्राय । ज्योतिरिति प्रधानान्ता

कति त्वेवेति । नवेति होवाच नव वा३ इति होवाच नव वै प्राणाः प्राणैरु यज्ञस्तायते ॥ १५ ॥

कति त्वेवेति । ( त्य ) अष्टेति होवाचाष्टौ वा ३इति होवाचाष्टाक्षरा गायत्री गायत्रो यज्ञः ॥ १६ ॥

कति त्वेवेति । सप्तेति होवाच सप्त वा३इति होवाच सप्त च्छन्दाꣳसि चतुरुत्तराणि च्छन्दोभिरु यज्ञस्तायते ॥ १७ ॥ ( अर्द्धप्रपाठकः ॥ ६६ ॥ )

कति त्वेवेति । षडिति होवाच षड्वा ३इति होवाच षडृतवः सम्वत्सरः सम्वत्सरो यज्ञः समानमेतदहरुभयत्प्रायणीयोदयनीयौ ॥ १८ ॥

---

कति त्वेवेति । नवेति होवाच । नव वा इति होवाच । नव वै प्राणाः । प्राणैरु यज्ञस्तायते ॥ १५ ॥

कति त्वेवेति । अष्टेति होवाच । अष्टौ वा इति होवाच । अष्टाक्षरा गायत्री । गायत्रो यज्ञः ॥ १६ ॥

कति त्वेवेति । सप्तेति होवाच । सप्त वा इति होवाच । सप्त च्छन्दांसि चतुरुत्तराणि । छन्दोभिरु यज्ञस्तायते ॥ १७ ॥

कति त्वेवेति । षडिति होवाच । षड्वा इति होवाच । षड् ऋतवः संवत्सरः । संवत्सरो यज्ञः । समानमेतदहः—यत् प्रायणीयोदयनीयौ ॥ १८ ॥

---

कति त्वेवेति । ( अभेकत्वेदमिमस्यदशनममिति मन्यमानः ) आचार्यः पुनः पुनः पप्रच्छ कति त्वेवेति । पुनरपि कति नव विना सम्वत्सरस्य अवयवभूतानि अहानि त्याम्ने स्मेति । नवेति होवाच । ' नवाहानि सम्वत्सरस्य मन पिताऽमन्यतेयुवाच ' कुमारः । ' नव वै इति होवाच ' । नव वै सम्वत्सरस्याहानि यथा असौ मन्यते तथैव तत् इति आचार्यः परममनुमेने । नव वै प्राणा इत्युपपत्तिमाचार्य एवाह । स च कति प्राणतत्त्वं न दृश्यान्यहानि समर्हाण्युपपत्तिं । अथ यानि पूर्वं टीकायां दशाहानि गणितानि । तेषां यत् दशमं तदिदानीं वा गणं इति ? उच्यते—उदयनीयं प्रायणीयं न भवति अतिरात्रत्वादेतत्वाच्चेत्यभिप्रायः । यत नव वदति । " समानमेतदहर्यत्प्रायणीयोदयनीयौ " इति । ननु अत्र कण्डिकायां अहस्य द्रष्टव्य, तत्रानुपयोगात् । कथमनुपयोगः । प्रायणीयोदयनीययोः अनन्यत्वे सति नवाहानामुपपादने न भवति । ( समाना देवाभिकर्तानिषद्वावर्तु दशानां दशमे नानुकम्पिताम । ? ) प्रायणीयोदयनीयावितरादि ॥ १५ ॥

कति त्वेवेति । " समानमेतदहर्यच्चतुर्विंशमहाव्रते " इत्येतदत्र द्रष्टव्यम् तयोरैक्ये सति अहानि भवन्ति ॥ १६ ॥

कति त्वेवेति । " समानमेतदह यत्पृष्ठ्यानिदृशौ "—इत्यादत्र द्रष्टव्यम् । तयोरैक्ये सति सप्ताहानि भवन्ति ॥ १७ ॥ १८ ॥

कति त्वेवेति । पञ्चेति होवाच पञ्च वाऽइति होवाच पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः सम्वत्सरस्य सम्वत्सरो यज्ञः समानमेतदहर्यच्चतुर्विंशमहाव्रते ॥ १९ ॥

कति त्वेवेति । चत्वारीति होवाच चत्वारि वाऽइति होवाच चतुष्पादाः पशवः पशवो यज्ञः समानमेतदहर्यत्पृष्ठ्याभिप्लवौ ॥ २० ॥

कति त्वेवेति । त्रीणीति होवाच त्रीणि वाऽइति होवाच त्रीणि च्छन्दाᳪंसि त्रयो लोकास्त्रिसवनो यज्ञः समानमेतदहर्यदभिजिद्विश्वजितौ ॥ २१ ॥

कति त्वेवेति । द्वेऽइति होवाच द्वे वाऽइति होवाच द्विपाद्वै पुरुषः पुरुषो यज्ञः समानमेतदहर्यत्स्वरसामानः ॥ २२ ॥

कति त्वेवेति । (त्ये) एकमिति होवाचाहरेवेति तदेतदहरहरिति सर्व्वᳪं संवत्सरᳪंᳫ सैषा संवत्सरस्योपनिषत्स यो हैवमेताᳪंᳫ संवत्सरस्योपनिषदं

---

कति त्वेवेति । पञ्चेति होवाच । पञ्च वा इति होवाच । पाङ्क्तो यज्ञः । पाङ्क्तः पशुः । पंचर्तवः संवत्सरस्य । संवत्सरो यज्ञः । समानमेतदहः—यत् चतुर्विंशमहाव्रते ॥ १९ ॥

कति त्वेवेति । चत्वारीति होवाच । चत्वारि वा इति होवाच । चतुष्पादाः पशवः । पशवो यज्ञः । समानमेतदहः—यत् पृष्ठ्याभिप्लवौ ॥ २० ॥

कति त्वेवेति । त्रीणीति होवाच । त्रीणि वा इति होवाच । त्रीणि च्छंदांसि । त्रयो लोकाः । त्रिसवनो यज्ञः । समानमेतदहः—यदभिजिद्विश्वजितौ ॥ २१ ॥

कति त्वेवेति । द्वे इति होवाच । द्वे वा इति होवाच । द्विपाद्वै पुरुषः । पुरुषो यज्ञः । समानमेतदहः—यत्स्वरसामानः ॥ २२ ॥

कति त्वेवेति । एकमिति होवाच । अहरेवेति । तदेतदहरहरिति सर्वं संवत्सरम् । सैषा संवत्सर-

---

कति त्वेवेति । "समानमेतदहर्यदभिजिद्विश्वजितौ"—इत्यत्र स्वरसामान इत्येतदत्र द्रष्टव्यम् । तयोर्हि स मुक्तियोरेकत्वे सति पञ्च वा अहानि भवन्ति ॥ १९ ॥

कति त्वेवेति । अत्राप्येतत् द्रष्टव्यम् । समानमेतदहर्यदभिजित् । कुत ? पूर्वेषां समानानुवचनानां प्रदर्शनार्थत्वात् । एवं सति चतुष्ट्वोपपत्तेः ॥ २० ॥

कति त्वेवेति । 'समानमेतदहर्यदभिजिद्विश्वजितौ' इत्येतदत्र द्रष्टव्यम् । एवं सति त्रित्वोपपत्तेः ॥ २१ ॥

कति त्वेवेति । 'समानमेतदहर्यत् स्वरसामान' इति चतुर्विंशाभिप्लवौ इत्येतदत्र द्रष्टव्यम् । एवमेतद्द्वित्वोपपत्ते ॥ २२ ॥

कति त्वेवेति । "समानमेतदहर्य प्रायणीयश्चतुर्विंश" इत्येतदत्र द्रष्टव्यम् । एवमेवैकत्वोपपत्ते । (सर्वेषु । तवैतेष्वन्नेनिति ?) अहरिति प्रत्यासत्तिर्हनमेकत्वमिति वाक्यम् । तदेतदहरहरिति सर्वं संवत्सरमाय वक्ष्यते प्रति-

वेद। हास्माच्छ्रेयाञ्जायते सात्मा भवति सम्वत्सरो भवति सम्वत्सरो भूत्वा देवानप्येति ॥ २३ ॥

इति प्रथमप्रपाठके षष्ठं ब्राह्मणम् ॥ १२-१-६ ॥ ( २. २. ) ॥

स वाऽ एष सम्वत्सरो बृहतीमभिसम्पन्नः । ( त्रो ) द्वावाश्यैतामह्नाॅं षडहौ द्वौ पृष्ठ्याभिप्लवौ गोऽआयुषी दशरात्रस्तत्षट्त्रिंशत्षट्त्रिंशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गं लोकेऽयतन्त बृहत्या स्वर्गं लोकमाप्नुवंस्तथाऽ एवैषऽ एतद्बृहत्यैव स्वर्गे लोके यतते बृहत्या स्वर्गं लोकमाप्नोत्यथ यो बृहत्यां कामस्तमेवैतेनैवम्विदवरुन्धे ॥ १ ॥

षष्ठे चतुर्विंशमहः ।( र्द ) दशरात्रस्य वै तत्सप्तमं वा नवमं वाऽभिप्लवात्पृष्ठ्यो निर्म्मितः पृष्ठ्यादभिजिदभिजितः स्वरसामानः स्वर-

स्योपनिषत् । स यो हैवमेतां संवत्सरस्योपनिषदं वेद । आ हास्मात् श्रेयान् जायते । सात्मा भवति । संवत्सरो भवति । संवत्सरो भूत्वा देवानप्येति ॥ २३ ॥

स वा एष संवत्सरो बृहतीमभिसंपन्नः । द्वावाश्यैतामह्नां षडहौ । द्वौ पृष्ठ्याभिप्लवौ । गोआयुषी । दशरात्रः । तत् षट्त्रिंशत् । षट्त्रिंशदक्षरा वै बृहती । बृहत्या वै देवाः स्वर्गे लोकेऽयतत । बृहत्या स्वर्गं लोकमाप्नुवन् । तथा उ एवैष एतद् बृहत्यैव स्वर्गे लोके यतते । बृहत्या स्वर्गं लोकमाप्नोति । अथ यो बृहत्यां कामः । तमेवैतेनैवम्विदवरुंधे ॥ १ ॥

षष्ठे चतुर्विंशमहः । दशरात्रस्य वै तत्सप्तमं वा नवमं वा । अभिप्लवात् पृष्ठ्यो निर्मितः । पृष्ठ्यादभिजित् । अभिजितः स्वरसामानः । स्वरसामभ्यो विषुवान् । विषुवतः स्वरसामानः ।

यतिरिति प्रत्यभिज्ञार्थकमाह—एव चात्र प्रायणीयेऽतिरात्रे सवत्सर उपसद्गत । तथा च—" यदेवादः प्रायणीयेऽतिरात्रमुपयन्ति " इत्येतद्दर्शयिष्यति । ' सैषा सवत्सरस्योपनिषत् ' । सङ्क्षिप्ता सा एषा दशरात्रपृष्ठ्य-विरत्यादिः सवत्सरस्योपनिषत् । उप समीपे प्रमाया सर्वं नियत सीदत्यनयेत्युपनिषत् । सङ्क्षिप्त. सवत्सरस्य प्रतिरूपमुपाय इत्यर्थ. । आजायते एवाम्मात् श्रेयान् पुत्र । स्वय च सात्मा भवति । अहमात्मना स्थिरेण देवेनेत्यभिप्रायः । सवत्सरः सम्पन्ना देवान्स सेन्द्रियाभिज्ञाना भूत्वा देवानप्नोति ॥ २२ ॥

इति श्रीमदाचार्यहरिस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे द्वितीयेऽध्याये द्वितीय ब्राह्मणम् ॥ १२ । २ । २ ॥

' स वा एष. ' । एष एव सवत्सर. सवत्सरदिवसनभिमित. प्रयुक्त कर्मराशि बृहतीच्छन्दोऽभिनिवृत्तः यावन्ति बृहतीषु ऋक्षु अक्षराणि तावन्ति अहानि सम्पन्नानि उपास्यानीति शेष । बृहत्या अतो दशनियदि सर्वं । कथ बृहतीमभिसम्पन्न इत्याह—' द्वौ आश्यैतामह्नां षडहौ ' यावन्त्यहानि द्वावभिप्लवदशरात्रगोआयुषि

समभ्यो विषुवान्विषुवतः स्वरसामानः स्वरसामभ्यो विश्वजिद्विश्वजितः पृष्ठ्यः पृष्ठ्यादभिप्लवोऽभिप्लवाद्गोऽआयुषी गोऽआयुर्भ्यां दशरात्रः ॥ २ ॥

( श्रोऽथै ) अथैतदुहराध्यंत । ( यु ) यन्महाव्रतं पञ्चविंशो ह्येतस्य स्तोमो भवति नाक्षराच्छन्दो व्येत्येकस्मान्न द्वाभ्यान्न स्तोत्रियया स्तोमः ॥ ३ ॥

( मोऽभि ) अभिप्लवं पूर्व्वं पुरस्ताद्विषुवत उपयन्ति । पृष्ठ्यमुत्तरम्पुत्रा वाऽअभिप्लवः पिता पृष्ठ्यस्तस्मात्पूर्व्वे वयसे पुत्राः पितरमुपजीवन्ति पृष्ठ्यमुपरिष्टाद्विषुवतः पूर्व्वमुपयन्त्यभिप्लवमुत्तरन्तस्मादुत्तर-

---

स्वरसामभ्यो विश्वजित् । विश्वजित पृष्ठ्य. । पृष्ठ्यादभिप्लवः । अभिप्लवाद् गोआयुषी । गोआयुर्भ्यां दशरात्रः ॥ २ ॥

अथैतदुहराध्यंत्, यन्महाव्रतम् । पञ्चविंशो ह्येतस्य स्तोमो भवति । नाक्षराच्छन्दो व्येत्येकस्मात् । न द्वाभ्याम् । न स्तोत्रियया स्तोम. ॥ ३ ॥

अभिप्लव पूर्वं पुरस्तात् विषुवत उपयन्ति । पृष्ठ्यमुत्तरम् । पुत्रा वा अभिप्लवः । पिता पृष्ठ्यः । तस्मात् पूर्वे वयसे पुत्राः पितरमुपजीवन्ति । पृष्ठ्यमुपरिष्टाद् विषुवतः पूर्वमुपयन्ति । अभिप्लवमुत्तरम् ।

---

भ्यु । नावना पञ्चत्रिंशदक्षरा बृहतीत्याचक्षते । ( आप्नुवन्ध क्रियत मनारणोऽय । शमङ्गाम ठादस । ?) आकण्णस्वयान एवाभिपियनि न प्रदेशानर आवनन इत्यर्थं । एतया द्वौ षडहौ द्वादशाहानात्यर्थं । प्रायणीयोदयनीयो मनिदुविश्वजिनुविषुव महाव्रतानाल्यक षडह । स्वरसामा निनान । चतुर्विंशो दशरात्रश्च सस्तोमा नृताय । ( सतमान्वतिरवस्यति ? ) ननश्च न द्वादशाहसनामहा षडहाविषुवन्तः । अनया 'बृहत्या' 'वै देवा ' स्वर्गं लोक निमिन स्वगायमित्यर्थं । ' अयनन ' प्रयन्न कृनवन्न । अनया बृहत्या आनुवन्न स्वर्गम् । अथ यो बृहत्यां द्वादशमानाश्चतुर्विंश निरुक्तमामा इत्यवमाभिका । समन्नमव न बृहत्यामप कन सवन्सरण एवमुपामनोत्रद ' स्वाकरोति । द्वि चतुर्विंशमपि अह अस्ति । ता न द्वादशाहसनामहा षडहा इत्युच्यते । कथ वा बृ०तामभिसंपन्न इति अत आह—षड्वे चतुर्विंशमहरिति । दशरात्रमत्र समेतत् । तत्र प्रतिवद्धानाश्यत् । नन न बृहत्या एव प्रतिवद्ध्य । अभिप्लवपृष्ठ्यो निमन ( इत्यादिभिनाममभिक ?) ननगनिरात्रस्यानयाल सत्रापवाहानि पृष्ठ्याभिप्लवप्रतिवद्ध्या निमनचादिनि महाव्रतमव नद्वैवमाध्येत् सवमतिनि दर्शनम् । पञ्चविंशो ह्येतस्य महाव्रतस्य स्तोमो भवति । नान्य कस्यचित् । ततश्च स्तोमसामान्यऽपि सत्र नत् क्वचिदन्यभवनाभिप्राय । नाक्षराच्छन्दो व्येतीति । ( नन्वाप्यनन्तनविचन यगापि नम्य ये भवितु स्वामन्यथापि तथोऽत्र निगवद्धनि वान्यामसाम्यादन्यानमया एकस्मात्स्तोत्रियया द्वाभ्या स्तोमो- भिवान यथा छन्द एकस्मात् द्वाभ्यामव्यव्यमिति । ननश्चाभिप्लवनैव प्रकृतिभूतन आतिरात्रात् तदभिप्रेति सवनानि दर्शानि ? ) ॥ १–३ ॥

अभिप्लव पूर्वमिति । पूर्वं षडसु मासषु अभिप्लव पृष्ठ्यान् पूर्वं विनरामनुनप इत्येनत् । अत्रापि पिता

वयसे पुत्रान्पितोपजीवत्युप ह वाऽ एनं पूर्ववयसे पुत्रा जीवन्त्युपो-त्तरवयसे पुत्राञ्जीवति यऽएवमेतद्वेद ॥ ४ ॥

तदाहुः । ( स्त्री ) यच्चतुर्विंᳬशमहरुपेत्य प्रेयात्कथमनागूर्ता भव-तीति यदेवादः प्रायणीयमतिरात्रमुपयन्ति तेनेति ब्रूयात् ॥ ५ ॥

( त्त ) तदाहुः । ( स्त्री ) यद्द्वादशमासाः सम्वत्सरस्याथैतदहरत्येति यद्वै-षुवतमवरेपामेता ३ त्परेपा ३ मित्यवरेपाश्चैव परेपाश्चेति ह ब्रूयादात्मा वै सम्वत्सरस्य विषुवानङ्गानि मासा यत्र वा ऽआत्मा तदङ्गानि यत्रोऽ अङ्गानि तदात्मा न वाऽ आत्माऽङ्गान्यतिरिच्यते नात्मानमङ्गान्यतिरि-च्यन्तऽएवमु हैतदवरेपाश्चैव परेपाश्च भवति ॥ ६ ॥

( त्य ) अथ ह वाऽ एष महासुपर्णऽएव यत्संवत्सरः । ( स्तु ) तस्य यान्पुरस्ताद्विषुवतः षण्मासानुपयन्ति सोऽन्यतरः पक्षोऽथ यान्षडुप-रिष्टात्सोऽन्यतरऽआत्मा विषुवान्यत्र वाऽआत्मा तत्पक्षौ यत्र वा पक्षौ तदात्मा न वाऽ आत्मा पक्षावतिरिच्यते नात्मानम्पक्षावतिरिच्येतेऽ-एवमु हैतदवरेपाश्चैव परेपाश्च भवति ॥ ७ ॥

---

तस्मादुत्तरवयसे पुत्रान् पितोपजीवति । उप ह वा एनं पूर्ववयसे पुत्रा जीवन्ति । उपोत्तरवयसे पुत्रान् जीवति । य एवमेतद्वेद ॥ ४ ॥

तदाहुः—यच्चतुर्विंशमहरुपेत्य प्रेयात् । कथमनागूर्ता भवतीति । यदेवादः प्रायणीयमतिरात्रमुपयन्ति । तेनेति ब्रूयात् ॥ ५ ॥

तदाहुः—यत् द्वादश मासाः संवत्सरस्य । अथतदहरत्येति । यत् वैषुवतम् । अवरेपामेता ३ त् परेषा ३ मिति । अवरेषा चैव परेषा चेति ह ब्रूयात् । आत्मा वै संवत्सरस्य विषुवान् । अंगानि मासाः । यत्र वा आत्मा तदंगानि । यत्रो अंगानि तदात्मा । न वा आत्मा अंगान्यतिरिच्यते । नात्मानमंगान्यतिरिच्यन्ते । एवमु हैतत् अवरेषा चैव परेषा च भवति ॥ ६ ॥

अथ ह वा एष महासुपर्ण एव । यत् संवत्सरः । तस्य यान् पुरस्तात् विषुवतः षण्मासानुपयन्ति । सः अन्यतरः पक्षः । अथ यान् षडुपरिष्टात् सः अन्यतरः । आत्मा विषुवान् । यत्र वा

---

पुत्रदर्शन सयुनक्त्युच्यते । तदाह—यदेवादः प्रायणीयमिति । प्रायणीय एवातिरात्र सर्वसंवत्सरमधादित "कति त्वेवैतैकमिति होवाच" इत्यत्राभिप्राय । तदाहुर्यत् पुरुषविधस्य विषुवान् शरीरलक्षणोदकबन्धागभूतेषु दुर्भेदेषु मस्तेषु मनस्तानेव पृथग्नुप्यते । पूर्वोत्तरपक्षगाम्यां च गृह्यते । इत्येनदुक्तपिण्डिकाद्वयेन निद-

साम्नोऽथैतदुहरनभ्यारूढं यद्वैषुवतमभि ह वै श्रेयाꣳसꣳ रोहति नैनम्पापीयानभ्यारोहति य ऽ एवमेतद्वेद ॥ १० ॥

( दा ) अथ वाऽअतोऽह्नान्निवाहः । प्रायणीयोऽतिरात्रश्चतुर्विꣳशायाह्ने निवहति चतुर्विꣳशमहरभिप्लवायाऽभिप्लवः पृष्ठ्याय पृष्ठ्योऽभिजितेऽभिजित्स्वरसामभ्यः स्वरसामानो विषुवते विषुवान्त्स्वरसामभ्यः स्वरसामानो विश्वजिते विश्वजित्पृष्ठ्याय पृष्ठ्योऽभिप्लवायाभिप्लवो गोऽआयुर्भ्यां गोऽआयुषी दशरात्राय दशरात्रो महाव्रताय महाव्रतमुदयनीयायातिरात्रायोदयनीयोऽतिरात्रः स्वर्गाय लोकाय प्रतिष्ठाया ऽ अन्नाद्याय ॥ ११ ॥

तानि वा ऽ एतानि । यज्ञारण्यानि यज्ञकृन्तत्राणि तानि शतꣳ शतꣳ रथाह्न्यान्यन्तरेण तानि ये विद्वाꣳस ऽ उपयन्ति यथाऽऽरण्यान्यां सुगां चरतोऽशनाया वा पिपासा वा पाप्मानो रक्षाꣳसि नचेरन्नेवꣳ हैवैनानशनाया वा पिपासा वा पाप्मानो रक्षाꣳसि सचन्तेऽथ ये विद्वाꣳसो

---

सामभिः परान् स्वरसाम्नः । अथैतदहरनभ्यारूढम् । यत् वैषुवतम् । अभि ह वै श्रेयांसं रोहति । नैनं पापीयानभ्यारोहति । य एवमेतद्वेद ॥ १० ॥

अथ वा अतोऽह्ना निवाहः । प्रायणीयोऽतिरात्रश्चतुर्विंशायाह्ने निवहति । चतुर्विंशमहरभिप्लवाय । अभिप्लवः पृष्ठ्याय । पृष्ठ्योऽभिजिते । अभिजित् स्वरसामभ्यः । स्वरसामानो विषुवते । विषुवान् स्वरसामभ्यः । स्वरसामानो विश्वजिते । विश्वजित् पृष्ठ्याय । पृष्ठ्योऽभिप्लवाय अभिप्लवो गोआयुर्भ्याम् । गोआयुषी दशरात्राय । दशरात्रो महाव्रताय । महाव्रतमुदयनीयायातिरात्राय । उदयनीयोऽतिरात्रः स्वर्गाय लोकाय प्रतिष्ठाया अन्नाद्याय ॥ ११ ॥

तानि वा एतानि यज्ञारण्यानि यज्ञकृन्तत्राणि । तानि शतं शतं रथाह्न्यानि । अंतरेण तानि ये विद्वांस उपयन्ति । यथाऽऽरण्यान्यां सुगां चरतोऽशनाया वा पिपासा वा पाप्मानो रक्षांसि सचे-

---

यथा प्रवाहात्प्रवाहमभयादभयमेवꣳ हैव ते देवतायै देवतामुपसंयन्ति ते स्वस्ति स्वर्गं लोकꣳ समश्नुवते ॥ १२ ॥

तदाहुः । कति संवत्सरस्याहानि पराञ्चि कत्यर्वाञ्चीति स यानि सकृत्सकृदुपयन्ति तानि पराञ्च्यथ यानि पुनः पुनस्तान्यर्वाञ्च्यर्वाञ्चीति ह त्वेवैनान्युपासीत षडहयोर्ह्यावृत्तिमन्वावर्तन्ते ॥ १३ ॥

इति प्रथमप्रपाठके सप्तमं ब्राह्मणम् ॥ १२–१–७ ॥ ( २. ३. ) ॥

पुरुषो वै सम्वत्सरः । ( स्तु ) तस्य प्राणऽएव प्रायणीयोऽतिरात्रः प्राणेन हि प्रयन्ति वागेवारम्भणीयमहर्वाचा ह्यारभन्ते यद्यदारभन्ते ॥१॥

( न्तेऽय ) अयमेव दक्षिणो हस्तोऽभिप्लवः षडहः । ( स्तु ) तस्येदमेव प्रथममहस्तस्येदमेव प्रातःसवनमिदम्माध्यंदिनꣳ सवनमिदन्तृतीयसवनङ्गायत्र्याऽआयतने तस्मादियमासाꣳ ह्रसिष्ठा ॥ २ ॥

---

रन् । एवं हैवैनानशनाया वा पिपासा वा पाप्मानो रक्षांसि सचंते । अथ ये विद्वांसो यथा प्रवाहात्प्रवाह अभयादभयम् । एवं हैव ते देवतायै देवतामुपसंयन्ति । ते स्वस्ति स्वर्गं लोकं समश्नुवते ॥ १२ ॥

तदाहुः–कति संवत्सरस्याहानि पराञ्चि । कत्यर्वाचीति । स यानि सकृत्सकृदुपयन्ति । तानि पराचि । अथ यानि पुनः पुनः । तान्यर्वांचि अर्वांचि इति ह त्वेवैनान्युपासीत । षडहयोर्हि आवृत्तिमन्वावर्तते ॥ १३ ॥

गवामयनीयसंवत्सरस्य पुरुषविधोपासनम् ।

पुरुषो वै संवत्सरः । तस्य प्राण एव प्रायणीयोऽतिरात्रः । प्राणेन हि प्रयन्ति । वागेवारंभणीयमहः । वाचा ह्यारभन्ते । यद्यदारभन्ते ॥ १ ॥

अयमेव दक्षिणो हस्तोऽभिप्लवः षडहः । तस्येदमेव प्रथममहः । तस्येदमेव प्रातःसवनम् । इदं माध्यंदिनं सवनम् । इदं तृतीयसवनम् । गायत्र्या आयतने । तस्मादियमासां ह्रसिष्ठा ॥ २ ॥

---

अविदुषां कृतनाणि । तानि तु विभ्रंयजिज्ञासामुपासका उपसयन्ति एतान् । तस्मात् आरण्यात् महति आरण्ये कश्चिचरत । अशनाया बुभुक्षा पिपासा वा । पाप्मानश्च पातनीया । रक्षांसि सचेरन् । एव अशनाया वा पिपासा पाप्मानो रक्षांसि सचते । अथ ये विद्वांस उपसयन्तीत्यादि प्रसन्नम् ॥ १२ ॥

तदाहु –' स यानि सकृत्सकृदुपयति ' । प्रायणीयचतुर्विंशाभिजिद्विश्वजित्छन्दोमाऽतिरात्रमहाव्रतोदयनीयानि पुन पुनरावृत्ताणि ' अर्वाञ्चि ' आवृत्तिधर्मकाणीति प्रायणीयादीन्यप्युपासीत । कथम् षडहयोर्हीति । आवृत्तिमनु षडहावृत्त्यैव तान्यप्यावर्तंते । मन साम्यन तदभिनिर्माणत्वेन च तदन्तर्भावादि-यथाभिप्राय ॥ १३ ॥

इति श्रीमदाचार्यहरस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे द्वितीयेऽध्याये

तृतीय ब्राह्मणम् ॥ ( १२ । २ । ३ ) ॥

' पुरुषो वै ' । पुरुष ' संवत्सर ' उपास्य इति शेष । प्राणस्यैवेन्द्रियात्मिका । ' आरम्भणीय ' आर-

( प्रेद ) इदमेव द्वितीयमहः । ( स्तु ) तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनन्त्रिष्टुभऽआयतने तस्मादियमस्यै व्वर्षीयसी ॥ ३ ॥

( मीद ) इदमेव तृतीयमहः । ( स्तु ) तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनं जगत्याऽ आयतने तस्मादियमासा-म्वर्षिष्ठा ॥ ४ ॥

( प्रेद ) इदमेव चतुर्थमहः । ( स्तु ) तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनम्विराजऽ आयतनेऽन्नम्वै विराट्तस्मादियमासामन्नादितमा ॥ ५ ॥

(मेद) इदमेव पञ्चममहः । (स्तु) तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनम्पङ्क्तेरायतने पृथुरिव वै पङ्क्तिस्तस्मादियमासाम्प्रथिष्ठः ॥ ६ ॥

( ऽ ) इदमेव षष्ठमहः । ( स्तु ) तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनमतिच्छन्दसऽआयतने तस्मादियमासा-

---

इदमेव द्वितीयमहः । तस्येदमेव प्रातःसवनम् । इदं माध्यन्दिनं सवनम् । इदं तृतीयसवनम् । त्रिष्टुभ आयतने । तस्मादियमस्यै वर्षीयसी ॥ ३ ॥

इदमेव तृतीयमहः । तस्येदमेव प्रातःसवनम् । इदं माध्यन्दिनं सवनम् । इदं तृतीयसवनम् । जगत्या आयतने । तस्मादियमासां वर्षिष्ठा ॥ ४ ॥

इदमेव चतुर्थमहः । तस्येदमेव प्रातःसवनम् । इदं माध्यन्दिनं सवनम् । इदं तृतीयसवनम् । विराज आयतने । अन्नं वै विराट् । तस्मादियमासामन्नादितमा ॥ ५ ॥

इदमेव पंचममहः । तस्येदमेव प्रातःसवनम् । इदं माध्यन्दिनं सवनम् । इदं तृतीयसवनम् । पंक्तेरायतने । पृथुरिव वै पंक्तिः । तस्मादियमासां प्रथिष्ठा ॥ ६ ॥

इदमेव षष्ठमहः । तस्येदमेव प्रातःसवनम् । इदं माध्यंदिनं सवनम् । इदं तृतीयसवनम् । अति

( ऽ ) उदरमेकविᳫँशः । ( शो ) विᳫँशतिर्वाऽ अन्तरुदरे कुन्तापान्युदरमेकविᳫँशन्तस्मादुदरमेकविᳫँशः ॥ १२ ॥

पार्श्वे त्रिणवः । ( त्र ) त्रयोदशान्याः पर्शवस्त्रयोदशान्याः पार्श्वे त्रिणवं तस्मात्पार्श्वे त्रिणवः ॥ १३ ॥

( त्रोऽनू ) अनूकं त्रयस्त्रिᳫँशः । ( शां ) द्वात्रिᳫँशद्वाऽ एतस्य करूकराण्यनूकं त्रयस्त्रिᳫँशन्तस्मादनूकं त्रयस्त्रिᳫँशः ॥ १४ ॥

( शोऽयु ) अयमेव दक्षिणः कर्णोऽभिजित् । ( शु ) यदिदमक्ष्णः शुक्लᳫँ स प्रथमः स्वरसामा यत्कृष्णᳫँ स द्वितीयो यन्मण्डलᳫँ स तृतीयो नासिके विषुवान्यदिदमक्ष्णो मण्डलᳫँ स प्रथमोऽवाकसामा यत्कृष्णᳫँ स द्वितीयो यच्छुक्लᳫँ स तृतीयः ॥ १५ ॥

( योऽयु ) अयमेवोत्तरः कर्णो विश्वजित् । ( द ) उक्तौ पृष्ठ्याभिप्लवौ यावन्तौ प्राणौ ते गोऽआयुषीऽअङ्गानि दशरात्रो मुखम्महाव्रतमुदानऽएवोदयनीयोऽतिरात्रऽ उदानेन ह्युद्यन्ति सऽएष सम्वत्सरोऽध्यात्मं प्रतिष्ठितः स यो हैवमेतᳫँ सम्वत्सरमध्यात्मं प्रतिष्ठितम्वेद प्रतितिष्ठति प्रजया पशुभिरस्मिल्लोकेऽमृतत्वेनामुष्मिन् ॥ १६ ॥

इति प्रथमप्रपाठकेऽष्टमं ब्राह्मणम् ॥ १२–१–८ ॥ ( २. ४. ) ॥

द्वितीयोऽध्यायश्च समाप्तः ॥ १२ । २ ॥

कण्डिकासंख्या ॥ ६९ ॥

---

उदरमेकविंशः । विंशतिर्वा अंतरुदरे कुंतापानि । उदरमेकविंशम् । तस्मादुदरमेकविंशः ॥ १२ ॥

पार्श्वे त्रिणवः । त्रयोदशान्याः पर्शवस्त्रयोदशान्याः । पार्श्वे त्रिणवे । तस्मात्पार्श्वे त्रिणवः ॥ १३ ॥

अनूकं त्रयस्त्रिंशः । द्वात्रिंशद्वा एतस्य करूकराणि । अनूकं त्रयस्त्रिंशम् । तस्मादनूकं त्रयस्त्रिंशः ॥ १४ ॥

अयमेव दक्षिणः कर्णोऽभिजित् । यदिदमक्ष्णः शुक्लम् । [1] प्रथमः स्वरसामा । यत् कृष्णं, स द्वितीयः । यन्मंडलं, स तृतीयः । नासिके विषुवान् । यदिदमक्ष्णो मंडलम् । स प्रथमोऽर्वाक्सामा । यत् कृष्णं, स द्वितीयः । यत् शुक्लं, स तृतीयः ॥ १५ ॥

अयमेवोत्तरः कर्णो विश्वजित् । उक्तौ पृष्ठ्याभिप्लवौ । यावंतौ प्राणौ, ते गोआयुषी ।

---

[1] मत्स्ये प्रथमे स्थाने इदं प्रथममहरिति । इदमेव नासिका यत् । द्वितीयमह । इयमनामिका मध्या. कनिष्ठिका न तृतीया । इयमेव मध्यमा तृतीयमहः । इयं मध्यमा अन्नामगुलीनां मध्यमा । इयमेव प्रदेशिनी

अंगानि दशरात्रः । मुखं महाव्रतम् । उदान एवोदयनीयोऽतिरात्रः । उदानेन ह्युदयति । स एष संवत्सरोऽध्यात्मं प्रतिष्ठितः । स यो हैवमेतं संवत्सरमध्यात्मं प्रतिष्ठितं वेद । प्रतितिष्ठति प्रजया पशुभिरस्मिन् लोके, अमृतत्वेनामुष्मिन् ॥ १६ ॥

---

चतुर्थमह । इय प्रदेशिनी आसामङ्गुलीना अतिशयेनान्नदिनमा प्रायेण ह्यनयैवान्नमदन्ति । तदेव स्वगो-कृत्यादितम त्रनुच्यते । इदमेवाङ्गुष्ठ आसामङ्गुलीना पृथुतम । इदमेव बृहे पृथुत्वमाह—तस्येदमेव पाणि फलक प्रात सवन ( इदमरत्निमकनिष्ठिकास्थानि वीर्यशक्तिजत्व । इत्यस्थीनि कृत्वायमियतदादीनि नामानि कल्पितानि नोत्पयन्तीति कृत्वा यानि । )॥ ८–१६ ॥

इति श्रीमदाचार्यहरिस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे
द्वितीयेऽध्याये चतुर्थं ब्राह्मणम् ॥ १२ । २ । ४ ॥

नागस्वामितनुजोऽसौ पाराशर्यो वसन्हार ।
श्रुत्यर्थं दर्शयामास शक्तित पौष्करीयक ॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपते ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूभर्त्रा विक्रमार्केण कल्पिता कनकवेदिकाम् ।
दानाध्यक्षस्य कृतवान् श्रुत्यर्थविवृति हरि ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीना श्रीहरिस्वामिना कृतौ माध्यन्दिनीय-
शतपथब्राह्मणभाष्ये द्वादशकाण्डे द्वितीयोऽध्याय समाप्तः ॥ १२–२ ॥



# अथ तृतीयेऽध्याये प्रथमं ब्राह्मणम् ।
## प्रथमप्रपाठके च नवमं ब्राह्मणम् ।



यद्धाग्ने । ( क ऽ इ ) इदन्निवृदेति सर्व्वमन्योऽन्यमभिसम्पद्यमानम् ।
कथꣳ स्विद्यज्ञः पुरुषः प्रजापतिरन्योऽन्यन्नातिरिच्यन्तऽ एते ॥ १ ॥
यदूर्ध्वा स्तोमाऽअनुयन्ति । यज्ञमभ्यावर्त्तꣳ सामभिः कल्पमानाः ।
कथꣳ स्वित्त पुरुषमाविशन्ति कथम्प्राणैः सयुजो भवन्ति ॥ २ ॥
प्रायणीयोऽतिरात्रः । ( ऋ ) चतुर्विꣳशमहश्चत्वारोऽभिप्लवाः पृष्ठ्यऽ
इत्येते । कथꣳ स्वित्ते पुरुषमाविशन्ति कथम्प्राणैः सयुजो भवन्ति ॥ ३ ॥
अभिजिता स्वरसामानः । ( नोऽभि ) अभिवल्हा ऽउभयतो विषु
वन्तमुपयन्ति । कथꣳ स्वित्ते पुरुषमाविशन्ति कथम्प्राणैः सयुजो
भवन्ति ॥ ४ ॥

---

" यद्वालाके त्रिवृदेति सर्वमन्योन्यमभिसंपद्यमानम् ।
कथं स्विद्यज्ञः पुरुषः प्रजापतिरन्योऽन्यं नातिरिच्यन्त एते ॥ १ ॥
यदूर्ध्वाः स्तोमा अनुयन्ति यज्ञमभ्यावर्त सामभिः कल्पमानाः ।
कथ स्वित्ते पुरुषमाविशन्ति कथं प्राणैः सयुजो भवन्ति ॥ २ ॥
प्रायणीयोऽतिरात्रश्चतुर्विंशमहश्चत्वारोऽभिप्लवाः पृष्ठ्य इत्येते ।
कथं स्वित्ते पुरुषमाविशन्ति कथं प्राणैः सयुजो भवन्ति ॥ ३ ॥
अभिजिता स्वरसामानोऽभिवल्हता उभयतो विषुवन्तमुपयन्ति ।
कथं स्वित्त पुरुषमाविशन्ति कथं प्राणैः सयुजो भवन्ति ॥ ४ ॥

---

त्रिवृत्प्रायाः । सप्तदशाभिक्लृप्तास्त्रयस्त्रिꣳशान्ताश्चतुरुत्तरेण । कथꣳ
स्वित्ते पुरुषमाविशन्ति कथम्प्राणैः सयुजो भवन्तीति ॥ ५ ॥
शिरस्त्रि_त् । (त्प) पञ्चदशोऽस्य ग्रीवाऽउरऽ आहुः सप्तदशाभिक्लृप्तम् ।
एकविꣳशमुदरङ्कल्पयन्ति पार्श्वे पर्शू त्रिणवेनाभिक्लृप्ते ॥ ६ ॥
अभिप्लवाऽ उभयतोऽस्य बाहू । पृष्ठ्यम्पृष्ठ्यऽ इति धीरा व्वदन्ति ।
अनूकमस्य चतुरुत्तरेण संवत्सरे ब्राह्मणाः कल्पयन्ति ॥ ७ ॥
कर्णावस्याभिजिद्विश्वजिच्च । (च्चा) अस्या बाहुः स्वरसामाभिक्लृप्ते ।
नस्यम्प्राणम्विषुवन्तमाहुर्गोऽआयुषी प्राणावेतावर्वाञ्चौ ॥ ८ ॥
अङ्गान्यस्य दशरात्रमाहुः । ( र्मु ) मुखम्महाव्व्रतꣳ सम्वत्सरं

---

त्रिवृत्प्रायाः सप्तदशाभिक्लृप्तास्त्रयस्त्रिंशांताश्चतुरुत्तरेण ।
कथं स्वित्ते पुरुषमाविशन्ति कथं प्राणैः सयुजो भवन्ति "–इति ॥ ५ ॥
" शिरस्त्रिवृत पंचदशोऽस्य ग्रीवा उर आहुः सप्तदशाभिक्लृप्तम् ।
एकविंशमुदरं कल्पयन्ति पार्श्वे पर्शू त्रिणवेनाभिक्लृप्ते ॥ ६ ॥
अभिप्लवा उभयतोऽस्य बाहू पृष्ठ्यं पृष्ठ्य इति धीरा वदन्ति ।
अनूकमस्य चतुरुत्तरेण संवत्सरे ब्राह्मणाः कल्पयन्ति ॥ ७ ॥
कर्णावस्याभिजिद्विविश्वजिच्चास्या बाहुः स्वरसामाऽभिक्लृप्ते ।
नस्यं प्राणं विषुवन्तमाहुर्गोआयुषी प्राणावेतावर्वाञ्चौ ॥ ८ ॥
अङ्गान्यस्य दशरात्रमाहुर्मुखं महाव्रतं संवत्सरे ब्राह्मणाः कल्पयन्ति ।

---

उभयत पुरस्तात् पश्चाच्च । त्रिवृतस्त मध्य स्थित उपगच्छन्ति । कथं स्वित्ते इति । न च अन्यात्म किंचित्
दृश्यते इत्यभिप्राय ॥ ४ ॥

'त्रिवृ प्राया' त्रिवृता प्रयन्ति प्रवर्तन्ते इति त्रिवृ प्राया । त्रिवृदादय इत्यर्थ । सप्तदशेन मध्ये स्थितन
अभिक्लृप्ता अभिगता 'सप्तदशाभिक्लृप्ता'। सप्तदशमध्या इत्यर्थ । 'त्रयस्त्रिंशान्ता' त्रयस्त्रिंश: अन्तो
येषां ते त्रयस्त्रिंशान्ता पार्ष्टिका स्तोमा । चतुरुत्तरेण स्तोमेन सह ये दशरात्रे वर्तन्ते । छन्दोमेषु हि चतु-
र्विंशचतुश्चत्वारिंशस्तोमा । तेषु ये चतुरुत्तरस्तोमा । तेषु दिवसेषु स्थिता इत्यर्थ । तथ स्वित्ते पुरुषमिति
व्याख्यातम् ॥ ५ ॥

'शिरस्त्रिवृत् इति ।' 'त्रिवृत्प्राया' इत्येतस्य उत्तरम् । शिर पुरुषस्य त्रिवृत् स्तोम । तदपि त्रिवृत्कम् ।
अन्यानि स्पष्टानि च ॥ ६–९ ॥

इति श्रीमदाचार्यमहीधरस्वामिन. कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे
तृतीयेऽध्याये प्रथम ब्राह्मणम् ॥ १२ । ३ । १ ॥

ब्राह्मणाः कल्पयन्ति । सर्व्वस्तोमꣳ सर्व्वसामानमेतꣳ सम्वत्सरमध्यात्मम्प्रविष्टम् । समन्धीरऽ आत्मना कल्पयित्वा ब्रध्नस्यास्ते विष्टपे ऽजातशोकः ॥ ९ ॥

इति प्रथमप्रपाठके नवम ब्राह्मणम् ॥ १२–१–९ ॥ ( ३. १ ) ॥

पुरुषो वै सम्वत्सरः । पुरुषऽइत्येकꣳ सम्वत्सरऽइत्येकमत्र तत्समन्द्वे वै सम्वत्सरस्याहोरात्रे द्वाविमौ पुरुषे प्राणावत्र तत्समन्त्रयऽ ऋतवः सम्वत्सरस्य त्रयऽइमे पुरुषे प्राणाऽअत्र तत्समञ्चतुरक्षरो वै सम्वत्सरश्चतुरक्षरोऽयं यजमानोऽत्र तत्समम्पञ्चर्त्तवः सम्वत्सरस्य पञ्चेमे पुरुषे प्राणाऽ अत्र तत्समꣳ षडृतवः सम्वत्सरस्य षडिमे पुरुषे प्राणाऽ अत्र तत्समꣳ सप्तर्त्तवः सम्वत्सरस्य सप्तेमे पुरुषे प्राणाऽअत्र तत्समम् ॥ १ ॥

( न्द्वा ) द्वादश वै मासाः सम्वत्सरस्य । द्वादशेमे पुरुषे प्राणाऽ अत्र तत्समन्त्रयोदश वै मासाः सम्वत्सरस्य त्रयोदशेमे पुरुषे प्राणा नाभिस्त्रयोदश्यत्र तत्समञ्चतुर्विंशꣳशतिर्व्वै सम्वत्सरस्यार्द्धमासाश्चतुर्विꣳशोऽयम्पुरुषो विꣳशत्यङ्गुलिश्चतुरङ्गोऽत्र तत्समꣳ षड्विꣳशतिर्व्वै सम्वत्सरस्यार्द्धमासाः षड्विꣳशोऽयम्पुरुषः प्रतिष्ठे षड्विꣳश्यावत्र तत्समम् ॥ २ ॥

---

सर्वस्तोम सर्वसामानमेतं संवत्सरमध्यात्म प्रविष्टम् ।
समं धीर आत्मना कल्पयित्वा ब्रध्नस्यास्ते विष्टपेऽजातशोकः " ॥ ९ ॥

पुरुषो वै संवत्सरः । पुरुष इत्येकम् । संवत्सर इत्येकम् । अत्र तत्समम् । द्वे वै संवत्सरस्याहोरात्रे । द्वाविमौ पुरुषे प्राणौ । अत्र तत्समम् । त्रय ऋतवः संवत्सरस्य । त्रय इमे पुरुषे प्राणाः । अत्र तत्समम् । चतुरक्षरो वै संवत्सरः । चतुरक्षरोऽयं यजमानः । अत्र तत्समम् । पंचर्तवः संवत्सरस्य । पंचेमे पुरुषे प्राणाः । अत्र तत्समम् । षट् ऋतवः संवत्सरस्य । षडिमे पुरुषे प्राणाः । अत्र तत् समम् । सप्तर्तवः संवत्सरस्य । सप्तमे पुरुषे प्राणाः । अत्र तत्समम् ॥ १ ॥

द्वादश वै मासाः संवत्सरस्य । द्वादशेमे पुरुषे प्राणाः । अत्र तत्समम् । त्रयोदश वै मासाः संवत्सरस्य । त्रयोदशेमे पुरुषे प्राणाः । नाभिस्त्रयोदशी । अत्र तत्समम् । चतुर्विंशतिर्वै संवत्सरस्यार्द्धमासाः । चतुर्विंशोऽयं पुरुषः । विंशत्यंगुलिः । चतुरंगः । अत्र तत्समम् । षड्विंशतिर्वै संवत्सरस्यार्द्धमासाः । षड्विंशोऽयं पुरुषः । प्रतिष्ठे षड्विंश्यौ । अत्र तत्समम् ॥ २ ॥

( त्री ) त्रीणि च वै शतानि षष्टिश्च । सम्वत्सरस्य रात्रयस्त्रीणि च शतानि षष्टिश्च पुरुषस्यास्थीन्यत्र तत्समं त्रीणि च वै शतानि षष्टिश्च सम्वत्सरस्याहानि त्रीणि च शतानि षष्टिश्च पुरुषस्य मज्जानोऽत्र तत्समम् ॥ ३ ॥

( ष्टुँ ) सप्त च वै शतानि विंशतिश्च । सम्वत्सरस्याहोरात्राणि सप्त च शतानि विंशतिश्च पुरुषस्यास्थीनि च मज्जानश्चात्र तत्समम् ॥ ४ ॥

( न्तु ) दश च वै सहस्राण्यष्टौ च शतानि । सम्वत्सरस्य मुहूर्ता यावन्तो मुहूर्तास्तावन्ति पञ्चदशकृत्वः क्षिप्राणि यावन्ति क्षिप्राणि तावन्ति पञ्चदशकृत्व एतर्हीणि यावन्त्येतर्हीणि तावन्ति पञ्चदशकृत्व इदानीनि यावन्तीदानीनि तावन्तः पञ्चदशकृत्वः प्राणा यावन्तः प्राणास्तावन्तोऽक्तना यावन्तोऽक्तनास्तावन्तो निमेषा यावन्तो निमेषास्तावन्तो लोमगर्ता यावन्तो लोमगर्तास्तावन्ति स्वेदायनानि यावन्ति स्वेदायनानि तावन्त एते स्तोका वर्षन्ति ॥ ५ ॥

---

त्रीणि च वै शतानि षष्टिश्च संवत्सरस्य रात्रयः । त्रीणि च शतानि षष्टिश्च पुरुषस्यास्थीनि । अत्र तत्समम् । त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि । त्रीणि च शतानि षष्टिश्च पुरुषस्य मज्जानः । अत्र तत्समम् ॥ ३ ॥

सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राणि । सप्त च शतानि विंशतिश्च पुरुषस्यास्थीनि च मज्जानश्च । अत्र तत्समम् ॥ ४ ॥

दश च वै सहस्राण्यष्टौ च शतानि संवत्सरस्य मुहूर्ताः । यावन्तो मुहूर्तास्तावन्ति पंचदशकृत्वः क्षिप्राणि । यावन्ति क्षिप्राणि तावन्ति पंचदशकृत्व एतर्हीणि । यावन्त्येतर्हीणि तावन्ति पंचदशकृत्व इदानीनि । यावन्तीदानीनि तावन्तः पंचदशकृत्वः प्राणाः । यावन्तः प्राणास्तावन्तोऽक्तनाः । यावन्तोऽक्तनास्तावन्तो निमेषाः । यावंतो निमेषास्तावंतो लोमगर्ताः । यावंतो लोमगर्तास्तावन्ति स्वेदायनानि । यावंति स्वेदायनानि तावंत एते स्तोका वर्षंति ॥ ५ ॥

---

मुहूर्तेन मन पुरुषस्य न किंचिदस्ति । [illegible] लोमगर्ता सन्ति स्वेदायनान्यपि हि । [illegible] मुहूर्ताः पञ्चदशगुणाः क्षिप्राणि क्रियन्ते । तानि च [illegible] भवन्ति । [illegible] पञ्चदशगुणानि एतर्हीणि भवन्ति । तानि च [illegible] भवन्ति । [illegible] पञ्चदशगुणानि इदानीनि भवन्ति । तानि च [illegible] । इदानीनि [illegible] प्राणा भवन्ति । एते च [illegible] । एते च प्राणा नोच्छ्वासनिश्वासा ज्ञेयाः । [illegible] संवत्सरस्य भवन्ति । [illegible] । [illegible] द्विगुणानि [illegible] । [illegible] प्राणा [illegible] । यावन्तः प्राणाः

( न्त्ये ) एतद्ध स्म वै तद्विद्वानाह वार्कलिः । सार्वभौमं मेघं वर्षन्तं वेदाहमस्य वर्षस्य स्तोकानिति ॥ ६ ॥

तदेष श्लोकोऽभ्युक्तः । अमादन्यत्र परिवर्तमानस्तिष्ठन्नासीनो यदि वा स्वपन्नपि । अहोरात्राभ्याम्पुरुषः समेन कनिकृत्वः प्राणिति चाप चानितीति ॥ ७ ॥

तदेष श्लोकः प्रत्युक्तः । शतꣳ शतानि पुरुषः समेनाष्टौ शता यन्मितं तद्वदन्ति । अहोरात्राभ्यां पुरुषः समेन तावत्कृत्वः प्राणिति चाप चानितीति ॥ ८ ॥

इति प्रथमप्रपाठके दशमं ब्राह्मणम् ॥ १२-१-१० ॥ ( ३. २. ) ॥

---

एतद्ध स्म वै तद्विद्वानाह वार्कलिः । सार्वभौम मेघं वर्षन्तं वेदाहम् । अस्य वर्षस्य स्तोकानिति ॥ ६ ॥

तदेष श्लोकोऽभ्युक्तः-" अमादन्यत्र परिवर्तमानस्तिष्ठन्नासीनो यदि वा स्वपन्नपि । अहोरात्राभ्यां पुरुषः समेन कनिकृत्वः प्राणिति चाप चानिति " इति ॥ ७ ॥

तदेष श्लोकः प्रत्युक्तः-" शतं शतानि पुरुषः समेनाष्टौ शता यन्मितं तद्वदन्ति । अहोरात्राभ्यां पुरुषः समेन तावत्कृत्वः प्राणिति चाप चानिति " इति ॥ ८ ॥

देवा ह वै सहस्रसम्वत्सराय दिदीक्षिरे । तेषाम्पञ्च शतानि सम्वत्सराणां पर्य्युपेतान्यासुरथेदꣳ सर्व्वमेव शश्राम ये स्तोमा यानि पृष्ठानि यानि च्छन्दाꣳसि ॥ १ ॥

ततो देवाः । (ऽ) एतद्यज्ञस्यायातयामापश्यंस्तेनायातयाम्ना या वेदे व्यष्टिरासीत्तां व्याश्नुवतायातयामा वाऽ अस्य वेदाऽ अयातयाम्न्या हास्य त्रय्या विद्ययाऽऽर्त्विज्यं कृतं भवति य ऽएवमेतद्वेद ॥ २ ॥

तदेतद्यज्ञस्यायातयाम ।(मौ) ओश्रावयास्तु श्रौषड्यज ये यजामहे वौषडिति तासाम्वाऽ एतासाम्पञ्चानाम्व्याहृतीनाꣳ सप्तदशाक्षराण्योश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह ऽइति पञ्चाक्षरम् ॥ ३ ॥

( न्द्रच ) द्व्यक्षरो वषट्कारः । स ऽ एष सप्तदशः प्रजापतिरधिदेवतं चाध्यात्मञ्च प्रतिष्ठितः स यो हैवमेतꣳ सप्तदशं प्रजापतिमधिदेवतञ्चा-

प्रायश्चित्तसूत्रम् ।

देवा ह वै सहस्रसंवत्सराय दिदीक्षिरे । तेषां पञ्च शतानि संवत्सराणां पर्यवेतान्यासुः । अथेदं सर्वमेव शश्राम । ये स्तोमा यानि पृष्ठानि यानि छन्दांसि ॥ १ ॥

ततो देवा एतद्यज्ञस्यायातयामापश्यन् । तेनायातयाम्ना या वेदे व्यष्टिरासीत्–तां व्याश्नुवत । अयातयामा वा अस्य वेदाः । अयातयाम्न्या हास्य त्रय्या विद्यया आर्त्विज्यं कृतं भवति । य एवमेतद्वेद ॥ २ ॥

तदेतद्यज्ञस्यायातयाम । ओश्रावयास्तु श्रौषड्यज ये यजामहे वौषडिति । तासां वा एतासां पंचानां व्याहृतीनां सप्तदशाक्षराणि । ओश्रावयेति चतुरक्षरम् । अस्तु श्रौषडिति चतुरक्षरम् । यजेति द्व्यक्षरम् । ये यजामह इति पंचाक्षरम् ॥ ३ ॥

द्व्यक्षरो वषट्कारः । स एष सप्तदशः प्रजापतिः अधिदेवतं चाध्यात्मं च प्रतिष्ठितः । स यो हैवमेतं सप्तदशं प्रजापतिमधिदेवतं चाध्यात्मं च प्रतिष्ठितं वेद । प्रतितिष्ठति प्रजया पशुभिरस्मिन् लोके । अमृतत्वेनामुष्मिन् ॥ ४ ॥

वन्ति । समत समवर्तिना समेनेति सम । ( पुरुष मर्त्यात्मकविरोधातिमहत्वाकरैर्वडित्यर्थ । ) एतत्स्यास्य प्राणानां सत्त्वस्य च मूर्त्तीनां साम्योपदेशात् द्रष्टव्यम् ॥ ८ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशे काण्डे

तृतीयेऽध्याये द्वितीयं ब्राह्मणम् ॥ १२ । ३ । २ ॥

देवा ह वै । प्रसन्नमेतत् । अनेन ब्राह्मणेन प्रायश्चित्तमत्र विधीयते । तत्र च दर्शनम् । सहस्रसंवत्सरसाध्य दीक्षितास्तेषां सहस्रसंवत्सरस्य ... सर्वमेव ... दु-

ध्यात्मञ्च प्रतिष्ठितम्वद प्रतितिष्ठति प्रजया पशुभिरस्मिँल्लोकेऽमृतत्वेनामुष्मिन् ॥ ४ ॥

( षिमस्ते ) ते ह देवा ऊचुः । ( रु ) उप तं यज्ञक्रतुमानीत यः सहस्रसम्वत्सरस्य प्रतिमा को हि तस्मै मनुष्यो यः सहस्रसम्वत्सरेण समाप्नुयादिति ॥ ५ ॥

ते विश्वजितमेव सर्वपृष्ठम् । (म्पृ) पृष्ठ्यस्य षडहस्याञ्जःसवमपश्यंस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳫँसि ॥ ६ ॥

पृष्ठ्यमेव षडहम् । ( न्द्वा ) द्वादशाहस्याञ्जःसवमपश्यंस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳫँसि ॥ ७ ॥

द्वादशाहमेव । सम्वत्सरस्याञ्जःसवमपश्यंस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳫँसि ॥ ८ ॥

सम्वत्सरमेव । तापश्चितस्याञ्जःसवमपश्यंस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳫँसि ॥ ९ ॥

तापश्चितमेव । सहस्रसम्वत्सरस्याञ्जःसवमपश्यंस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳫँसि ॥ १० ॥

स वै सम्वत्सरन्दीक्षाभिरेति । सम्वत्सरमुपसद्भिः सम्वत्सरᳫँ सुत्याभिः ॥ ११ ॥

---

ते ह देवा ऊचुः । उप त यज्ञक्रतु आनीत । यः सहस्रसंवत्सरस्य प्रतिमा । को हि तस्मै मनुष्यो यः सहस्रसंवत्सरेण समाप्नुयादिति ॥ ५ ॥

ते विश्वजितमेव सर्वपृष्ठं पृष्ठ्यस्य षडहस्याञ्जःसवमपश्यन् । ते हि स्तोमा भवन्ति । तानि पृष्ठानि । तानि छन्दांसि ॥ ६ ॥

पृष्ठ्यमेव षडहं द्वादशाहस्याञ्जःसवमपश्यन् । ते हि स्तोमा भवन्ति । तानि पृष्ठानि । तानि छन्दांसि ॥ ७ ॥

द्वादशाहमेव संवत्सरस्याञ्जःसवमपश्यन् । ते हि स्तोमा भवन्ति । तानि पृष्ठानि । तानि छन्दांसि ॥ ८ ॥

संवत्सरमेव तापश्चितस्याञ्जःसवमपश्यन् । ते हि स्तोमा भवन्ति । तानि पृष्ठानि । तानि छन्दांसि ॥ ९ ॥

तापश्चितमेव सहस्रसंवत्सरस्याञ्जःसवमपश्यन् । ते हि स्तोमा भवन्ति । तानि पृष्ठानि । तानि छन्दांसि ॥ १० ॥

स वै संवत्सरं दीक्षाभिरेति । संवत्सरमुपसद्भिः । संवत्सरं सुत्याभिः ॥ ११ ॥

---

[illegible]

स यत्संवत्सरन्दीक्षाभिरेति । पूर्वार्द्धमेव तेन सहस्रसंवत्सरस्याव-रुन्द्धेऽथ यत्संवत्सरमुपसद्भिर्मध्यमेव तेन सहस्रसंवत्सरस्यावरुन्द्धेऽथ यत्संवत्सरꣳ सुत्याभिरुत्तमार्द्धमेव तेन सहस्रसंवत्सरस्यावरुन्द्धे ॥१२॥

स वै द्वादश मासान्दीक्षाभिरेति । द्वादशोपसद्भिर्द्वादश सुत्याभिस्त-त्षट्त्रिꣳशत्षट्त्रिꣳशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गं लोकमयन्त बृहत्या स्वर्गं लोकमाप्नुवꣳस्तथोऽ एवैष एतद्बृहत्यैव स्वर्गं लोकमेति बृहत्या स्वर्गं लोकमाप्नोत्यथ यो बृहत्यां कामस्तं तेनावरुन्द्धे ॥१३॥

तद्वाऽ एतत् । (त्र) त्रयꣳ सह क्रियतेऽग्निरर्को महदुक्थꣳ स यत्संवत्सरन्दीक्षाभिरेति संवत्सरमुपसद्भिस्तेनास्याग्न्यर्कावाप्तौ भवतो ऽथ यत्संवत्सरꣳ सुत्याभिरेति तेनाऽस्यैवास्य महदुक्थमाप्तं भवति स वाऽ एष ऽएव सहस्रसंवत्सरस्य प्रतिमा यत्तापश्चितऽएष प्रजानाम्प्रजात्यै यत्तापश्चितः ॥ १४ ॥

इति प्रथमप्रपाठके एकादशं ब्राह्मणम् ॥ १२-१-११ ॥ ( ३. ३ ) ॥

इति प्रथमप्रपाठकः समाप्तः ॥१२।१॥ कण्डिकासंख्या ॥ १३२ ॥

---

स यत्संवत्सरं दीक्षाभिरेति । पूर्वार्द्धमेव तेन सहस्रसंवत्सरस्यावरुन्द्धे । अथ यत्संवत्सरमुपसद्भि मध्यमेव तेन सहस्रसंवत्सरस्यावरुन्द्धे । अथ यत्संवत्सरं सुत्याभि । उत्तमार्द्धमेव तेन सहस्रसंवत्सरस्यावरुन्द्धे ॥ १२ ॥

स वै द्वादश मासान्दीक्षाभिरेति द्वादशोपसद्भि । द्वादश सुत्याभि । तत्षट्त्रिंशत् । षट्त्रिंशदक्षरा वै बृहती । बृहत्या वै देवाः स्वर्गं लोकमयन्त । बृहत्या स्वर्गं लोकमाप्नुवन् । तथो एवैष एतद्बृहत्यैव स्वर्गं लोकं यन्ति । बृहत्या स्वर्गं लोकमाप्नोति । अथ यो बृहत्यां काम । तमेतेनैवावरुन्द्धे ॥ १३ ॥

तद्वा एतत्त्रयं सह क्रियते । अग्निरर्को महदुक्थम् । स यत्संवत्सरं दीक्षाभिरेति, संवत्सरमुपसद्भिः तेनास्याग्न्यर्कावाप्तौ भवत । अथ यत्संवत्सरं सुत्याभिरेति तेनो एवास्य महदुक्थमाप्तं भवति । स वा एष एव सहस्रसंवत्सरस्य प्रतिमा यत्तापश्चित । एष प्रजानां प्रजात्यै । यत्तापश्चित ॥ १४ ॥

---

अग्निर्वा [illegible] प्रतिमा [illegible] पालनमस्त्वदतत् पूर्वमेव [illegible] न [illegible] सदृश सर्वो यस्य स [illegible] सर्व । न हि सोमा इति [illegible] ॥ ९-१० ॥

' स वै ' । द्वादश मासानिति बृहती [illegible] वचनम् । ' तद्वा एतत्त्रयम् ' इति अग्न्यर्कमहदुक्थोपास्तिवचनम् ॥ ११-१४ ॥

इति श्रीमदाचार्यहरिस्वामिन कृतौ [illegible] ब्राह्मणभाष्ये द्वादशे काण्डे

तृतीयेऽध्याये तृतीयं ब्राह्मणम् ॥ १२ । ३ । ३ ॥

# अथ द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ।
## तृतीयेऽध्याये च चतुर्थं ब्राह्मणम् ।



पुरुषᳪं ह नारायणम्प्रजापतिरुवाच । यजस्वयजस्वेति स होवाच यजस्वयजस्वेति वाव त्वम्मामात्थ त्रिरयक्षि वसवः प्रातःसवनेनागू रुद्रा माध्यन्दिनेन सवनेनादित्यास्तृतीयसवनेनाथ मम यज्ञवास्त्वेव यज्ञवास्त्वेवाहमासऽ इति ॥ १ ॥

स होवाच । यजस्वैवाहम्वै ते तद्वक्ष्यामि यथा तऽउक्थ्यानि मणिरिव सूत्रऽ ओतानि भविष्यन्ति सूत्रमिव वा मणाविति ॥ २ ॥

तस्माऽ उ हैतदुवाच । प्रातःसवने बहिष्पवमानऽ उद्गातारमन्वारभाम्ह श्येनोऽसि गायत्रच्छन्दाऽ अनु त्वाऽऽरभे स्वस्ति मा सम्पारयेति ॥ ३ ॥

(त्यु) अथ माध्यन्दिने पवमाने । (नऽ) उद्गातारमन्वारभासि सुपर्णोऽसि त्रिष्टुप्छन्दाऽअनु त्वाऽऽरभे स्वस्ति मा सम्पारयेति ॥ ४ ॥

( त्यु ) अथ तृतीयसवनऽ आर्भवे पवमाने । ( नऽ ) उद्गातारमन्वारभासाऽ ऋभुरसि जगच्छन्दाऽ अनु त्वाऽऽरभे स्वस्ति मा सम्पारयेति ॥५॥

---

पुरुषं ह नारायणं प्रजापतिरुवाच यजस्वयजस्वेति । स होवाच । यजस्वयजस्वेति वाव त्वं मामात्थ । त्रिरयक्षि । वसवः प्रातःसवनेनागुः । रुद्रा माध्यंदिनेन सवनेन । आदित्यास्तृतीयसवनेन । अथ मम यज्ञवास्त्वेव । यज्ञवास्त्वेवाहमास इति ॥ १ ॥

स होवाच । यजस्वैव । अहं वै ते तद्वक्ष्यामि । यथा त उक्थ्यानि मणिरिव सूत्र ओतानि भविष्यन्ति । सूत्रमिव वा मणाविति ॥ २ ॥

तस्मा उ हैतदुवाच । प्रातःसवने बहिष्पवमाने उद्गातारमन्वारभासै । "श्येनोऽसि गायत्रच्छन्दा अनु त्वाऽऽरभे स्वस्ति मा संपारय"–इति ॥ ३ ॥

अथ माध्यन्दिने पवमाने उद्गातारमन्वारभासै । "सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वाऽऽरभे स्वस्ति मा संपारय"–इति ॥ ४ ॥

अथ तृतीयसवन आर्भवे पवमाने उद्गातारमन्वारभासै । "ऋभुरसि जगच्छन्दा अनु त्वाऽऽरभे स्वस्ति मा संपारय"–इति ॥ ५ ॥

---

'पुरुष' ह अनेनापि ब्राह्मणेन सवनत्रये पवमानत्रये उद्गातुरन्वारम्भविधिमेतावचनम् । सन्यासु च नगाः ।

---

१-बहिष्पवमानेषूद्गातारमन्वारभेत् श्येनोऽसि गायत्रच्छन्दा अनु त्वाऽऽरभे स्वस्ति मा संपारय सुपर्णोऽसि त्रिष्टुप्छन्दा ऋभुरसि जगच्छन्दा इतीतरयो: सवनयो: । का. श्रौ. सू. ११ । १ । ११ ।

( त्य ) अथ सᳬँस्थितेषु सᳬँस्थितेषु सवनेषु जपेः । ( मं ) मयि भर्गो मयि महो मयि यशो मयि सर्व्वमिति ॥ ६ ॥

( त्य ) अयम्वै लोको भर्गः । ( र्गोऽन्त ) अन्तरिक्षलोको महो द्यौर्य्यशो येऽन्ये लोकास्तत्सर्व्वम् ॥ ७ ॥

( म ) अग्निर्वै भर्गः । ( र्गो ) व्वायुर्म्महऽ आदित्यो यशो येऽन्ये देवास्तत्सर्व्वम् ॥ ८ ॥

( मृ ) ऋग्वेदो वै भर्गः । ( र्गो ) यजुर्व्वेदो महः सामवेदो यशो येऽन्ये व्वेदास्तत्सर्व्वम् ॥ ९ ॥

व्वाग्वै भर्गः । प्राणो महश्चक्षुर्य्यशो येऽन्ये प्राणास्तत्सर्व्वम् ॥ १० ॥

तद्विद्यात् । ( त्स ) सर्व्वाँल्लोकानात्मन्नधिषि सर्व्वेषु लोकेष्वात्मानमधाᳬँ सर्व्वान्देवानात्मन्नधिषि सर्व्वेषु देवेष्वात्मानमधाᳬँ सर्व्वान्वेदानात्मन्नधिषि सर्व्वेषु व्वेदेष्वात्मानमधाᳬँ सर्व्वान्प्राणानात्मन्नधिषि सर्व्वेषु प्राणेष्वात्मानमधामित्यक्षिता वै लोकाऽ अक्षिता देवाऽ अक्षिता व्वेदाऽ अक्षिताः प्राणाऽअक्षितᳬँ सर्व्वमक्षिताद्ध वाऽअक्षितमुपसङ्क्रामत्यप पुनर्म्मृत्युञ्जयति सर्व्वमायुरेति यऽएवमेतद्वेद ॥ ११ ॥

इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ १२।२।१ ॥ ( ३-४ ) ॥

---

अथ संस्थितेषु सस्थितेषु सवनेषु जपेः । " मयि भर्गो मयि महो मयि यशो मयि सर्वम् "-इति ॥ ६ ॥

अयं वै लोको भर्गः । अंतरिक्षलोको महः । द्यौर्यशः । येऽन्ये लोकास्तत्सर्वम् ॥ ७ ॥

अग्निर्वै भर्गः । वायुर्महः । आदित्यो यशः । येऽन्ये देवास्तत्सर्वम् ॥ ८ ॥

ऋग्वेदो वै भर्गः । यजुर्वेदो महः । सामवेदो यशः । येऽन्ये वेदास्तत्सर्वम् ॥ ९ ॥

वाग्वै भर्गः । प्राणो महः । चक्षुर्यशः । येऽन्ये प्राणास्तत्सर्वम् ॥ १० ॥

तद्विद्यात् सर्वान् लोकानात्मन्नधिषि । सर्वेषु लोकेषु आत्मानमधाम् । सर्वान् वेदान् आत्मन्नधिषि सर्वेषु वेदेष्वात्मानमधाम् । सर्वान् प्राणानात्मन्नधिषि । सर्वेषु प्राणेष्वात्मानमधामिति । अक्षिता

---

तत्र च प्रजापतिरुवाचेति । ' अधिषि ' अधापि । ' इमान् आत्मनीभयो "-( वा. ग. प्र. ३. १० )

---

१-सवनेषु जपति अयं भर्गो मयि महो मयि यशो मयि सर्वमिति । सर्वैक सर्वतिमन्त्र२ । न प्रकरण्द् । का. श्रौ. २५. १६ । १ । ११-१४ ।

सावित्रꣳ ह स्मैतम्पूर्वं पशुमालभन्ते । ( न्तेऽथै ) अथैतर्हि प्राजापत्यं यो ह्येव सविता स प्रजापतिरिति वदन्तस्तस्मात्सन्युष्याग्नींस्तेन यजेरन्गृहपतेरेवाग्निषु यथेदञ्जाघन्या पत्नीः संयाजयन्ति तस्याग्नोऽप्यसदिति ते ततो यदानिकामन्दीक्षन्ते ॥ १ ॥

---

वै लोकाः । अक्षिता देवाः । अक्षिता वेदाः । अक्षिताः प्राणाः । अक्षितं सर्वम् । अक्षिताद्ध वा अक्षितमुपसङ्क्रामति । अप पुनर्मृत्युं जयति । सर्वमायुरेति । य एवमेतद्वेद ॥ ११ ॥

सावित्रं ह स्मैतं पूर्वं पशुमालभन्ते । अथैतर्हि प्राजापत्यम् । यो ह्येव सविता स प्रजापतिरिति वदन्तः । तस्मात् सन्युष्याग्नीन् तेन यजेरन् । गृहपतेरेवाग्निषु । यथेदं जाघन्या पत्नीः संयाजयन्ति । तस्या नोऽप्यसदिति । ते ततो यदानिकामं दीक्षन्ते ॥ १ ॥

---

[illegible] भूत [illegible] । [illegible] । [illegible] । अक्षिता अक्षीणा ॥ १-११ ॥

इति श्रीमदाचार्यसायणविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वादशकाण्डे तृतीयेऽध्याये चतुर्थं ब्राह्मणम् ॥ १२ । ३ । ४ ॥

' सावित्रं ह ' अत्र ब्राह्मणे श्रीकामानां सत्रिणाम् एकस्यो गवामयनोऽभिधीयते । पशुक्रतूनां च संवत्सरस्य पशवो ममता । एतस्मिन्काले गवामयने सावित्रं पूर्वं सत्रिण आलभन्ते स्म, इति पुराकल्पः । अथ अधुना वर्तमाने युगे प्राजापत्यमेवालभन्त । संवत्सरसत्रेऽपि न केवलम्, इतरत्र सावित्रेऽपि कृतानित्यभिप्राय । तस्मात् सायुज्येति वक्ष्यमाणहेतुत्व । परामर्शेन पूर्वोक्तस्य हेतुतानुपपत्ते । यदि हि पूर्वं सावित्र आलब्ध अधुना च प्राजापत्य आलभ्यते । तत्र किमिति अप्रय सन्ति । उच्यते कर्मान्तरं हेतु । वक्ष्यमाण "यथेदं जाघन्या" इद प्रसिद्धम् । पत्नीः संयाजयन्ति पत्नीसंयाजान् कुर्वन्ति । तस्यामपि जाघन्यां न अस्माकं भाग स्यादित्येवम् । यस्मात् सत्रिणो गृहपतिव्यतिरिक्ता अकामयन्त तस्मात् संवत्सरसदः नीचैः स्थापयित्वा अग्नीन् सर्वेषां सत्रिणां ' सन्युष्याग्नीन् ' गृहपतेरेवाग्निषु जात गृहपतेर्गार्हपत्य प्राप्त्यर्थं । गार्हपत्यमेवावेनैव सर्वेष्वग्निषु सयुक्ता भवन्तीत्यभिप्राय । गृहपतेरेवाग्न्यो सत्रिणामेति । तथापि हि गृहपतेरेवाग्निषु सयुक्ता एव भवन्ति । नानागार्हपत्यपक्षनिरसिमात्रमेव [illegible] विवक्षित वाक्यशेषात् । तेनष्टका अभ्यर्णा । यजेरन् कस्मादेव न सवय्यते । गृहपतेरेवाग्निषु यजेरन्निति नैव संवत्सरे सत्रिणामवचनात् । सयुजा साधारणाश्च एतेऽग्नयो भवन्ति । कथं गृहपतेरेवेत्युच्यते । ' यथेदं जाघन्येति ' अभिप्राय । यदि किल अग्नय सयुज्येरन् । ता पृथग्गार्हपत्या भवेयु । तदा च गृहपतेरेव गार्हपत्य जाघन्या पत्नी संयाजयन्त्यन्तेनारे प्रतिपत्त । आमन इत्येव कल्प्य स्यात् । तदा च सति [illegible] सर्वेषामग्निर्लाभ स्युरिति । ते सत्रिणस्तत [illegible] यदानिकामम् । निशब्द सशब्दस्यार्थे यथा [illegible] । तदर्थे सर्वेषां ( वर्तमान [illegible] दी [illegible] ) यदा दीक्षन्ते तदा निकामस्तदैतेऽस्मिन्नर्थे यदानिकाममित्यस्यार्थः ॥ १ ॥

तदु ह्वाऽ आहुः । ( त्रीं ) नानाधिष्ण्याऽ एव स्युर्य्यदि दीक्षितस्योपतपेत्पार्श्वतोऽग्निहोत्रञ्जुह्वद्वसेत्स यद्यगदो भवति सꣳसृज्यैनम्पुनरुपह्वयन्ते यद्यु म्रियते स्वैरेव तमग्निभिर्दहन्त्यशवाग्निभिरितरे यजमानाऽ आसतऽ इति तदु हैवाहिताग्नेः कर्म्म समानधिष्ण्यास्त्वेव भवन्ति तस्य तदेव ब्राह्मणं यत्पुरश्चरणे ॥ २ ॥

तदाहुः । ( त्र्यं ) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथमेषामग्निहोत्रमनन्तरितं भवतीति व्रतेनेति ब्रूयात् ॥ ३ ॥

( चु ) तदाहुः । ( त्र्यं ) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथमेषाम्पौर्णमासꣳ हविरनन्तरितम्भवतीत्याज्येन च पुरोडाशेन चेति ब्रूयात् ॥ ४ ॥

---

तदु वा आहुः । नानाधिष्ण्या एव स्युः । यदि दीक्षितस्योपतपेत् । पार्श्वतः अग्निहोत्रं जुह्वत् वसेत् । स यद्यगदो भवति । संसृज्यैनं पुनरुपह्वयन्ते । यद्यु म्रियते । स्वैरेव तमग्निभिर्दहन्ति । अशवाग्निभिरितरे यजमाना आसत इति । तदु हैवाहिताग्नेः कर्म । समानधिष्ण्यास्ते भवन्ति । तस्य तदेव ब्राह्मणं यत् पुरश्चरणे ॥ २ ॥

तदाहुः—यत् संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषामग्निहोत्रमनन्तरितं भवतीति । व्रतेनेति ब्रूयात् ॥ ३ ॥

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषां पौर्णमासं हविरनन्तरितं भवतीति । आज्येन च पुरोडाशेन चेति ब्रूयात् ॥ ४ ॥

---

तदु वा आहुः' । 'नानाधिष्ण्या एव स्युः' इति कल्पान्तरोपन्यासः । तथा समान आहवनीयो भवति । नानागार्हपत्या इत्येष कल्पः स्यादित्यर्थः । यदि दीक्षितस्योपतपेदिति । (दीक्षितानां मध्ये कदाचिदेव परिवृत्त मत्रिव्याधियुक्तस्य चेत् । ) यदि दीक्षितस्य किञ्चिदपि व्याधिना उपतपेत् । तत स तत एव प्रथमिकात् गार्हपत्यादाहवनीयमुद्धृत्य पार्श्वे आहवनीये अग्निहोत्रं जुह्वत् वसेत् । यदि अगदः आरोग्यं भवति । तत संसृज्याग्निं गार्हपत्ये स्वस्थानमानीयेत्यर्थः । एनमातुरं पुनरुपह्वयन्ते यागेन याजयन्ते । यदि तु न म्रियते । तत संसृष्टैरग्निभिः तत्पुत्रादयो दहन्ति । इतरे तु सत्रिणः अशवाग्निभिः शुद्धैः यजमाना सन्तु । आसत इति सकृत्परिहारः । तदु हैवाहिताग्नेः कर्म । तदेतत् यथोक्तं आहिताग्नेरेव । ( सत्रस्य विना सत्रारम्भं उक्तम् ) न सत्रिणः । अस्य हि गार्हपत्ये भिन्नेऽपि आहवनीयादिसत्रं सम्प्रत्येवाग्नेः । तत्र पुनः इतरे अशवाग्निभिर्यजमाना आसीरन् । समानधिष्ण्याः साधारणगार्हपत्या एव ते सर्वे सत्रिणो भवन्ति । यथोक्तेन सत्रिवारेण तस्य तु समानधिष्ण्यत्वम् । तस्य तदेव ब्राह्मणं यत्पुरश्चरणे । सत्रान्ते अग्निब्राह्मणे । तदपेक्षया सत्रान्तं पुरश्चरणमुच्यते ॥ २ ॥

'तदाहुरिति' प्रश्नत्रयमत परम् । यत् यदा संवत्सराय संवत्सरसाय संवत्सरमासते यान्ति इति संवत्सरसदः

( तु ) तदाहुः। ( स्र्युं ) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथमेषाम्पितृयज्ञोऽनन्तरितो भवतीत्यौपासनेनेति ब्रूयात् ॥ ५ ॥

( तु ) तदाहुः। ( स्र्युं ) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथमेषामामावास्यꣳ हविरनन्तरितम्भवतीति दध्ना च पुरोडाशेन चेति ब्रूयात् ॥ ६ ॥

( तु ) तदाहुः। ( स्र्युं ) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथमेषामाग्रयणेष्टिरनन्तरिता भवतीति सौम्येन चरुणेति ब्रूयात् ॥ ७ ॥

( तु ) तदाहुः। ( स्र्युं ) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथमेषाञ्चातुर्म्मास्यान्यनन्तरितानि भवन्तीति पयस्ययेति ब्रूयात् ॥ ८॥

( तु ) तदाहुः। ( स्र्युं ) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथमेषाम्पशुबन्धोऽनन्तरितो भवतीति पशुना च पुरोडाशेन चेति ब्रूयात् ॥९॥

---

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते। कथमेषां पितृयज्ञोऽनन्तरितो भवतीति। औपासनेनेति ब्रूयात् ॥ ५ ॥

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते। कथमेषामामावास्यं हविरनन्तरितं भवतीति। दध्ना च पुरोडाशेन चेति ब्रूयात् ॥ ६ ॥

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते। कथमेषामाग्रयणेष्टिरनन्तरिता भवतीति। सौम्येन चरुणेति ब्रूयात् ॥ ७ ॥

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते। कथमेषां चातुर्मास्यान्यनन्तरितानि भवन्तीति। पयस्ययेति ब्रूयात् ॥ ८ ॥

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते। कथमेषां पशुबन्धोऽनन्तरितो भवतीति। पशुना च पुरोडाशेन चेति ब्रूयात् ॥ ९ ॥

(तु) तदाहुः । (र्य्यु) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथमेषाꣳ सोमोऽनन्तरितो भवतीति सवनैरिति ब्रूयात् ॥ १० ॥

(ते) ते वाऽ एवमेते यज्ञक्रतवः । सम्वत्सरमपियन्ति स यो हैवमेतां यज्ञक्रतूनाꣳ सम्वत्सरेऽपीतिम्वेदाप्यस्य स्वर्गे लोके भवति ॥ ११ ॥

सम्वत्सरस्य समता वेदितव्या । (र्य्येकं) एकम्पुरस्ताद्विषुवतोऽतिरात्रमुपयन्त्येकमुपरिष्टात्त्रयःपञ्चाशतम्पुरस्ताद्विषुवतोऽग्निष्टोमानुपयन्ति त्रयःपञ्चाशतमुपरिष्टाद्विꣳशतिशतम्पुरस्ताद्विषुवतऽ उक्थ्यान्युहान्युपयन्ति विꣳशतिशतमुपरिष्टादिति नु यऽ उक्थ्यान्त्स्वरसाम्नऽ उपयन्ति ॥ १२ ॥

*(न्थु) अथ येऽग्निष्टोमान् ।(न्प)षट्पञ्चाशतम्पुरस्ताद्विषुवतोऽग्निष्टोमानुपयन्ति षट्पञ्चाशतमुपरिष्टात्सप्तदशꣳ शतम्पुरस्ताद्विषुवतऽ उक्थ्यान्युहान्युपयन्ति सप्तदशमुपरिष्टात्षट्पुरस्ताद्विषुवतः षोडशिनऽ उपयन्ति षडुपरिष्टाद्विꣳशतम्पुरस्ताद्विषुवतः षडहान्युपयन्ति त्रिꣳशतमुपरिष्टा-*

---

तदाहुः—यद् संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषां सोमोऽनन्तरितो भवतीति । सवनैरिति ब्रूयात् ॥ १० ॥

ते वा एवमेते यज्ञक्रतवः संवत्सरमपियन्ति । स यो हैवमेता यज्ञक्रतूनामपीतिं वेद । अप्यस्य स्वर्गे लोके भवति ॥ ११ ॥

संवत्सरस्य समता वेदितव्या । एकं पुरस्तात् विषुवतोऽतिरात्रमुपयन्ति । एकमुपरिष्टात् । त्रयःपञ्चाशतं पुरस्ताद्विषुवतोऽग्निष्टोमानुपयन्ति । त्रयःपञ्चाशतमुपरिष्टात् । विंशतिशतं पुरस्ताद् विषुवत उक्थ्यान्यहान्युपयन्ति । विंशतिशतमुपरिष्टात् । इति नु य उक्थ्यान् स्वरसाम्न उपयन्ति ॥ १२ ॥

अथ येऽग्निष्टोमान् षट्पंचाशतं पुरस्तात् विषुवतोऽग्निष्टोमानुपयंति । षट्पंचाशतमुपरिष्टात् ।

---

अपीतिमिति । सवत्सरान्तर्भावो लयश्चतुल्यत्व वेदितव्यम् ॥ ११ ॥

उपयन्ति इति विधि समेन वा अन्योन्यसम्यानेन कर्मानुष्ठानेन एतत् ईप्सित नूनं भवति । य एवमेतद् उपास्ते इति वचनात् ॥ १२ ॥ १३ ॥

# अथ चतुर्थेऽध्याये प्रथमं ब्राह्मणम् ।

## द्वितीयप्रपाठके च तृतीयं ब्राह्मणम् ।



दीर्घसत्त्रᳪँ ह वा एत उपयन्ति । येऽग्निहोत्रं जुह्वत्येतद्धै जरामर्य्यᳪँ सत्त्रं यदग्निहोत्रञ्जरया वा ह्येवास्मान्मुच्यन्ते मृत्युना वा ॥ १ ॥

तदाहुः । ( यदि ) यदेतस्य दीर्घसत्त्रिणोऽग्निहोत्रं जुह्वतोऽन्तरेणाग्नी युक्तम्वा विवायात्तम्वा चरेयुः किन्तत्र कर्म्म का प्रायश्चित्तिरिति कुर्वीत हैव निष्कृतिमपीष्ट्या यजेत तद्ध तन्नाद्रियेतेमान्वाऽ एष लोकाननु वितनुते योऽग्नीऽ आधत्ते ॥ २ ॥

तस्यायमेव लोको गार्हपत्यः । ( त्योऽन्त ) अन्तरिक्षलोकोऽन्वाहार्य्यपचनोऽसौ लोकऽ आहवनीयः कामन्वाऽ एषु लोकेषु वयाᳪँसि युक्तञ्चायुक्तञ्च सञ्चरन्ति स यदि हास्याप्यन्तरेण ग्रामोऽग्नीन्वियायान्नैव मे काचनार्त्तिरस्ति न रिष्टिरिति हैव विद्यात् ॥ ३ ॥

( त्र ) त्रयो ह त्वाव पशवोऽमेध्या । ( ० ) दुर्वराहऽ एडकः श्वा तेषां यद्यधिश्रितेऽग्निहोत्रेऽन्तरेण कश्चित्सञ्चरेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्धैके गार्हपत्याद्भस्मापहृत्याहवनीयान्निरुपन्तो यन्तीदं विष्णुर्विचक्रमऽइत्येतयर्चा यज्ञो वै विष्णुर्यज्ञेनैव यज्ञमनुसन्तन्मो भस्म-

---

१दीर्घसत्रं वा एत उपयन्ति । येऽग्निहोत्रं जुह्वति । एतद्धि जरामर्यं सत्रम् । यदग्निहोत्रम् । जरया वा ह्येवास्मान्मुच्यन्ते मृत्युना वा ॥ १ ॥

तदाहुः—यदेतस्य दीर्घसत्त्रिणोऽग्निहोत्रं जुह्वतोऽन्तरेणाग्नी । युक्तं वा वियायात् । स वा चरेयुः । किं तत्र कर्म । का प्रायश्चित्तिरिति । कुर्वीत हैव निष्कृतिम् । अपीष्ट्या यजेत । तद्ध तन्नाद्रियेत । इमान्वा एष लोकाननु वितनुते । योऽग्नी आ.धत्ते । २ ॥

तस्यायमेव लोको गार्हपत्यः । अन्तरिक्षलोकोऽन्वाहार्यपचनः । असौ लोक आहवनीयः । काम त्वा एषु लोकेषु वयांसि युक्त चा युक्त च सञ्चरन्ति । स यदि हास्याप्यन्तरेण ग्रामोऽग्नीन वियायात् । नैव मे काचनार्त्तिरस्ति । न रिष्टिः । इति हैव विद्यात् ॥ ३ ॥

त्रयो ह त्वाव पशवोऽमेध्याः—दुर्वराहः, एडकः, श्वा । तेषां यद्यधिश्रितेऽग्निहोत्रेऽन्तरेण कश्चित्स

---

१—अहरहः स्तनयन्नपूर्वोदितः । का० श्रौ० सू० २५-७३ ।

२—दैवपशवोऽन्तरेण सञ्चरे विष्णोर्विक्रमेति । भस्मना वा । का० श्रौ० सू० २५ । ७४-७६ ।

नाऽस्य पदमपि वपामऽइति वदन्तस्तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयादामान्न्वाऽ अयं यजमानस्यावाप्सीत्क्षिप्रे परमा सा नावप्स्यत ज्येष्ठ-गृह्यᳪ सत्स्यतीतीश्वरो ह तथैव स्यात् ॥ ४ ॥

( दि ) इत्थमेव कुर्य्यात् । ( दु ) उदस्थालीम्वाऽदकमण्डलुम्वाऽऽदाय गार्हपत्यादग्रऽ आहवनीयान्निनयन्नियादिदं विष्णुर्विचक्रमऽइत्ये-तयर्चा यज्ञो वै विष्णुस्तद्यज्ञेनैव यज्ञमनुसन्तनोति तद्यदस्य रिष्टं यदशान्तमापो वै तस्य सर्वस्य शान्तिरद्भिरेवैनत्तच्छान्त्या शमयत्ये-तदेव तत्र च कर्म्म ॥ ५ ॥

तदाहुः । ( धु ) यस्याग्निहोत्रन्दोह्यमानᳪ स्कन्देत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति स्कन्नप्रायश्चित्तेनाभिमृश्याद्भिरुपनिनीय परिशिष्टेन जुहुयाद्यद्यु नीची स्थाली स्याद्यदि वा भिद्येत स्कन्नप्रायश्चित्तेनैवाभि मृश्याद्भिरुपनिनीय यदन्यद्विन्देत्तेन जुहुयात् ॥ ६ ॥ शतम् ६१०० ॥

( दु ) अथ यत्र स्कन्नᳪ स्यात् । ( तु ) तदभिमृशेदस्कन्नमधित प्राज-नीति यदा वै स्कन्दत्यथ धीयते यदा धीयतेऽथ प्रजायते योनिर्व्वाऽ इयᳪ

---

यात्, किं तत्र कर्म, का प्रायश्चित्तिरिति । तदेके—गार्हपत्याद्भस्मापहृत्याहवनीयान्निवपन्तो यन्ति । " इदं विष्णुर्विचक्रमे " ( वा० सं० ५ । १५ ) इत्येतयर्चा । यज्ञो वै विष्णुः । तद्यज्ञेनैव यज्ञमनुसन्तन्मः । भस्मनाऽस्य पदमपि वपाम इति वदन्तः । तदु तथा न कुर्यात् । यो हैनं तत्र ब्रूयात् । आमान् न्वा अयं यजमानस्यावाप्सीत् । क्षिप्रे प्रमासा नावप्स्यते । ज्येष्ठगृह्यं गेत्स्यतीति । ईश्वरो ह तथैव स्यात् ॥ ४ ॥

इत्थमेव कुर्यात् । उदस्थालीं वैवादकमण्डलुं वाऽऽदाय । गार्हपत्यादग्र आहवनीयान्निनयन्नि यात् । " इदं विष्णुर्विचक्रमे " ( वा० सं० ५ । १५ ) इत्येनयर्चा । यज्ञो वै विष्णुः । तद्यज्ञेनैव यज्ञमनुसंतनोति । यद्वै यज्ञस्य रिष्टम् । यदशान्तम् । आपो वै तस्य सर्वस्य शान्तिः । अद्भिरेवैनच्छान्त्या शमयति । एतदेव तत्र च कर्म ॥ ५ ॥

तदाहुः—यस्याग्निहोत्रं दोह्यमानं स्कन्देत् । किं तत्र कर्म । का प्रायश्चित्तिरिति । स्कन्नप्रायश्चि-त्तेनाभिमृश्य । अद्भिरुपनिनीय परिशिष्टेन जुहुयात् । यदि नीची स्थाली स्यात् । यदि वा भिद्येत । स्कन्नप्रायश्चित्तेनैवाभिमृश्य अद्भिरुपनिनीय । यदन्यद्विन्देत्तेन जुहुयात् ॥ ६ ॥

अथ यत्र स्कन्नं स्यात् । तदभिमृशेत् " अस्कन्नमधित प्राजनि "—इति । यदा वै स्कन्दति ।

ते मित्रावरुणौ प्राणोदानावेवास्मिंस्तद्दध्मऽ इति वदन्तस्तस्यां तस्यामाहुत्यां ब्राह्मणाय दद्याद्यमनभ्यागमिष्यन्मन्येतार्तिर्वाऽ एषा पाप्मानं यजमानस्य प्रतिदृश्योपाविक्षदार्तिमेवास्मिंस्तत्पाप्मानं प्रतिमुञ्चामऽइति वदन्तः ॥ ९ ॥

( स्तु ) तदु होवाच याज्ञवल्क्यः । ( स्याऽथ ) अश्रद्दधानेभ्यो हैभ्यो गोऽपक्रामन्त्यार्त्यौ वाऽ आहुतिमिम यन्तीत्थमेव कुर्याद्दण्डेनैवैनाग्निविष्योत्थापयेदिति तद्यथा यादो धावयतोऽश्वो वाऽश्वतरो वा गर्दभेन बलीवर्दो वा युक्तस्तेन दण्डप्रजितेन तोत्त्रप्रजितेन यमध्वानं समीप्सति तं समश्नुतऽ एवमेवैतया दण्डप्रजितया तोत्त्रप्रजितया यं स्वर्गं लोकं समीप्सति तं समश्नुते ॥ १० ॥

( तऽथ ) अथ होवाचारुणिः । ( श्रीं ) श्रीर्वाऽ एतस्याग्निहोत्रस्याग्निहोत्र्ययमेव वत्सो योऽयम्पवतऽ इयमेवाग्निहोत्रस्थाली न वाऽ एवंविदोऽग्निहोत्री नश्यति स ह यद्यसौ नश्येन्नैवंविदोऽग्निहोत्री वत्सो नश्यति स ह यद्येष नश्येन्नैवंविदोऽग्निहोत्रस्थाली भिद्यते स यद्धीयं भिद्येत श्रियो वै पर्जन्यो वर्षति तद्धीयाच्छ्रियमाणस्य महिमानमुपारय-

---

पयाम इति वदन्तः । " आयुर्यज्ञपतावधात् "—इति । आयुरेवास्मिंस्तद्दध्म इति वदन्तः । " इन्द्राय कृष्णग्रीवो भागम् "—इति । इन्द्रियमेवास्मिंस्तद्दध्म इति वदन्तः । " मित्राय वरुणाय च "—इति । प्राणोदानौ वै मित्रावरुणौ । प्राणोदानावेवास्मिंस्तद्दध्म इति वदन्तः । तस्यामाहुत्यां ब्राह्मणाय दद्यात्, यमनभ्यागमिष्यन्मन्येत । आर्तिर्वा एषा पाप्मानं यजमानस्य प्रतिदृश्योपाविक्षत् । आर्तिमेवास्मिंस्तत्पाप्मानं प्रतिमुञ्चाम इति वदन्तः ॥ ९ ॥

तदु होवाच याज्ञवल्क्यः । अश्रद्दधानेभ्यो हैभ्यो गोऽपक्रामति । आर्त्यौ वा आहुतिं विश्यन्ति । इत्थमेव कुर्यात् । दण्डेनैवैनां विविध्योत्थापयेदिति । तद्यथा यादः धावयतोऽश्वो वाऽश्वतरो वा गर्दभेन । बलीवर्दो वा युक्तः । तेन दण्डप्रजितेन तोत्त्रप्रजितेन यमध्वानं समीप्सति तं समश्नुते । एवमेवैतया दण्डप्रजितया तोत्त्रप्रजितया यं स्वर्गं लोकं समीप्सति तं समश्नुते ॥ १० ॥

अथ होवाचारुणिः । श्रीर्वा एतस्याग्निहोत्रस्याग्निहोत्री । अयमेव वत्सः । योऽयं पवते । इयमेवाग्निहोत्रस्थाली । न वा एवं विदुषोऽग्निहोत्री नश्यति । स यद्यसौ नश्येत् । नैव विदुषोऽग्निहोत्री । वत्सो नश्यति । स यद्येष नश्येत् । नैव विदुषोऽग्निहोत्रस्थाली भिद्यते । स यदीयं भिद्येत । श्रियो

माणोपाविक्षञ्छ्रेयान्भविष्यामीति तामात्मन्न्येव कुर्वीतात्मन्न्येव तच्छ्रियन्धत्तऽइति ह स्माहारुणिरेतदेव तत्र कर्म्म ॥ ११ ॥

तदाहु । ( १ ) यस्याग्निहोत्री दोह्यमाना वाश्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति स्तम्बमाच्छिद्य ग्रासयेदेतदेव तत्र कर्म्म ॥ १२ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ १२।२।३ ॥ ( ४-१ ॥

तदाहुः । ( २ ) यस्याग्निहोत्री लोहितं दुहीत किन्तत्र कर्म्म का प्रायश्चित्तिरिति व्युत्क्रामतेत्युक्त्वा मेक्षणङ्कृत्वाऽन्वाहार्य्यपचनम्परिश्रयितवै ब्रूयात्तस्मिन्नेनच्छ्रपयित्वा तस्मिंस्तूष्णीञ्जुहुयादनिरुक्तो वै प्रजापतिः प्राजापत्यमग्निहोत्रꣳ सर्व्वम्वाऽ अनिरुक्तन्तदनेन सर्व्वेण प्रायश्चित्तिं कुरुते तान्तस्यामाहुत्याम्ब्राह्मणाय दद्याद्यमनभ्यागामिष्यन्मन्येतार्त्तिम्वाऽ एषा पाप्मान यजमानस्य प्रतिदृश्य दुहे या लोहितन्दुहऽ आर्त्तिमेवास्मिंस्तत्पाप्मानम्प्रतिमुञ्चत्यथ यदन्यद्द्विदत्तेन जुहुयादनार्त्तेनैव तदार्त्तं यज्ञस्य निष्करोत्येतदेव तत्र कर्म्म ॥ १ ॥

---

वै पर्जन्यो वर्षति । तद्विद्यात् । श्रेमाण मे महिमानमधारयमाणोपाविक्षत् । श्रेयान् भविष्यामीति । तामात्मन्येव कुर्वीत । आत्मन्यव तच्छ्रियं धत्ते । इति ह स्माहारुणि । एतदेव तत्र कर्म ॥ ११ ॥

तदाहुः—यस्याग्निहोत्री दोह्यमाना वाश्येत । किं तत्र कर्म । का प्रायश्चित्तिरिति । स्तम्बमाच्छिद्य ग्रासयेत् । एतदेव तत्र कर्म ॥ १२ ॥

तदाहु —यस्याग्निहोत्री लोहित दुहीत । किं तत्र कर्म । का प्रायश्चित्तिरिति । व्युत्क्रामतेत्युक्त्वा मेक्षण कृत्वा । अन्वाहार्यपचन परिश्रयितवै ब्रूयात् । तस्मिन्नेतच्छ्रपयित्वा । तस्मिंस्तूष्णीं जुहुयात् । अनिरुक्तो वै प्रजापति । प्राजापत्यमग्निहोत्रम् । सर्वं वा अनिरुक्तम् । तदनेन सर्वेण प्रायश्चित्तिं कुरुते । ता तस्यामाहुत्या ब्राह्मणाय दद्यात् यमनभ्यागामिष्यन्मन्येत । आर्तिं वा एषा पाप्मान यजमानस्य प्रतिदृश्य दुहे । या लोहित दुहे । आर्तिमेवास्मिंस्तत्पाप्मान प्रतिमुञ्चति । अथ यदन्यद्द्विदेत । तेन जुहुयात् । अनार्तेनैव तदार्तं यज्ञस्य निष्करोति । एतदेव तत्र कर्म ॥ १ ॥

---

१ वाश्येत चेत्तृणस्य मुष्टिं ग्रासयेत् । सूयवसाद्भगवति हि भूया अथ वय भगवत स्याम । अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्तीति । का श्रौ सू २५ । १९ ।

२—लोहितदोह दक्षिणाग्निं प्र श्रित्य व्युत्क्रमतेत्युक्त्वा मेक्षणे मथ्यमाने स्थाप्य हुत्वा पूर्ववद्दानम् । का श्रौ सू २५ । २१ ।

तदाहुः । ( य्युं ) यस्याग्निहोत्रन्दोह्यमानममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्धैके होतव्यम्मन्यन्ते प्रयतमेतन्नैतस्या होमोऽवकल्पते न वै देवाः कस्माच्चन बीभत्सन्ते बीभत्सन्ता३ऽइ तु देवा३ऽइत्यथैव कुर्य्याद्गार्हपत्यादुष्णम्भस्म निरुह्य तस्मिन्नेनदुष्णे भस्मंस्तूष्णीन्निनयेदद्भिरुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ २ ॥

तदाहुः । ( य्युं ) यस्याग्निहोत्रन्दोहितममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति य एवैतेऽङ्गारा निरूढा येष्वधिश्रयिष्यन्भवति तान्प्रत्युह्य तस्मिन्नेनदुष्णे भस्मंस्तूष्णीन्निनयेदद्भिरुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ३ ॥

तदाहुः । ( य्युं ) यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति य एवैतेऽङ्गारा निरूढा येष्वधिश्रितं भवति तेष्वेनत्तूष्णीञ्जुहुयाद्धुतमहुतं यदृदृनत्तेषु जुहोति तेन हुतं यद्वैनांस्तन्नैवानुगमयति तेनाहुतमद्भिरुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ४ ॥

---

तदाहुः—यस्याग्निहोत्रं दोह्यमानममेध्यमापद्येत । किं तत्र कर्म । का प्रायश्चित्तिरिति । तद्धैके होतव्यं मन्यन्ते । प्रयतमेतत् । नैतस्या होमोऽवकल्पते । न वै देवाः कस्माच्चन बीभत्सन्ते । बीभत्सन्ता३ इ तु देवा३ । इत्यथैव कुर्यात् । गार्हपत्यादुष्णं भस्म निरुह्य । तस्मिन्नेनदुष्णे भस्मंस्तूष्णीं निनयेत् । अद्भिरुपनिनयति । अद्भिरेनदाप्नोति । अथ यदन्यद्विन्देत् । तेन जुहुयात् । एतदेव तत्र कर्म ॥ २ ॥

तदाहुः—यस्याग्निहोत्रं दोहितममेध्यमापद्येत । किं तत्र कर्म । का प्रायश्चित्तिरिति । य एवैतेऽङ्गारा निरूढाः । येष्वधिश्रयिष्यन् भवति । तान्प्रत्युह्य तस्मिन्नेनदुष्णे भस्मंस्तूष्णीं निनयेत् । अद्भिरुपनिनयति । अद्भिरेनदाप्नोति । अथ यदन्यद्विन्देत् । तेन जुहुयात् । एतदेव तत्र कर्म ॥ ३ ॥

तदाहुः—यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत । किं तत्र कर्म । का प्रायश्चित्तिरिति । य एवैतेऽङ्गारा निरूढाः । येष्वधिश्रितं भवति । तेष्वेनत्तूष्णीं जुहुयात् । तद्धुतमहुतम् । यदृदृनत्तेषु

स्यात्तदस्मा उन्नीयाहरेयुस्तद्धैक उपवल्हन्ते हुतोच्छिष्टं वा एतद्यातयाम वा एतन्नैतस्य होतव्यमिति तदु तन्नाद्रियेत यदा वा एतद्यातयामाथैनद्विरातुचनेन कुर्वन्ति तस्माद्यत्स्थाल्यां परिशिष्टं स्यात्तदस्मा उन्नीयाहरेयुर्यद्यु तत्र न स्याद्यदन्यद्विन्देत्तदग्नावधिश्रित्यावज्योत्यापः प्रत्यानीयोद्वास्य तदु हैवाग्नेष्यामीत्युक्तं भवत्यथात्र यथोन्नीतमेवास्मा उन्नीयाहरेयुस्तेन कामञ्जुहुयादेतदेव तत्र कर्म ॥ ८ ॥

तदाहुः । ( स्यु ) यस्याग्निहोत्रं स्रुच्युन्नीतममेध्यमापद्येत किन्तत्र कर्म का प्रायश्चित्तिरिति तद्धैके होतव्यम्मन्यन्ते प्रयतमेतन्नैतस्या होमोऽवकल्पते न वै देवाः कस्माच्चन बीभत्सन्त इति तद्धैक उत्सिच्य च्छर्दयन्ति तदु तथा न कुर्याद्यो हैनन्तत्र ब्रूयात्परासिचत वा अयमग्निहोत्रं क्षिप्रेऽयं यजमानः परासक्ष्यत इतीश्वरो ह तथैव स्यादित्थमेव कुर्यादाहवनीये समिधमभ्याधायाहवनीयादेवोष्णम्भस्म निरूह्य तस्मिन्नेनदुष्णे भस्मंस्तूष्णीन्निनयेदद्भिरुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म ॥ ९ ॥

तदाहुः । ( स्यु ) यस्याग्निहोत्रं स्रुच्युन्नीतमुपरिष्टादवर्षेत्किन्तत्र

---

उपवल्हन्ते । हुतोच्छिष्टं वा एतत् । यातयामं वा एतत् । नैतस्य होतव्यमिति । तदु तन्नाद्रियेत । यदा वा एतद्यातयाम । अथैनद्विरात्रेचनं कुर्वन्ति । तस्माद्यत्स्थाल्यां परिशिष्टं स्यात् । तदस्मा उन्नीयाहरेयुः । यदि तत्र न स्यात् । यदन्यत् विन्देत् । तदग्नावधिश्रित्यावज्योत्यापः प्रत्यानीयोद्वास्य । तदु हैवाग्नेष्यामीत्युक्तं भवति । अथात्र यथोन्नीतमेवास्मा उन्नीयाहरेयुः । तेन कामं जुहुयात् । एतदेव तत्र कर्म ॥ ८ ॥

तदाहुः—यस्याग्निहोत्रं स्रुच्युन्नीतममेध्यमापद्येत । किं तत्र कर्म । का प्रायश्चित्तिरिति । तद्धैके होतव्यं मन्यन्ते । प्रयतमेतत् । नैतस्या होमोऽवकल्पते । न वै देवाः कस्माच्चन बीभत्सन्त इति । तद्धैक उत्सिच्य च्छर्दयन्ति । तदु तथा न कुर्यात् । यो हैनं तत्र ब्रूयात् । परासिचत वा अयमग्निहोत्रम् । क्षिप्रेऽयं यजमानः परासक्ष्यत इति । ईश्वरो ह तथैव स्यात् । इत्थमेव कुर्यात् । आहवनीये समिधमभ्याधाय आहवनीयादेवोष्णं भस्म निरूह्य तस्मिन्नेनदुष्णे भस्मंस्तूष्णीं निनयेत् । अद्भिरुपनिनयति । अद्भिरेनदाप्नोति । अथ यदन्यत् विन्देत्, तेन जुहुयात् । एतदेव तत्र कर्म ॥९॥

तदाहुः—यस्याग्निहोत्रं स्रुच्युन्नीतमुपरिष्टादवर्षेत् । किं, तत्र कर्म । का प्रायश्चित्तिरिति ।

कर्म्म का प्रायश्चित्तिरिति तद्विद्यादुपरिशन्मा शुक्रमागन्तुप मा देवा॰ प्राभूवन्स्थुपान्भविष्यामीति तेन काम जुहुयादेतदेव तत्र कर्म्म ॥ १० ॥

इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ १२।२।४ ॥ ( ४–२ ) ॥

तदाहुः । ( यस्य ) यस्य पूर्वस्यामाहुत्या॰ हुतायामथाग्निरनुगच्छेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति यस्मिन्निवेशे॰ शकलं विन्देत्तमभ्यस्याभिजुहुयाद्दारौ दारावग्निरिति वदन्दारौ दारौ ह्येवाग्निरथो अस्य हृदय एव तिष्ठन्हिरण्यमभिजुहुयादग्नेर्वा॰ एतद्रेतो यद्धिरण्यं स उ वै पुत्रः स पिता यः पिता स पुत्रस्तस्माद्धिरण्यमभिजुहुयादेतदेव तत्र कर्म ॥ १ ॥

तदाहु । ( यस्य ) यस्याहवनीय उद्धृते पुराऽग्निहोत्रादनुगच्छेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति गार्हपत्यादेवैनम्प्राञ्चमुद्धृत्यापसमाधायाग्निहोत्रं जुहुयात्स यद्यपि शतमेव कृत्वः पुनः पुनरुद्धृतोऽनुगच्छेद्गार्हपत्यादेवैनम्प्राञ्चमुद्धृत्यापसमाधायाग्निहोत्रञ्जुहुयादेतदेव तत्र कर्म्म ॥ २ ॥ ( अर्द्धः प्रपाठकः कं० ४८ ) ॥

---

तद्विद्यात् । उपरिशन्मा शुक्रमागन्तुप मा देवा प्राभूवन् अथान् भविष्यामि इति । तेन काम जुहुयात् । एतदेव तत्र कर्म ॥ १० ॥

तदाहुः–यस्य पूर्वस्यामाहुत्यां हुतायाम् । अथाग्निरनुगच्छेत् । किं तत्र कर्म । का प्रायश्चित्तिरिति । यस्मिन्निवेशे शकलं विन्देत् । तमभ्यस्याभिजुहुयात् । " दारौ दारावग्निः "–इति । वदन् । दारौ दारौ ह्येवाग्निः । अथ अस्य हृदय एव । तिष्ठन् । हिरण्यमभिजुहुयात् । अग्नेर्वा एतद्रेतो यद्धिरण्यम् । स उ वै पुत्रः, स पिता । यः पिता स पुत्रः । तस्माद्धिरण्यमभिजुहुयात् । एतदेव तत्र कर्म ॥ १ ॥

तदाहुः यस्याहवनीय उद्धृतः । पुराऽग्निहोत्रादनुगच्छेत् । किं तत्र कर्म । का प्रायश्चित्तिरिति । गार्हपत्यादेवैनं प्राञ्चमुद्धृत्य, उपसमाधाय, अग्निहोत्रं जुहुयात् । स यद्यपि शतमेव कृत्वः पुनः पुनरुद्धृतोऽनुगच्छेत् । गार्हपत्यादेवैनं प्राञ्चमुद्धृत्योपसमाधायाग्निहोत्रं जुहुयात् । एतदेव तत्र कर्म ॥ २ ॥

---

१–पूर्व हुता हुत वा यद ( हवनीयादनुगच्छेत् ) । ... । का श्रौ सू २५ । ३१–३२ ।
–निर्वृत्तव्यवाहवनीयस्यानुगच्छेत् ... । का श्रौ. सू. २५।३३ ।

तदाहुः । (ख) यस्य गार्हपत्योऽनुगच्छेत्किन्तत्र कर्म्म का प्रायश्चित्ति-
रिति तᳪं हैकऽउल्मुकादेव निर्म्मन्थन्ति यतो वै पुरुषस्यान्ततो
नश्यति ततो वै स तस्य प्रायश्चित्तिमिच्छतऽइति वदन्तस्तदु तथा न
कुर्य्यादुल्मुकᳪं ह वैवादाय चरेयुरुल्मुकस्य वाऽएवञ्चक्रमित्थमेव
कुर्य्यादुल्मुकादङ्गारमादाय तमरण्योरभिविमर्शायादुप ह तङ्काममाप्नोति
यऽउल्मुकमथ्यऽउपो तं योऽरण्योरेतदेव तत्र कर्म्म ॥ ३ ॥

तदाहुः । (ख) यस्याग्नावग्निमभ्युद्धरेयुः किन्तत्र कर्म्म का प्रायश्चित्ति-
रितीश्वरौ वाऽएतौ सम्पाद्याशान्तौ यजमानस्य प्रजाञ्च पशूंश्च निर्द्द-
हतस्तदभिमन्त्रयेत समितᳪं सङ्कल्पेथाᳪं सम्प्रियौ रोचिष्णू सुमनस्य-
मानौ । इषमूर्ज्जमभि संवसानौ ॥ सं वाम्मनाᳪंसि सं व्रता समु चित्ता-
न्याकरम् अग्ने पुरीष्याधिपा भव त्वन्नऽइषमूर्ज्जं यजमानाय धेहीति
शान्तिमेवाभ्यामेतद्वदति यजमानस्य प्रजायै पशूनामहिᳪंसायै ॥ ४ ॥

यद्युऽअस्य हृदयं व्येव लिखेत् । (द) अग्नयेऽग्निमतेऽष्टाकपालम्पुरो-
डाशन्निर्व्वपेत्तस्यावृत्सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ वि-

---

तदाहुः—यस्य गार्हपत्योऽनुगच्छेत् । किं तत्र कर्म । का प्रायश्चित्तिरिति । तं हैक उल्मुकादेव निर्मन्थन्ति । यतो वै पुरुषस्यान्ततो नश्यति । ततो वै स तस्य प्रायश्चित्तिमिच्छेत इति वदन्तः । तदु तथा न कुर्यात् । उल्मुकं ह वैवादाय चरेयुः । उल्मुकस्य वाऽएतद्रूपम् । इत्थमेव कुर्यात् । उल्मुकादङ्गारमादाय । तमरण्योरभिविमृशायात् । उप ह तं काममाप्नोति । य उल्मुकमथ्ये । उपो तं योऽरण्योः । एतदेव तत्र कर्म ॥ ३ ॥

तदाहुः—यस्याग्नावग्निमभ्युद्धरेयुः । किं तत्र कर्म । का प्रायश्चित्तिरिति । ईश्वरौ वा एतौ संपाद्याशान्तौ यजमानस्य प्रजा च पशूंश्च निर्दहतः । तदभिमन्त्रयेत । "समितं* सकल्पेथां* संप्रियौ रोचिष्णू सुमनस्यमानौ । इषमूर्जमभिसंवसानौ ॥ सं वां मनांसि संव्रता समु चित्तान्याकरम् । अग्ने पुरीष्याधिपा भव त्वन्न इषमूर्जं यजमानाय धेहि"—(वा. सं. १२।५७-५८) इति । शान्तिमेवाभ्यामेतद्वदति । यजमानस्य प्रजायै पशूनामहिंसायै ॥ ४ ॥

यदु अस्य हृदयं व्येव लिखेत् । अग्नयेऽग्निमतेऽष्टाकपालं पुरोडाशं निर्वपेत् । तस्यावृत् । सप्तदश सामिधेनीरनुब्रूयात् । वार्त्रघ्नावाज्यभागौ । विराजौ संयाज्ये । अर्थेते याज्यानुवाक्ये ।

---

१—गार्हपत्येऽनुगते भस्मराशौ उल्मुकस्य मन्थनम् । का० श्रौ० सू० २५ । ३४ ।
२—अग्निमिश्रेऽग्नयेऽग्निमते पुरोडाशः । समितमिति चाभ्यां शाम्यम् । का. श्रौ. सू. २५ । ४३-४४

राजौ सयाज्यऽ अथैते याज्याऽनुवाक्यऽ अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यऽ इत्यथ याज्या त्वँ ह्यग्नऽ अग्निना विप्रो विप्रेण सन्त्सता । सखा सख्या समिध्यसऽ इति शान्तिमतीभ्यामेतद्ददाति यजमानस्य प्रजायै पशूनामहिँसायाऽ एतदेव तत्र कर्म ॥ ५ ॥

तदाहुः । ( स्य ) यस्याहवनीयेऽननुगते गार्हपत्योऽनुगच्छेत्किन्तत्र कर्म का प्रायश्चित्तिरिति तँ हैके ततऽ एव प्राञ्चमुद्धरन्ति प्राणा वाऽ अग्नयः प्राणानेवास्माऽ एतदुद्धरामऽ इति वदन्तस्तदु तथा न कुर्याद्यो हैनन्तत्र ब्रूयात्प्राञ्चा न्वाऽ अयं यजमानस्य प्राणान्प्रारौत्सीन्मरिष्यत्ययं यजमानऽ इतीश्वरो ह तथैव स्यात् ॥ ६ ॥

( इ ) अथ हैके प्रत्यञ्चमाहरन्ति । प्राणोदानावेताविति वदन्तस्तदु तथा न कुर्यात्स्वर्ग्यं वाऽ एतद्यदग्निहोत्रं यो हैनन्तत्र ब्रूयात्प्रति न्वाऽ अयँ स्वर्गाल्लोकादवारुक्षन्नास्येदँ स्वर्ग्यमिव भविष्यतीतीश्वरो ह तथैव स्यात् ॥ ७ ॥

( इ ) अथ हैकेऽन्यङ्गार्हपत्यम्मन्थन्ति । तदु तथा न कुर्याद्यो हैनन्तत्र

---

“अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः”—इति । अथ याज्या । “त्वं ह्यग्नेऽअग्निना विप्रो विप्रेण सन्त्सता । सखा सख्या समिध्यसे”—इति । शान्तिमतीभ्यामेतद्ददाति । यजमानस्य प्रजायै पशूनामहिंसायै । एतदेव तत्र कर्म ॥ ५ ॥

तदाहुः—यस्याहवनीयेऽननुगते गार्हपत्योऽनुगच्छेत् । किं तत्र कर्म । का प्रायश्चित्तिरिति । तं हैके तत एव प्राञ्चमुद्धरन्ति । प्राणा वा अग्नयः । प्राणानेवास्मा एतदुद्धराम इति वदन्तः । तदु तथा न कुर्यात् । यो हैनं तत्र ब्रूयात् । प्राञ्चो न्वा अयं यजमानस्य प्राणान् प्रारौत्सीत् । मरिष्यत्ययं यजमानः । इति । ईश्वरो ह तथैव स्यात् ॥ ६ ॥

अथ हैके प्रत्यञ्चमाहरन्ति । प्राणोदानावेताविति वदन्तः । तदु तथा न कुर्यात् । स्वर्ग्यं वा एतत्, यदग्निहोत्रम् । यो हैनं तत्र ब्रूयात् । प्रति न्वा अयं स्वर्गाल्लोकादवारुक्षत् । नास्येदं स्वर्ग्यमेव भविष्यति इति । ईश्वरो ह तथैव स्यात् ॥ ७ ॥

अथ हैकेऽन्यं गार्हपत्यं मन्थन्ति । तदु तथा न कुर्यात् । यो हैनं तत्र ब्रूयात् । अग्नेर्वा अथ-

---

१—अहवनीयमनुगते च तत एवोद्धरणम् । अथ दृष्ट्वा वा । अन्यमन्थनं वा । निर्मथ्य वा । [illegible] पूर्वस्मात् पूर्ववद्धाम । का. श्रौ. सू. २५ । १५–१९ ।

वित्यथ याज्या देवानामपि पन्थामगन्म यच्छक्नवाम तदनुप्रवोढुम्। अग्निर्विद्वान्त्स यजात्सेदु होता सोऽअध्वरान्त्सऽऋतून्कल्पयातीत्यग्निर्वै पथिकृत्पथामपिनेता सऽएवैनं यज्ञपथमपिनयत्येतदेव तत्र कर्म ॥ १ ॥

तदाहुः। ( सर्वं ) यस्याग्नयः संसृज्येरन्किन्तत्र कर्म का प्रायश्चित्तिरिति स यदि परस्तादिदं न भीयात्तद्वियात्परस्तान्मा शुक्रमागन्नुपमान्देवाः प्राभूवञ्छ्रेयान्भविष्यामीति यद्वाऽअस्य हृदयम्ध्येव लिखेदग्नये विविचयेऽष्टाकपालम्पुरोडाशन्निर्वपेत्तस्यावृत्ताऽएव सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ संयाज्येऽअथैते याज्याऽनुवाक्ये वि ते विष्वग्वातजूतासोऽअग्ने भामासः शुचे शुचयश्चरन्ति। तुविम्रक्षासो दिव्या नवग्वा वना वनन्ति धृषता रुजन्तऽइत्यथ याज्या त्वामग्ने मानुषीरीडते विशो होत्राविदम्विविचिंरत्नधातमम्। गुहा सन्तंसुभग विश्वदर्शतन्तुविष्वणसंसुयजङ्घृतश्रियमित्यथो ह यो द्विषतो भ्रातृव्याद्व्यावित्सेत तत्कामऽएतया यजेत वि हैवास्माद्वर्त्ततऽएतदेव तत्र कर्म ॥ २ ॥

---

द्वान्त्स यजात्सेदु होतासो अध्वरान्त्स ऋतून्कल्पयाति''—इति। अग्निर्वै पथिकृत्। पथामपि नेता। स एवैनं यज्ञपथमपिनयति। एतदेव तत्र कर्म ॥ १ ॥

तदाहुः—यस्याग्नयः संसृज्यरन्। किं तत्र कर्म। का प्रायश्चित्तिरिति। स यदि परस्तादिदं न भीयात। तद्वियात। परस्तान्मा शुक्रमागन्नुप मा देवाः प्राभूवन् श्रेयान् भविष्यामि इति। यद्वा अस्य हृदय ध्येव लिखेत। अग्नये विविचयेऽष्टाकपालं पुरोडाशं निर्वपेत्। तस्यावृत। ता एव सप्तदश सामिधेनीरनुब्रूयात्। वार्त्रघ्नावाज्यभागौ। विराजौ संयाज्ये। अथैते याज्याऽनुवाक्ये—" वि ते विष्वग्वातजूतासो अग्ने भामासः शुचे शुचयश्चरन्ति। तुविम्रक्षासो दिव्या नवग्वा वना वनन्ति धृषता रुजन्तः" इति। अथ याज्या " त्वामग्ने मानुषीरीडते विशो होत्राविदं विविचिं रत्नधातमम्। गुहा सन्तं सुभग विश्वदर्शतं तुविष्वणसं सुयजं घृतश्रियम् " इति। अथो ह यो द्विषतो भ्रातृव्याद्व्यावित्सेत। तत्काम एतया यजेत। वि हैवास्माद्वर्त्तते। एतदेव तत्र कर्म ॥ २ ॥

---

१—स्मत ऋष्टैव। अग्नये विविचये निर्वपेत्। का श्रौ सू. २५। ८४—८७।

यद्ध्युमितोदहन्न भीयात् । (त्तु) तद्विद्यादभि द्विषन्तम्भ्रातृव्यम्भविष्यामि श्रेयान्भविष्यामीति यद्युऽअस्य हृदयं व्येव लिखेदग्नये सम्वर्गायाष्टाकपालम्पुरोडाशन्निर्वपेत्तस्यावृत्ताऽ एव सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ संय्याज्येऽअथैते याज्याऽनुवाक्ये परस्याऽअधि सम्वतोऽवराँ२ऽ अभ्यातर । यत्राहमस्मि ताँ२ऽ अवेत्यथ याज्या मा नोऽअस्मिन्महाधने परावर्ग्भारभृद्यथा । सम्वर्गꣳ सꣳ रयिञ्जयेत्यथो ह य द्विषतो भ्रातृव्यात्सम्विवृक्षेत तत्कामऽ एतया यजेत सꣳ हैवास्माद्वृङ्क्तऽ एतदेव तत्र कर्म्म ॥ ३ ॥

तदाहुः । (स्त्रुं) यस्य वैद्युतो दहेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्विद्यादुपरिष्टान्मा शुक्रमागन्नुप मान्देवाः प्राभूवञ्छ्रेयान्भविष्यामीति यद्युऽ अस्य हृदयम्व्येव लिखेदग्नयेऽप्सुमतेऽष्टाकपालम्पुरोडाशन्निर्वपेत्तस्यावृत्ताऽ एव सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ संय्याज्येऽ अथैते याज्याऽनुवाक्येऽ अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे । गर्भे सञ्जायसे पुनरित्यथ याज्या गर्भोऽ अस्योषधीनाङ्गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूतस्याग्ने गर्भोऽ अपामसीति

---

यद्यमितोदहं न भीयात् । तद्विद्यात् । अभि द्विषन्तं भ्रातृव्यं भविष्यामि, श्रेयान् भविष्यामीति यद्यु अस्य हृदयं व्येव लिखेत् । अग्नये संवर्गायाष्टाकपालं पुरोडाशं निर्वपेत् । तस्यावृत् । ता एव सप्तदश सामिधेनीरनुब्रूयात् । वार्त्रघ्नावाज्यभागौ । विराजौ संयाज्ये । अथैते याज्यानुवाक्ये- " परस्या अधि संवतोऽवरान्ऽ अभ्यातर । यत्राहमस्मि तान्ऽ अव "-( वा. सं. ११ । ७१ ) इति । अथ याज्या-' मा नो अस्मिन्महाधने परावर्ग्भारभृद्यथा । संवर्गं संरयिं जय " इति । अथो ह यो द्विषतो भ्रातृव्यात् संविवृक्षेत । तत्काम एतया यजेत । सं हैवास्माद् वृङ्क्ते । एतदेव तत्र कर्म ॥ ३ ॥

तदाहुः-यस्य वैद्युतो दहेत् । किं तत्र कर्म । का प्रायश्चित्तिरिति । तद्विद्यात् । उपरिष्टान्मा शुक्रमागन्नुप मां देवाः प्राभूवन् श्रेयान् भविष्यामि इति । यद्यु अस्य हृदयं व्येव लिखेत् । अग्नयेऽप्सुमतेऽष्टाकपालं पुरोडाशं निर्वपेत् । तस्यावृत् । ता एव सप्तदश सामिधेनीरनुब्रूयात् । वार्त्रघ्नावाज्यभागौ । विराजौ संयाज्ये । अथैते याज्यानुवाक्ये-

शान्तिमेवाभ्यामेतद्ददाति यजमानस्य प्रजायै पशूनामहिँसायाऽ एत-
देव तत्र कर्म ॥ ४ ॥

तदाहुः । ( यद्य ) यस्याग्नयोऽन्यैरग्निभिः सँसृज्येरन्किन्तत्र कर्म का प्रायश्चित्तिरित्यग्नये शुचयेऽष्टाकपालम्पुरोडाशन्निर्वपेत्तस्यावृत्ताऽ एव सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ संयाज्येऽ अथैतेऽ याज्यानुवाक्येऽ अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचतऽआहुतऽइत्यथ याज्योदग्ने शुचयस्तव शुक्रा भ्राजन्तऽईरते । तव ज्योतीँष्यर्चयऽ इति शान्तिमेवाभ्यामेतद्ददाति यजमानस्य प्रजायै पशूनामहिँसाया ऽएतदेव तत्र कर्म ॥ ५ ॥

तदाहुः । ( यद्य ) यस्याहवनीयमनुद्धृतमादित्योऽभ्यस्तमियात्किन्तत्र कर्म का प्रायश्चित्तिरित्यन वै रश्मयो विश्वे देवास्तस्मादपप्रयन्ति तदस्मै व्यृध्यते यस्मादेवाऽ अप प्रयन्ति तामनु व्यृद्धिं यश्च वेद यश्च न ताऽ उभावाहतुरनुद्धृतमस्याभ्यस्तमगादिति तत्रेत्थङ्कुर्याद्ध-

---

" अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे । गर्भे सञ्जायसे पुनः "–इति । अथ याज्या– " गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि "–( वा० सं० १२ । ३६–३७ ) इति । शान्तिमेवाभ्यामेतद्ददाति । यजमानस्य प्रजायै पशूनामहिंसायै । एतदेव तत्र कर्म ॥ ४ ॥

तदाहुः–यस्याग्नय उपरैरग्निभिः संसृज्येरन् । किं तत्र कर्म । का प्रायश्चित्तिरिति । अग्नये शुचयेऽष्टाकपालं पुरोडाशं निर्वपेत् । तस्यावृत् । ता एव सप्तदश सामिधेनीरनुब्रूयात् । वार्त्रघ्नावाज्यभागौ । विराजौ संयाज्ये । अथैते याज्यानुवाक्ये–" अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः "–इति । अथ याज्या–" उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतींष्यर्चयः " इति । शान्तिमेवाभ्यामेतद्ददाति । यजमानस्य प्रजायै पशूनामहिंसायै । एतदेव तत्र कर्म ॥ ५ ॥

रितꣳ हिरण्यन्दर्भे प्रबध्य पश्चाद्धर्त्तवै ब्रूयात्तदेतस्य रूपङ्क्रियते य एष तपत्यथ हरत्यः एष तद्धो रूपङ्क्रियते पवित्रन्दर्भाः पवयत्येवैनन्तदथेध्ममादीप्य प्राञ्चꣳ हर्त्तवै ब्रूयाद्ब्राह्मण आर्षेय उद्धरेद्ब्राह्मणो वा आर्षेयः सर्वा देवताः सर्वाभिरेवैनन्तद्देवताभिः समर्द्धयति तमुपसमाधाय प्रतिपरेत्य गार्हपत्य आज्यमधिश्रित्योद्वास्योत्पूयावेक्ष्य चतुर्गृहीतमाज्यङ्गृहीत्वा समिधमुपसंगृह्य प्राङुद्द्रवत्यथाहवनीये समिधमभ्याधाय दक्षिणञ्जान्वाच्य जुहोति विश्वेभ्यो देवेभ्यः स्वाहेति स यथा ब्राह्मणमावसथवासिनङ्क्रुद्धं यन्तमुक्षेन हतोपमन्त्रयेतैवमेवैतद्विश्वान्देवाननुमन्त्रयते जानन्ति हैनमुप हैनमावर्त्तन्त एतदेव तत्र कर्म्म ॥ ६ ॥

तदाहुः । ( सर्वं ) यस्याहवनीयमनुद्धृतमादित्योऽभ्युदियात्किन्तत्र कर्म्म का प्रायश्चित्तिरित्येते वै रश्मयो विश्वे देवास्तेऽस्मादुपिवाꣳसोऽपप्रयन्ति तदस्मै व्यृध्यते यस्माद्देवा अपप्रयन्ति तामनुव्यृद्धिं यश्च वेद यश्च न ता उभावाहतुरनुद्धृतमस्याभ्युदगादिति तत्रेत्थङ्कुर्याद्रजतꣳ हिरण्यन्दर्भे प्रबध्य पुरस्ताद्धर्त्तवै ब्रूयात्तच्चन्द्रमसो रूपङ्क्रियते रात्रिर्वै चन्द्रमास्तद्रात्रे रूपङ्क्रियते पवित्रन्दर्भाः पवयत्येवैनन्तदथेध्ममादीप्यान्वञ्चꣳ हर्त्तवै ब्रूयाद्ब्राह्मण आर्षेय उद्धरेद्ब्राह्मणो वा आर्षेयः सर्वा देवताः सर्वाभिरेवैनन्तद्देवताभिः समर्द्धयति

---

एषः । तद्धो रूपं क्रियते । पवित्रं दर्भाः । पवयत्येवैनं तत् । अथेध्ममादीप्य प्राचं हर्तवै ब्रूयात् । ब्राह्मण आर्षेय उद्धरेत् । ब्राह्मणो वा आर्षेयः सर्वा देवताः । सर्वाभिरेवैनं तद्देवताभिः समर्द्धयति । तमुपसमाधाय प्रतिपरेत्य गार्हपत्य आज्यमधिश्रित्य उद्वास्योत्पूयावेक्ष्य चतुर्गृहीतमाज्यं गृहीत्वा समिधमुपसंगृह्य प्राङुद्द्रवति । अथाहवनीये समिधमभ्याधाय दक्षिणं जान्वाच्य जुहोति– "विश्वेभ्यो देवेभ्यः स्वाहा"–इति । स यथा ब्राह्मणमावसथवासिनं क्रुद्धं यन्तमुक्षेन हतोपमन्त्रयेत । एवमेवैतद् विश्वान्देवाननुमन्त्रयते । जानन्ति हैनम् । उप हैनमावर्त्तन्ते । एतदेव तत्र कर्म ॥६॥

तदाहुः–यस्याहवनीयमनुद्धृतम् आदित्योऽभ्युदियात् । किं तत्र कर्म । का प्रायश्चित्तिरिति । एते वै रश्मयो विश्वे देवाः । तेऽस्मादुपिवांसोऽपप्रयंति । तदस्मै व्यृध्यते । यस्माद्देवा अपप्रयंति । तामनुव्यृद्धिं यश्च वेद । यश्च न । ता उभावाहतुः । अनुद्धृतमस्याभ्युदगादिति । तत्रेत्थं कुर्यात् । रजतं हिरण्यं दर्भे प्रबध्य पुरस्ताद्धर्तवै ब्रूयात् । तच्चंद्रमसो रूपं क्रियते । रात्रिर्वै चंद्रमाः । तद्रात्रे रूपं क्रियते । पवित्रं दर्भाः । पवयत्येवैनं तत् । अथेध्ममादीप्य अन्वंचं हर्तवै ब्रूयात् । ब्राह्मण

तमुपसमाधाय प्रतिपरेत्य
यथागृहीतमाज्यं गृहीत्वा
समिधमभ्याधाय दक्षिणं जान्वाच्य जुहोति विश्वेभ्यो देवेभ्यः स्वाहेति
सोऽसावेव बन्धुर्न्न ह वै तत्र काचनार्त्तिर्न्न रिष्टिर्भवति यत्रैषा प्रायश्चित्तिः
क्रियतऽ एतदेव तत्र कर्म्म ॥ ७ ॥

इति द्वितीयप्रपाठके षष्ठं ब्राह्मणम् ॥ १२–२–६ ॥ ( ४. ४. ) ॥

चतुर्थोऽध्यायश्च समाप्तः ॥ १२ । ४ ॥

कण्डिकासंख्या ॥ ३९ ॥

---

आर्षेय उद्धरेत् । ब्राह्मणो वा आर्षेयः सर्वा देवताः । सर्वाभिरेवैनं तद्देवताभिः समर्द्धयति । तमुपसमाधाय प्रतिपरेत्य गार्हपत्य आज्यमधिश्रित्य उद्वास्योत्पूयावेक्ष्य यथागृहीतमाज्यं गृहीत्वा समिधमुपसंगृह्य प्राङुदाद्रवति । अथाहवनीये समिधमभ्याधाय दक्षिणं जान्वाच्य जुहोति– " विश्वेभ्यो देवेभ्यः स्वाहा "–इति । सोऽसावेव बंधुः । न ह वै तत्र काचनार्तिः । न रिष्टिर्भवति । यत्रैषा प्रायश्चित्तिः क्रियते । एतदेव तत्र कर्म ॥ ७ ॥

---

इति श्रीमदाचार्यहरिस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे
चतुर्थेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( १२ । ४ । ४ ) ॥

नागस्वामिसुतोऽवन्त्या पाराशर्यो वसन् हरिः । श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥
भूभत्रा विक्रमार्केण कलसा कनकवेदिकाम् । दानमानयस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥
इति श्रीमर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीना श्रीहरिस्वामिना कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्य
द्वादशकाण्डे चतुर्थोऽध्याय समाप्त ॥ ( १२–४ ) ॥

---

१–अजकर्णे वा दक्षिणे । कर्भ जन तस्य । कुशस्तम्बे वा अनाम्क तस्मिन् अप्सु वा नाऽज्ञा यभि पतति पुन । अद्दुना भृदित यथेयातमितोऽसति । हुत्वा भूरित्यनुमन्त्रणम्, बन्दन च । का श्रौ सू । २५ । ६०–६८ ।

# अथ पञ्चमेऽध्याये प्रथमं ब्राह्मणम् ।
# द्वितीयप्रपाठके च सप्तमं ब्राह्मणम् ।

तदाहुः । (यस्य) यदेष दीर्घसत्त्र्यग्निहोत्रं जुह्वत्प्रवसन्म्रियेत जुहुयु-रस्मा३इ ना३इ इति तद्धैके होतव्यम्मन्यन्तऽ आगन्तोरिति तदु तथा न कुर्य्यादतस्थानो वाऽ एष तस्मै यदेनꣳ शवदह्याया इव जुहुयु-र्य्यज्ञाय वाऽ एषऽ आहुतिभ्यस्तस्थानः स हैनममृष्यमाणस्तृप्रꣳ सचते ॥ १ ॥

(तेऽथ) अथ हैकऽ आहुः । (रे) एवमेवान्वाहिताऽ अहूयमानाः शयीरन्निति तदु तथा न कुर्य्यादतस्थानो वाऽ एष तस्मै यदेनꣳ शव-दह्यायाऽ इवेन्धीरन्यज्ञाय वाऽ एषऽ आहुतिभ्यस्तस्थानः स हैनममृष्य-माणस्तृप्रꣳ सचते ॥ २ ॥

(तेऽथ) अथ हैकेऽरण्योः । (२) अग्नी समारोह्य निदधति तमाहृते निर्म्मन्थन्ति तदु तथा न कुर्य्यादतस्थानो वाऽ एष तस्मै यदेनꣳ शवदह्यायाऽ इव निर्म्मन्थेयुर्य्यज्ञाय वाऽ एषऽ आहुतिभ्यस्त-स्थानः स हैनममृष्यमाणस्तृप्रꣳ सचते ॥ ३ ॥

---

तदाहुः—यदेष दीर्घसत्र्यग्निहोत्रं जुह्वत् प्रवसन् म्रियेत । जुहुयुरस्मा ३ इ । ना ३ इति । तद्धैके होतव्यं मन्यन्ते । आगन्तोरिति । तदु तथा न कुर्यात् । अतस्थानो वा एष तस्मै । यदेनं शवदह्याया इव जुहुयुः । यज्ञाय वा एष आहुतिभ्यस्तस्थानः । स हैनममृष्यमाणस्तृप्रं सचते ॥ १ ॥

अथ हैक आहुः । एवमेवान्वाहिता अहूयमानाः शयीरन्निति । तदु तथा न कुर्यात् । अत-स्थानो वा एष तस्मै । यदेनं शवदह्याया इवेन्धीरन् । यज्ञाय वा एष आहुतिभ्यस्तस्थानः । स हैनममृष्यमाणस्तृप्रं सचते ॥ २ ॥

अथ हैके । अरण्योरग्नी समारोह्य निदधति तम् । आहृते निर्मन्थन्ति । तदु तथा न कुर्यात् । अतस्थानो वा एष तस्मै । यदेनं शवदह्याया इव निर्मन्थेयुः । यज्ञाय वा एष आहुतिभ्यस्त-स्थानः । स हैनममृष्यमाणस्तृप्रं सचते ॥ ३ ॥

---

तदाहु—प्रोषितस्याग्निहोत्रिण प्रेतस्य प्रारम्भकस्य [illegible] अग्निहोत्र होतव्यम्, [illegible] [illegible] होतव्यमित्येतत् एतानि होतव्यानि [illegible] [illegible] [illegible] [illegible] " विचार्यमाणानाम् "—( पा. सू. ८ । २ । ९७ ) इति प्लुति । " एचोऽप्रगृह्यस्यादूराद्-

( तऽइ ) इत्थमेव कुर्य्यात् । ( त्रि ) निवान्यवन्सामेष्वै ब्रूयात्तस्यै पयसा जुहुयादार्त्तम्वाऽ एतत्पयो यन्निवान्यवत्सायाऽआर्त्तमेतदग्निहोत्रं यन्मृतस्य तदार्त्तेनैव तदार्त्तन्निष्कृत्य श्रेयान्भवति ॥ ४ ॥

तदप्युपमाऽस्ति । यद्वौ रथौ मृदितौ समागच्छेतार्ठ० स्यादेवान्यतरः स्यदयिति ॥ ५ ॥

तस्य वाऽ एतस्याग्निहोत्रस्योपचारः । 'प्राचीनावीती दोहयति यज्ञोपवीती वै देवेभ्यो दोहयत्यथैवम्पितृणाम् ॥ ६ ॥

( त्रा ) नाङ्गारेष्वधिश्रयति । यदङ्गारेष्वधिश्रयेद्देवत्रा कुर्य्यादगार्हपत्यादुष्णं भस्म दक्षिणा निरुह्य तस्मिन्नेनदधिश्रयति पितृदेवत्यमेवैनत्तत्करोति ॥ ७ ॥

नावज्योतयति नापः प्रत्यानयति । यद्यावज्योतयेद्यदपः प्रत्यानयेद्देवत्रा कुर्य्यान्न त्रिः प्रतिष्ठापर्ठ० हरति यत्त्रिः प्रतिष्ठापर्ठ० हरेद्देवत्रा कुर्य्यात्सकृदेव निकर्षन्हरति पितृदेवत्यमेवैनत्तत्करोति ॥ ८ ॥

---

इत्थमेव कुर्यात् । निवान्यवत्सामेवैनं ब्रूयात् । तस्याः पयसा जुहुयात् । आर्तं वा एतत्पयः । यन्निवान्यवत्सायाः । आर्तमेतदग्निहोत्रम् । यन्मृतस्य तत् । आर्तेनैव तदार्तं निष्कृत्य श्रेयान् भवति ॥ ४ ॥

तदपि उपमाऽस्ति । यत् द्वौ रथौ मृदितौ समागच्छेताम् । स्यादेवान्यतरः स्यदयिति ॥ ५ ॥

तस्य वा एतस्याग्निहोत्रस्योपचारः । प्राचीनावीती दोहयति । यज्ञोपवीती वै देवेभ्यो दोहयति । अथैवं पितृणाम् ॥ ६ ॥

नाङ्गारेष्वधिश्रयति । यदङ्गारेष्वधिश्रयेत् । देवत्रा कुर्यात् । गार्हपत्यादुष्णं भस्म दक्षिणा निरुह्य । तस्मिन्नेनदधिश्रयति । पितृदेवत्यमेवैनत् तत्करोति ॥ ७ ॥

नावज्योतयति । नापः प्रत्यानयति । यद्यावज्योतयेत्, यदपः प्रत्यानयेत् । देवत्रा कुर्यात् । न त्रिः प्रतिष्ठापं हरति । यत् त्रिः प्रतिष्ठापं हरेत् । देवत्रा कुर्यात् । सकृदेव निकर्षन् हरति । पितृदेवत्यमेवैनत् तत्करोति ॥ ८ ॥

---

इते शेम्यार्दिम्याऽऽदुत्तरस्येदुतौ "—( पा. सू. ८ । २ । ८९ ) इति दमात । नाडम्यतरां ' निवायमा नाम् "—( पा. सू. ८ । २ । ९७ ) इत्येव प्लुतिः । आ आगन्ता हालच्यमग्निहोत्र मन्त्र । अनस्थान । " प्रकारादन्धेयात्स्वयोश्च " ( पा. सू. १ । ३ । २८ ) इति प्रकारादिं तिष्ठतामनपदम । आयाम नादर्थान प्रकाश्ति वातृप्रमिति वेदितवान् । न तस्थान अनस्थान ( । स अग्निराहनीय. ) गार्हपत्यस्य दद

मेवैनं जुहोत्यपाम्मोदाय स्वाहेत्यद्भ्य एवैनं जुहोति सवित्रे स्वाहेति सवित्र एवैनञ्जुहोति वायवे स्वाहेति वायव एवैनञ्जुहोति विष्णवे स्वाहेति विष्णव एवैनञ्जुहोतीन्द्राय स्वाहेतीन्द्रायैवैनञ्जुहोति बृहस्पतये स्वाहेति बृहस्पतय एवैनञ्जुहोति मित्राय स्वाहेति मित्रायैवैनञ्जुहोति वरुणाय स्वाहेति वरुणायैवैनञ्जुहोत्येतावन्तो वै सर्वे देवास्तेभ्य एवैनं जुहोति पराचीर्जुहोति पराङिव वै स्वर्गो लोकः स्वर्गस्य लोकस्याभिजित्यै ॥ ३ ॥

( त्याऽई ) ईश्वरो वा एषः । (प) पराङ्प्रदग्धोः पराचीराहुतीर्जुहोति पुनरावर्त्ततेऽस्मिन्नेव लोके प्रतितिष्ठत्येताँ ह वा अस्य यज्ञस्य संस्थितिमुपाचास्कन्दायास्कन्नँ हि तद्यद्धुतस्य स्कन्दति ॥ ४ ॥

यथा वै हविषोऽहुतस्य स्कन्देत् । ( दे ) एवमेतत्पशोः स्कन्दति यच्छो- णितमनाऽलम्भमुत्सृजन्ति पद्रूपाणि जुहोति सर्वहुतमेवैनञ्जुहोत्यस्क-

---

मेवैनं जुहोति । " अपां मोदाय स्वाहा "–इति । अद्भ्य एवैनं जुहोति । "सवित्रे स्वाहा"– इति । सवित्र एवैनं जुहोति । " वायवे स्वाहा "–इति । वायव एवैनं जुहोति । " विष्णवे स्वाहा "–इति । विष्णव एवैनं जुहोति । " इंद्राय स्वाहा "–इति । इंद्रायैवैनं जुहोति । " बृहस्पतये स्वाहा "–इति । बृहस्पतय एवैनं जुहोति । " मित्राय स्वाहा "–इति । मित्रायैवैनं जुहोति । " वरुणाय स्वाहा "–( वा. सं. २२ । ६ ) इति । वरुणायैवैनं जुहोति । एतावन्तो वै सर्वे देवाः । तेभ्य एवैनं जुहोति । पराचीर्जुहोति । पराङिव वै स्वर्गो लोकः । स्वर्गस्य लोकस्याभिजित्यै ॥ ३ ॥

ईश्वरो वा एष पराङ्प्रदग्धोः । यः पराचीराहुतीर्जुहोति । पुनरावर्तते । अस्मिन्नेव लोके प्रतितिष्ठति । एतां ह वाव स यज्ञस्य संस्थितिमुपाचास्कंदाय । अस्कन्नं हि तत् । यद्धुतस्य स्कन्दति ॥ ४ ॥

यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशोः स्कन्दति । यं शोणितमनाऽलम्भमुत्सृजन्ति । पद्रूपाणि जुहोति । सर्वहुतमेवैनं जुहोत्यस्कन्दाय । अस्कन्नं हि तत् । यद्धुतस्य स्कन्दति । "हिंकार-

न्दायास्कान्नपृँ हि तद्यदुनुत्य स्कन्दति हिङ्काराय स्वाहा हिङ्कृताय स्वाहेत्येतानि वा अश्वस्य रूपाणि तान्येवावरुन्द्धे ॥ ५ ॥

तदाहु । ( र ) अनाहुतिर्वै रूपाणि नैता होतव्याऽइत्यथो खल्वाहुरत्र वाऽअश्वमेधः सन्तिष्ठते यद्रूपाणि जुहोति होतव्याऽएवेति बहिर्द्धा वाऽएतमायतनात्करोति भ्रातृव्यमस्मै जनयति यस्यानायतनेऽन्यत्राहुतीर्जुहोति ॥ ६ ॥

सान्निध्याऽएवेष्टः । पुरस्तादनुद्धृत्य सकृदेव रूपाण्याहवनीये जुहोत्यायतनऽएवाहुतीर्जुहोति नास्मै भ्रातृव्यञ्जनयति यज्ञमुखे यज्ञमुखे जुहोति यज्ञस्य सन्तत्याऽअव्यवच्छेदाय ॥ ७ ॥

तदाहुः । ( स्थं ) यद्यज्ञमुखेयज्ञमुखे जुहुयात्पशुभिर्व्यृध्येत पापीयान्त्स्यात्सकृदेव होतव्या न पशुभिर्व्यृध्यते न पापीयान्भवत्यष्टाचत्वा-
ति जागताः पशवो जगत्यै-
तस्मादेकः प्रजास्वर्द्धुकः ॥८॥

इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥ १३।१।३ ॥ ( १-३ ) ॥

---

राय स्वाहा हिङ्कृताय स्वाहा "–( वा सं २२ । ७ ) इति । एतानि वा अश्वस्य रूपाणि । तान्येवावरुन्द्धे ॥ ५ ॥

तदाहु –अनाहुतिर्वै रूपाणि । नैता होतव्या इति । अथो खल्वाहुः । अत्र वा अश्वमेधः सतिष्ठते । यद्रूपाणि जुहोति । होतव्या एवेति । बहिर्द्धा वा एनमायतनात्करोति । भ्रातृव्यमस्मै जनयति । यस्यानायतनेऽन्यत्राहुतीर्जुहोति ॥ ६ ॥

सान्निध्या एवेष्टे पुरस्तादनुद्धृत्य सकृदेव रूपाण्याहवनीये जुहोति । आयतन एवाहुतीर्जुहोति । नास्मै भ्रातृव्यं जनयति । यज्ञमुखे यज्ञमुखे जुहोति । यज्ञस्य सन्तत्या अव्यवच्छेदाय ॥ ७ ॥

तदाहु –यद्यज्ञमुखे यज्ञमुखे जुहुयात् । पशुभिर्व्यृध्येत । पापीयान् स्यात् । सकृदेव होतव्याः । न पशुभिर्व्यृध्यते । न पापीयान् भवति । अष्टाचत्वारिंशतं जुहोति । अष्टाचत्वारिंशदक्षरा

प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टः पराङैत्स दिशोऽनुप्रा- विशत्तन्देवाः प्रैषमैच्छंस्तमिष्टिभिरनुप्रायुञ्जत तमिष्टिभिरन्वैच्छंस्तमि- ष्टिभिरन्वविन्दन्यदिष्टिभिर्यजतेऽश्वमेव तन्मेध्यं यजमानोऽन्विच्छति ॥१॥

सावित्र्यो भवन्ति (न्ती) इयं वै सविता यो वाऽअस्यान्निलयते योऽन्यत्रै- त्यस्याम्वाव तमनुविन्दन्ति न वाऽइमां कश्चन तिर्यङ्नोर्ध्वोऽत्येतु- मर्हति यत्सावित्र्यो भवन्त्यश्वस्यैवानुवित्त्यै ॥ २ ॥

---

जगती । जागताः पशवः । जगत्यैवास्मै पशूनवरुन्धे । एकमतिरिक्तं जुहोति । तस्मादेकः प्रजास्वर्द्धुकः ॥ ८ ॥

प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टः पराङैत् । स दिशोऽनुप्राविशत् । तं देवाः प्रैषमैच्छन् । तमिष्टिभिरनुप्रायुञ्जत । तमिष्टिभिरन्वैच्छन् । तमिष्टिभिरन्वविन्दन् । यदिष्टिभिर्यजते । अश्वमेव तन्मेध्यं यजमानोऽन्विच्छति ॥ १ ॥

सावित्र्यो भवन्ति । इयं वै सविता । यो वा अस्या निलयते । योऽन्यत्रैति । अस्यां वाव तमनुविन्दन्ति । न वा इमां कश्चन तिर्यङ् नोर्ध्वोऽत्येतुमर्हति । यत्सावित्र्यो भवन्ति । अश्वस्यै- वानुवित्त्यै ॥ २ ॥

---

तदाहुः । प्र वा ऽ एतदश्वो मीयते यत्पराङेति न ह्येनं प्रत्यावर्तयन्तीति यत्सायं धृतीर्जुहोति क्षेमो वै धृतिः क्षेमो रात्रिः क्षेमेणैवैनं दाधार तस्मात्सायम्मनुष्याश्च पशवश्च क्षेम्या भवन्त्यथ यत्प्रातरिष्टिभिर्यजत ऽइच्छत्येवैनन्तत्तस्माद्दिवा नष्टैष ऽ एति यद्वेव सायं धृतीर्जुहोति प्रातरिष्टिभिर्यजते योगक्षेममेव तद्यजमानः कल्पयते तस्माद्यत्रैतेन यज्ञेन यजन्ते क्लृप्तः प्रजानां योगक्षेमो भवति ॥ २ ॥

इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ १३।१।४ ॥ ( १-४ )

अप वा ऽ एतस्मात् । ( चक्री ) श्री राष्ट्रङ्क्रामति योऽश्वमेधेन यजते यदा वै पुरुषः श्रियं गच्छति वीणाऽस्मै वाद्यते ब्राह्मणौ वीणागाथिनौ सम्वत्सरं गायतः श्रियै वा ऽ एतद्रूपं यद्वीणा श्रियमेवास्मिंस्तद्धत्तः ॥ १ ॥

---

तदाहुः-प्र वा एतदश्वो मीयते । यत्पराङेति । न ह्येनं प्रत्यावर्तयन्तीति । यत्सायं धृतीर्जुहोति । क्षेमो वै धृतिः । क्षेमो रात्रिः । क्षेमेणैवैनं दाधार । तस्मात्सायं मनुष्याश्च पशवश्च क्षेम्या भवन्ति । अथ यत्प्रातरिष्टिभिर्यजते । इच्छत्येवैनं तत् । तस्माद्दिवा नष्टैष एति । यद्वेव सायं धृतीर्जुहोति । प्रातरिष्टिभिर्यजते । योगक्षेममेव तद्यजमानः कल्पयते । तस्माद्यत्रैतेन यज्ञेन यजन्ते । क्लृप्तः प्रजाना योगक्षेमो भवति ॥ २ ॥

अप वा एतस्माच्छ्री राष्ट्रं क्रामति । योऽश्वमेधेन यजते । यदा वै पुरुषः श्रियं गच्छति । वीणाऽस्मै

---

तदाहु । इतयो विशेषेन । प्रमीयत हिंस्यते । "मीञ हिंसायाम्" (धा.पा. क्या आ. ४) हिंसते न हि तमश्व हिंसेभ्योऽपि प्रत्यावर्तयन्तीति यत्साय धृती । यत्ववधारणार्थं । "इह रन्तिरिह रमताम्" इत्येता आहुतीर्जुहोतीति तत्क्षणेनैव रात्रिलक्षणेन एनमश्व दाधार धारितवानध्वर्युः । तस्मात् साय मनुष्याश्च पशवश्च क्षेम्या क्षेमसबद्धा भवन्ति । कथ पुन क्षेमेण एन धारयतीत्यत आह– क्षेमो वै धृतिर्धारणम । गृहेषु यदिह धृतिरस्तु इत्येव प्रार्थ्यते । क्षेमो रात्रि । तत्र हि गृहे स्थितानां सर्वेषां भय न भवति । ततश्च तस्या धृतीराहुतीर्जुहोति । उक्त प्रकषोऽर्थ । इच्छत्येवेति । अन्विच्छति । गवेषत इत्यर्थ । तस्मात्तदनुकारेण दिवा नष्टैष एति गच्छति । नष्टमन्विच्छति गवेषयति इति नष्टैष । योगक्षेम योगसहित क्षेमम् । इष्टिभि सावित्रीभि योगम् । धृतिभि क्षेमम् । यजमान प्रजास्य कल्पयते ॥ २ ॥

इति श्रीमदाचार्यहरिस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे प्रथमेऽध्याये चतुर्थं ब्राह्मणम् ॥ १३ ॥ १ ॥ ४ ॥

अप वा एतस्मात् । एतेभ्यो योऽश्वमेधेन यजत । तस्मात् श्रीश्च समृद्धि राष्ट्रं च जनपद अपक्रामति ।

( स्तु ) तदाहुः । ( स्तु ) यदुभौ ब्राह्मणौ गायेतामपास्मात्क्षत्त्रं क्रामे-द्ब्रह्मणो वाऽ एतद्रूपं यद्ब्राह्मणो न वै ब्रह्मणि क्षत्त्रꣳ रमतऽइति ॥ २ ॥

यदुभौ राजन्यौ । ( न्यात् ) अपास्माद्ब्रह्मवर्चसं क्रामेत्क्षत्त्रस्य वाऽ एतद्रूपं यद्राजन्यो न वै क्षत्त्रे ब्रह्मवर्चसꣳ रमतऽ इति ब्राह्मणोऽन्यो गायति राजन्योऽन्यो ब्रह्म वै ब्राह्मणः क्षत्त्रꣳ राजन्यस्तदस्य ब्रह्मणा च क्षत्त्रेण चोभयतः श्रीः परिगृहीता भवति ॥ ३ ॥

तदाहुः । ( स्त्री ) यदुभौ दिवा गायेतामपभ्रꣳशुकाऽस्माच्छ्रीः स्याद्ब्रह्मणो वाऽ एतद्रूपं यदहर्यदा वै राजा कामयतेऽथ ब्राह्मणं जिनाति पापीयांस्तु भवति ॥ ४ ॥

यदुभौ नक्तम् । ( सु ) अपास्माद्ब्रह्मवर्चसमुत्क्रामेत्क्षत्त्रस्य वाऽएत-द्रूपं यद्रात्रिर्न वै क्षत्त्रे ब्रह्मवर्चसꣳ रमत ऽइति दिवा ब्राह्मणो गायति

---

बाऽन्ते । ब्राह्मणौ वीणागायिनौ सवत्सरं गायतः । श्रियै वा एतद्रूपम् । यद्वीणा । श्रियमे-वास्मिंस्तद्दधतः ॥ १ ॥

तदाहुः—यदुभौ ब्राह्मणौ गायेताम् । अपास्मात्क्षत्त्रं क्रामेत् । ब्रह्मणो वा एतद्रूपम् । यद् ब्राह्मणः । न वै ब्रह्मणि क्षत्त्रं रमत इति ॥ २ ॥

यदुभौ राजन्यौ । अपास्माद् ब्रह्मवर्चसं क्रामेत् । क्षत्त्रस्य वा एतद्रूपम् । यद्राजन्यः । न वै क्षत्त्रे ब्रह्मवर्चसं रमत इति । ब्राह्मणोऽन्यो गायति । राजन्योऽन्यः । ब्रह्म वै ब्राह्मणः । क्षत्त्रं राजन्यः । तदस्य ब्रह्मणा च क्षत्त्रेण चोभयतः श्रीः परिगृहीता भवति ॥ ३ ॥

तदाहुः—यदुभौ दिवा गायेताम् । अपभ्रंशुकाऽस्माच्छ्रीः स्यात् । ब्रह्मणो वा एतद्रूपम् । यदहः । यदा वै राजा कामयते । अथ ब्राह्मणं जिनाति । पापीयांस्तु भवति ॥ ४ ॥

यदुभौ नक्तम् । अपास्माद्ब्रह्मवर्चसं क्रामेत् । क्षत्त्रस्य वा एतद्रूपम् । यद्रात्रिः । न वै क्षत्त्रे ब्रह्मवर्चसं

नुक्तॐ राजन्यस्तथा हास्य ब्रह्मणा च क्षत्त्रेण चोभयतः श्रीः परिगृहीता भवतीति-॥ ५ ॥

( त्य ) अयजतेत्यददादिति । ब्राह्मणो गायतीष्टापूर्तम्वै ब्राह्मणस्येष्टापूर्तेनैवैनॐ समर्द्धयतीत्ययुध्यतेत्यमुॐ सङ्ग्राममजयदिति राजन्यो युद्धं वै राजन्यस्य वीर्य्यम्वीर्य्येणैवैनॐ समर्द्धयति तिस्रोऽन्यो गाथा गायति तिस्रोऽन्य षट्सम्पद्यन्ते षड्वृतवः सम्वत्सरऽऋतुष्वेव सम्वत्सरे प्रतितिष्ठति ताभ्याॐ शतं ददाति शतायुर्वै पुरुषः शतेन्द्रियऽ आयुरेवेन्द्रियम्वीर्य्यमात्मन्धत्त ॥ ६ ॥

इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥ १३।१।५ ॥ ( १-५ )

विभूर्मात्रा प्रभूः पित्रेति । ( त्री ) इयम्वै मातासौ पितााभ्यामेवैनम्परिददात्यश्वोऽसि हयोऽसीति शास्त्येवैनन्तत्तस्माच्छिष्टाः प्रजा जायं-

रमत इति । दिवा ब्राह्मणो गायति । नक्तं राजन्यः । एवमेवास्य ब्रह्मणा च क्षत्त्रेण चोभयतः श्रीः परिगृहीता । भवति इति-॥ ५ ॥

अयजतेत्यददादिति ब्राह्मणो गायति । इष्टापूर्तं वै ब्राह्मणस्य । इष्टापूर्तेनैवैनं समर्द्धयति । इत्ययुध्यतेत्यमुं संग्राममजयदिति राजन्यः। युद्धं वै राजन्यस्य वीर्यम्। वीर्येणैवैनं समर्द्धयति। तिस्रोऽन्यो गाथा गायति । तिस्रोऽन्यः । षट् संपद्यन्ते । षड् ऋतवः संवत्सरः । ऋतुष्वेव संवत्सरे प्रतितिष्ठति । ताभ्यां शतं ददाति । शतायुर्वै पुरुषः । शतेन्द्रियः । आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते ॥ ६ ॥

" विभूर्मात्रा प्रभूः पित्रा "-इति । इयं वै माता । असौ पिता । आभ्यामेवैनं परिददाति । " अश्वोऽसि हयोऽसि "-इति । शास्त्येवैनं तत् । तस्माच्छिष्टाः प्रजा जायन्ते ।

इति । एव प्रभूत सार अचिनमद्भिष्ट सात्त्विक पात्रेषु अददात् दत्तवानिति ब्राह्मणो गायति । एव बहुभिः शूरैः सह निर्गत्य, नयोनरमविकल्प अयुध्यत इति । एव चतुरङ्गेण बलेन वक्रादिना व्यूहेन अनीकोरकश्यादिमवध्नन् । अमु चतुर्दन्तकूटयुद्धादिक सङ्ग्रामम् । अथवा कुरुग्राम बालमग्राम प्राच्यसग्राम उदीच्यमरीच्यादिक अजयज्जितवान् । अथ रात्रौ इति राजन्यो गायति । नान्यं प्रेषेण शतं ददाति । पाठ्यमानयोस्तयोः प्राधान्यात् । ऋत्विजा तु अनुदक्षिणोक्तभागा दीयते । इति न प्रत्येकं सकला दीयते ॥ ४-६ ॥

इति श्रीमदाचार्यहरिस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे

प्रथमेऽध्याये पञ्चमं ब्राह्मणम् ॥ १३ । १ । ५ ॥

विभूर्मात्रेति । तृतीयाया सावित्र्यामिष्टौ " अग्निनायमुपोयाया तर्युश्च यजमानश्चाश्वस्य दक्षिणे कर्णे

१ 'इयपचन्' इत्यादि [illegible] ।

२-वीणागाथिभ्यां पृथक् शतं ददाति । का० श्रौ० सू० २०।६८ ॥

न्त्युऽस्त्योऽसि मुयोऽसीत्युत्येवैनन्नयति तुस्मादुश्वः पशूनुत्येति तुस्मादुश्वः पशूनाॐ श्रैष्ठ्यङ्गच्छत्युर्वाऽसि सुप्तिरसि व्वाज्यसीति यथा यजुरेवैत-द्वृषाऽसि नृमणाऽअसीति मिथुनत्वाय युयुर्नामाऽसि शिशुर्नामाऽसीत्ये-तद्वाऽअश्वस्य प्रियन्नामधेयं प्रियेणैवैनन्नाम्नाऽभिवदति तुस्मादुप्यामित्रौ सङ्गत्य नाम्ना चेदभिवुदतोऽन्योऽन्यॐ सुमेव जानाते ॥ १ ॥

(तेऽआ) आदित्यानाम्पत्वाऽन्विहीति । (त्या) आदित्यानेवैन-ङ्गमयति देवाऽ आशापालाऽ एतन्देवेभ्योऽश्वम्मेधाय प्रोक्षितॐ रक्षतेति शतं वै तुल्प्या राजपुत्राऽआशापालास्तेभ्यऽ एवैनम्परिददातीह

"अत्योऽसि मयोऽसि"-इति । अत्येवैनं नयति । तस्मादश्वः पशूनत्येति । तस्मादश्वः पशूनां श्रैष्ठ्यं गच्छति । "अर्वासि सप्तिरसि वाज्यसि "-इति । यथा यजुरेवैतत् । "वृषासि नृमणा असि "-इति, मिथुनत्वाय । "ययुर्नामाऽसि शिशुर्नामाऽसि "-इति । एतद्वा अश्वस्य प्रियं नामधेयम् । प्रियेणैवैनं नाम्नाऽभिवदति । तस्मादप्यामित्रौ संगत्य नाम्ना चेदभिवदतः । अन्योऽन्यं समेव जानाते ॥ १ ॥

"आदित्यानां पत्वाऽन्विहि "-इति । आदित्यानेवैनं गमयति । "देवा आशापाला एतं देवेभ्योऽश्वं मेधाय प्रोक्षितं रक्षत "-इति । शतं वै तल्प्या राजपुत्रा आशा-

आशानो विभूर्मात्रा प्रभूः पितेति" वक्ष्यति (मा. ७. १३।१।२।१६) । अत्र तु मन्त्रो व्याख्यायते । 'इयं वै माता' । एन्य आश्चर्यवादृष्टिलक्षणेन प्रतिप्रहाव । ' ...तौ पितेति ' ... । तदुक्तं तैल परिश्याम्यासौ पितेत्युच्यते । आश्यामेवैनं परिददातीति । विभूर्मात्रा प्रभुः पिता सन् । आदित्यान् ... मनुगच्छेति कृत्वा द्यावापृथिवीभ्यामेवैनमश्वं परित्रातु निवेदयति-शास्त्रेणैवैनं तद्विति । महाहनम्व ... विनिरामि शिक्षयन्न तदनुकारेण पिता. स्वयमनुशाला. प्रजा जायते । ... तमश्व नयतीति ब्रुवन् । अतिशब्दादत्यशब्दमन्यशब्दो दर्शयति । अतिक्रमशाल्यान् यत्र भवतीत्यत्य । अथवा 'अत सातत्यगमने" इत्यस्मात्कर्तरि यत्प्रत्ययः । वर्धति निवर्तते इति हृष्या अन्यथा वर्धमानेऽत्र दर्शितं । अन्यानश्वानत्येति अतः अयमेवाश्व इत्युच्यते । अतिशयेन अत्यनीति । यथा यजुरेवैतत् ब्राह्मणमिव ब्रुवन् अश्वेन प्रतिरमितः । अर्वानिपिर्वा । सर्पतीति सप्तिः । साधु वाजनेति वाजी । वृषानुकृति दर्शयति-मिथुनत्वायेति. । वृषत्वम् मिथुनेन विना न भवतीति । नृमणा अपि नृभिर्विषयभूतैर्विना न भवतीति । सोऽपि मिथुनस्य विना साक्षी-त्वनिराय. । एतद्वा अश्वस्य । प्रिय नामधेयमिति । विशनस्यर्थ यातीति ययुः । अन्यार्थ व प्रशस्तार्थं चेति प्रिय । शिशुः शमनीयो भवतीत्यनदति प्रशस्तानिमित्तत्वात् प्रियत्व । आमित्रौ अमित्राः शत्रौ ॥ १ ॥

तल्प्याः । तल्पमाश्रितास्तल्प्या । शत शय्या गता. तत्रैव स्म रात्रौ ये सायुं रक्षति राजपुत्र. । तेभ्य

रन्तिरिह रमतामिह धृतिरिह स्वधृतिः स्वाहेति सम्वत्सरमाहुतीर्जुहोति षोडश नवतीरेता वाऽअश्वस्य बन्धनन्ताभिरेवैनम्बध्नाति तस्मादश्वः प्रमुक्तो बन्धनमागच्छति षोडश नवतीरेता वाऽ अश्वस्य बन्धनन्ताभिरेवैनम्बध्नाति तस्मादश्वः प्रमुक्तो बन्धनन्न जहाति ॥ २ ॥

राष्ट्रम्वाऽ अश्वमेधः । (घो) राष्ट्रऽ एते व्यायच्छन्ति येऽश्वꣳ रक्षन्ति तेषां यऽ उदृचङ्गच्छन्ति राष्ट्रेणैव ते राष्ट्रम्भवन्त्यथ ये नोदृचङ्गच्छन्ति राष्ट्रात्ते व्यवच्छिद्यन्ते तस्माद्राष्ट्र्यश्वमेधेन यजेत परा वाऽएष सिच्यते योऽबलोऽश्वमेधेन यजते यद्यमित्राऽ अश्वम्विन्देरन्यज्ञोऽस्य विच्छिद्येत पापीयान्त्स्याच्छतङ्कवचिनो रक्षन्ति यज्ञस्य सन्तत्याऽअव्यवच्छेदाय न पापीयान्भवत्यथान्यमानीय प्रोक्षेयुः सैव तत्र प्रायश्चित्तिः ॥ ३ ॥

इति प्रथमप्रपाठके षष्ठं ब्राह्मणम् ॥ १३-१-६ ॥ ( १. ६. ) ॥

---

पालाः । तेभ्य एवैनं परिददाति । " इह रन्तिरिह रमतामिह धृतिरिह स्वधृतिः स्वाहा "- ( वा. सं. २२ । १९ । ) इति । संवत्सरमाहुतीर्जुहोति षोडश नवतीः । एता वा अश्वस्य बन्धनम् । ताभिरेवैनं बध्नाति । तस्मादश्वः प्रमुक्तो बन्धनमागच्छति । षोडश नवतीः । एता वा अश्वस्य बन्धनम् । ताभिरेवैनं बध्नाति । तस्मादश्वः प्रमुक्तो बन्धनं न जहाति ॥ २ ॥

राष्ट्रं वा अश्वमेधः । राष्ट्र एते व्यायच्छन्ति । येऽश्वं रक्षन्ति । तेषां य उदृचं गच्छन्ति । राष्ट्रेणैव ते राष्ट्रं भवन्ति । अथ ये नोदृचं गच्छन्ति । राष्ट्रात्ते व्यवच्छिद्यन्ते । तस्माद्राष्ट्र्यश्वमेधेन यजेत । परा वा एष सिच्यते । योऽबलोऽश्वमेधेन यजते । यद्यमित्रा अश्वं विन्देरन् । यज्ञोऽस्य विच्छिद्येत ।

---

एवैनं परिददातीति । ब्रुवन् देवत्वं द नेष्टे गौणं दर्शयति । अर्थेन देवा उच्यन्त तु देवा आशापाला लक्ष्यन्ते । " इह रन्तिरिह रमताम् " इति क्रमप्राप्तमन्त्रानुक्रमणार्थं पुनर्वचनम् । षोडश नवतीरिति । ता एता. संवत्सरे सम्पद्यन्ते । एताभिरिति । इह रतिरेव प्रार्थना । ' बध्नाति ' बध्यतेऽस्मिन्निति बन्धनं स्थानं तस्मात्प्रमुक्तः स्वयमेवागच्छति । ( सर्वं च सम्पन्नम् ? ) ॥ २ ॥

राष्ट्रं जनपदम् । अश्वमेधब्राह्मणम् । कथं ? यस्मात् राष्ट्रं एते विविधं आयच्छन्ते व्याप्रियन्ते । तथा ये राजपुत्रादयो राजन्यादय उदृचं समाप्तिं गच्छन्ति । अश्वमात्रादृ इति । ते राष्ट्रेणैवाश्वमेधेन हेतुना राष्ट्रं राष्ट्रान् स्व रक्षन्ति राजपुत्रादयो भवन्ति । तथैव सेवया देशा आत्ताश्च प्राप्नुवन्तीत्यर्थः । तस्मात् राष्ट्री राष्ट्रपतिः । अश्वमेधेन यजेतेति विधिः । परा इति । परासिच्यते क्षीयतेऽशक्तः । अबलो सबलः सामर्थ्यः । अश्वमेधेन यजते ॥ ३ ॥

इति श्रीमदाचार्यहरिस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे प्रथमेऽध्याये षष्ठं ब्राह्मणम् ॥ १३ । १ । ६ ॥

प्रजापतिरकामयत । ( ता ) अश्वमेधेन यजेयेति सोऽश्राम्यत्स तपो-ऽतप्यत तस्य श्रान्तस्य तप्तस्य सप्तधाऽऽत्मनो देवताऽअपाक्रामन्त्सा दीक्षाऽभवत्सऽएतानि वैश्वदेवान्यपश्यत्तान्यजुहोत्तैर्वै स दीक्षामवा-रुन्ध यद्वैश्वदेवानि जुहोति दीक्षामेव तैर्यजमानोऽवरुन्धेऽन्वहञ्जुहोत्य-न्वहमेव दीक्षामवरुन्धे सप्त जुहोति सप्त वै ता देवताऽअपाक्रामंस्ताभि-रेवास्मै दीक्षामवरुन्धे ॥ १ ॥

( न्येऽप ) अप वाऽ एतेभ्यः प्राणाः क्रामन्ति । ये दीक्षामतिरेचयन्ति सप्ताहम्प्रचरन्ति सप्त वै शीर्षण्याः प्राणाः प्राणा दीक्षा प्राणैरेवास्मै प्राणान्दीक्षामवरुन्धे त्रेधा विभज्य देवता जुहोति त्र्यावृतो वै देवा-स्त्र्यावृतऽ इमे लोकाऽ ऋध्यामेव वीर्यंऽएषु लोकेषु प्रतितिष्ठति ॥ २ ॥

---

पापीयान् स्यात् । उत कश्चिनो रक्षन्ति । यज्ञस्य सन्तत्या अव्यवच्छेदाय । न पापीयान् भवति । अयात्यमानीय मोक्षेषु । सैव तत्र प्रायश्चित्तिः ॥ ३ ॥

प्रजापतिरकामयत । अश्वमेधेन यजेयेति । सोऽश्राम्यत् । स तपोऽतप्यत । तस्य श्रान्तस्य तप्तस्य सप्तधाऽऽत्मनो देवता अपाक्रामन् । सा दीक्षाऽभवत् । स एतानि वैश्वदेवान्यपश्यत् । तान्यजुहोत् । तैर्वै स दीक्षामवारुन्ध । यद् वैश्वदेवानि जुहोति । दीक्षामेव तैर्यजमानोऽवरुन्धे । अन्वहं जुहोति । अन्वहमेव दीक्षामवरुन्धे । सप्त जुहोति । सप्त वै ता देवता अपाक्रामन् । ताभि-रेवास्मै दीक्षामवरुन्धे ॥ १ ॥

अप वा एतेभ्यः प्राणाः क्रामन्ति । ये दीक्षामतिरेचयन्ति । सप्ताहं प्रचरन्ति । सप्त वै शीर्षण्याः प्राणाः । प्राणा दीक्षा । प्राणैरेवास्मै प्राणान् दीक्षामवरुन्धे । त्रेधा विभज्य देवता जुहोति । त्र्यावृतो वै देवाः । त्र्यावृत इमे लोकाः । ऋध्यामेव वीर्यं एषु लोकेषु प्रतितिष्ठति ॥ २ ॥

---

(त्ये) एकविꣳशतिः सम्पद्यन्ते । द्वादश मासाः पञ्चर्तवस्त्रयऽइमे लोकाऽ असावादित्यऽ एकविꣳशस्तदैवं क्षत्रꣳ सा श्रीस्तदाधिपत्यन्तद्ब्रध्नस्य विष्टपन्तत्स्वाराज्यमश्नुते ॥ ३ ॥

त्रिꣳशतमौद्ग्रभणानि जुहोति । त्रिꣳशदक्षरा विराड्विराडु कृत्स्नमन्नं कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै चत्वार्य्यौद्ग्रभणानि जुहोति त्रीणि वैश्वदेवानि सप्त सम्पद्यन्ते सप्त वै शीर्षण्याः प्राणाः प्राणा दीक्षा प्राणैरेवास्मै प्राणान्दीक्षामवरुन्धे पूर्णाहुतिमुत्तमाञ्जुहोति प्रत्युत्तब्ध्यै सयुक्त्वाय ॥ ४ ॥

इति प्रथमप्रपाठके सप्तमं ब्राह्मणम् ॥ १२।१।७ ॥ ( १-७ ॥ )

---

एकविंशतिः सम्पद्यन्ते । द्वादश मासाः । पञ्चर्तवः । त्रय इमे लोकाः । असावादित्य एकविंशः । तदेवं क्षत्रं । सा श्रीः । तदाधिपत्यम । तत् ब्रध्नस्य विष्टपम । तत् स्वाराज्यमश्नुते ॥ ३ ॥

त्रिंशतमौद्ग्रभणानि जुहोति । त्रिंशदक्षरा विराट् । विराडु कृत्स्नमन्नम् । कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै । चत्वार्यौद्ग्रभणानि जुहोति । त्रीणि वैश्वदेवानि । सप्त संपद्यन्ते । सप्त वै शीर्षण्याः प्राणाः । प्राणा दीक्षा । प्राणैरेवास्मै प्राणान्दीक्षामवरुन्धे । पूर्णाहुतिमुत्तमां जुहोति । प्रत्युत्तब्ध्यै सयुक्त्वाय ॥ ४ ॥

---

दीक्षामस्मै प्राणाभिरा दीक्षामवरुन्धे । त्रेधा त्रीणि रूपाणि विभज्य देवता जुहोति । "काय स्वाहा कस्मै स्वाहा" इत्येवमादिना । त्र्यावृतो वसुरुद्रादित्या मरुतस्त्रयस्त्रिगुणा देवाः । अग्निः सोम इन्द्र इत्येवमाद्यात्मिका त्र्यावृतो वा । एव लोका अपि त्रिगुणाः । समस्ता प्रत्येकं चादिमध्यान्तविभागेन त्र्यावृताः । ततश्च त्रिगुणाभिर्देवताभिरिष्टाभिः त्रिगुणश्च दीक्षितः समृद्धेषु एषु लोकेषु प्रतितिष्ठति ॥ २ ॥

तानि च सप्त । सप्त त्रिकाणि । एकविंशानि सम्पद्यन्ते । अथ तैः सिमांदैवमपि दर्शयन्नाह—द्वादश मासा इत्यादि । उत्तरत्र तच्छब्दश्च अतो यच्छब्द अध्याहार्यः । यदेव द्वादश मासा इत्यादि तदेव देवेषु भव क्षत्रं । मासादींस्तान् देवानभिप्रेत्याह—सा श्रीरिति । तत्सौभाग्यतामाश्रित्याह—तदेव ब्रध्नस्यादित्यस्य सन्निधि प्रकाश्यम् । तत् आधिपत्यं अधिपतिभावम् । तत् स्वाराज्यमैश्वर्यम् अश्नुते ॥ ३ ॥

तैरेकविंशत्या वैश्वदेवैस्त्रिंशतमौद्ग्रभणानि जुहोति । सप्तभिर्दिवसैः क्रमेण एकविंशानि सम्पद्यते इति सप्तदिवसाधिकारात् । चत्वारि औद्ग्रभणानि जुहोतीति च एकस्मिन्नहनि चतुर्होमवचनाच्च । चत्वारि औद्ग्रभणानि प्रत्यहं जुहोति । प्रागन्त्येन सप्तमे तु षडाग्निकानि जुहोति । कुत एवम् । त्रिंशत्सपदवचनात्तेषां च साग्निचित्ये अवश्य होम्यत्वात् । अन्यस्य तु अनग्नेरस्यैतेनापि न प्राप्ते । शीर्षण्याः शिरसि भवाः । यतिः सप्तिते शिरस्थानादेश । प्राणा दीक्षेति । या मम प्राणदेवता अप्राक्रामत् । सा दीक्षाऽभवदित्येव प्राणदीक्षया प्राणैरेव सप्तभिः शीर्षण्यैः प्राणान् दीक्षामपरान् अधिदैवतान् अवरुन्धे । पूर्णाहुतिं "विश्वो देवस्य" इत्येता-

प्रजापतिरश्वमेधमसृजत । स सृष्टः प्रर्चमुल्लानात्स साम तम्वैश्वदेवा-
न्युदयच्छन्यद्वैश्वदेवानि जुहोत्यश्वमस्यैवोद्यत्यै ॥ १ ॥
काय स्वाहा । कस्मै स्वाहा कतमस्मै स्वाहेति प्राजापत्यम्मुख्य-
ङ्करोति प्रजापतिमुखाभिरेवैनन्देवताभिरुद्यच्छति ॥ २ ॥
स्वाहाऽऽधिमाधीताय स्वाहा । मनः प्रजापतय स्वाहा चित्तम्विज्ञा-
तायेति यदेव पूर्वासाम्ब्राह्मणन्तदत्र ॥ ३ ॥
( त्रा ) अदित्यै स्वाहा । ( हाऽदि ) अदित्यै मह्यै स्वाहाऽदित्यै सुमृ-
डीकायै स्वाहेतीयम्वाऽअदितिरनयैवैनमुद्यच्छति ॥ ४ ॥
सरस्वत्यै स्वाहा । सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहेति
वाग्वै सरस्वती वाचैवैनमुद्यच्छति ॥ ५ ॥

---

प्रजापतिरश्वमेधमसृजत । स सृष्टः प्रर्चम ःीनात्स साम । त वैश्वदेवान्युदयच्छन् । यद्वैश्व-
देवानि जुहोति । अश्वमेधस्यैवोद्यत्यै ॥ १ ॥

" काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहा "-इति प्राजापत्य मुख्य करोति ।
प्रजापतिमुखाभिरेवैन देवताभिरुद्यच्छति ॥ २ ॥

" स्वाहाऽऽधिमाधीताय स्वाहा मनः प्रजापतये स्वाहा चित्तं विज्ञाताय "-इति ।
यदेव पूर्वासा ब्राह्मणम् । तदत्र ॥ ३ ॥

" अदित्यै स्वाहाऽदित्यै मह्यै स्वाहाऽदित्यै सुमृडीकायै स्वाहा "-इति । इयं वा
अदितिः । अनयैवैनमुद्यच्छति ॥ ४ ॥

" सरस्वत्यै स्वाहा सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहा "-इति ।
वाग्वै सरस्वती । वाचैवैनमुद्यच्छति ॥ ५ ॥

---

मुख्या जुहोति । किम्थं ? प्रयुत पूर्वमाश्वप्रमणानाम् । ... ये मह्यै । कथ नाम । प्रतिम्न स्यान् ।
प्रतिम्नत्वानि च मयुत्रि समानयोगीनि कथ स्युरिति । प्रतिम्नत्वानि हि वर्तुलानि [illegible] मत्यकारीणि
भवन्तीत्यर्थ ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये प्रथमेऽध्याये
सप्तमं ब्राह्मणम् ॥ १३ । १ । ७ ॥

प्रजापतिरश्वमेधं यजुरात्मकं विसृष्टवान् सृष्टवान् । स एव सृष्टः सन् यजुषामृर्वाणां बहुत्वादलब्धत्वा-
दस्तन्न इति कृत्वा ऋच कृत्वा [illegible] 'साम' साम्यत्वं च 'प्रास्नीनात्' । "ष्णी वरणे"
( धा पा का. ९. ३० ) प्रावरणेन् आवरणस्य सङ्कोचितवान् । त यजुरात्मकमश्वमेधमतिगुप्तमाकामति
वैश्वदेवानि होमकर्माणि दृष्टवन्तः प्रार्थनीयानि भूत्वा तत् ऊर्ध्वं अयच्छन् । उद्यतवन्ति उच्छ्रितवन्ति ॥ १ ॥

प्राजापत्यं वैश्वदेव त्रितयेषु मुख्य मुख्यमिव प्रथमं करोति । यदेव पूर्वासा व्याहृतीनां वा प्राजापत्यानां

पूष्णे स्वाहा । पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहेति पशवो वै पूषा पशुभिरेवैनमुद्यच्छति ॥ ६ ॥

त्वष्ट्रे स्वाहा । त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहेति त्वष्टा वै पशूनाम्मिथुनानाꣳ रूपकृद्रूपैरेवैनमुद्यच्छति ॥ ७ ॥

विष्णवे स्वाहा । विष्णवे निभूयपाय स्वाहा विष्णवे शिपिविष्टाय स्वाहेति यज्ञो वै विष्णुर्यज्ञेनैवैनमुद्यच्छति विश्वो देवस्य नेतुरिति पूर्णाहुतिमुत्तमाञ्जुहोतीयम्वै पूर्णाहुतिरस्यामेवान्ततः प्रतितिष्ठति ॥८॥

इति प्रथमप्रपाठकेऽष्टमं ब्राह्मणम् ॥ १३।१।८ ॥ ( १–८ ) ॥

आ ब्रह्मन् । ( न्ब्रा ) ब्राह्मणो ब्रह्मवर्चसी जायतामिति ब्राह्मणऽ एव ब्रह्मवर्चसन्दधाति तस्मात्पुरा ब्राह्मणो ब्रह्मवर्चसी जज्ञे ॥ १ ॥

---

" पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नरंधिषाय स्वाहा "–इति । पशवो वै पूषा । पशुभिरेवैनमुद्यच्छति ॥ ६ ॥

"त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा"–इति । त्वष्टा वै पशूनां मिथुनानां रूपकृत् । रूपैरेवैनमुद्यच्छति ॥ ७ ॥

" विष्णवे स्वाहा विष्णवे निभूयपाय स्वाहा विष्णवे शिपिविष्टाय स्वाहा "–( वा. सं. २२ । २० ) इति । यज्ञो वै विष्णुः । यज्ञेनैवैनमुद्यच्छति । " विश्वो देवस्य नेतुः "–( वा. सं. २२ । २१ ) इति पूर्णाहुतिमुत्तमां जुहोति । इयं वै पूर्णाहुतिः । अस्यामेवान्ततः प्रतितिष्ठति ॥ ८ ॥

" आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायताम् "–इति । ब्राह्मण एव ब्रह्मवर्चसं दधाति । तस्मात्पुरा ब्राह्मणो ब्रह्मवर्चसी जज्ञे ॥ १ ॥

---

ब्राह्मण–" प्रजापतिमुखाभिरेवैन देवताभिरुद्यच्छति " इति । तदन ब्राह्मणमिति नुवल आह । " आधिमाधीताय मनश्चित्तम् " इत्येता द्वितीयाहे पूर्वोत्तरेष्टौ हूयमाना चतुर्थी द्रष्टव्या ॥ २–६ ॥

' त्वष्टा वै ' । आत्मिक वाऽध्यात्मक । पशूना मिथुनानाम् । आध्यात्मिक तावत् रूपकृत् । रूपाणि मानाविधानि करोति इति ॥ ७ ॥ ८ ॥

इति श्रीमदाचार्यहरिस्वामिन· कृतौ माध्यंदिनीयशतपथब्राह्मणभाष्ये प्रथमेऽध्याये-ऽष्टम ब्राह्मणम् ॥ १३ । १ । ८ ॥

आ ब्रह्मन् । ओं समिदाधानात् कृत्वा आब्रह्मन्निति अध्वर्युर्जपति । आशीरूपत्वात् क्रियांतरे चाविनियोगात्

---

१–कृत्वाग्निर्नाधासमिदाधानादकृत्वाऽब्रह्मन्निति जपति । ( आ समिदाधानात्–वेलाया त्रयोदशग्रमिदाधानांतम् । ) उत्सर्गकाल एके । का. श्रौ. सू. २०।१२।५१॥ उपतिष्ठत उत्सर्गे वा श्रौ. सू १७ । ११८ ( इयुत्सर्गोपस्थानकाल । ) पशुपशुभ्यर्जन निरोऽवशने । का. श्रौ. सू. २० । ४९ । इत्यपोत्सर्गकाले वा ।

(ह्र३आ) आ राष्ट्रे राजन्यः । शूरऽइषव्योऽतिव्याधी महारथो जायतामिति राजन्यऽ एव शौर्य्यम्महिमानन्दधाति तस्मात्पुरा राजन्यः शूरऽ इषव्योऽतिव्याधी महारथो जज्ञे ॥ २ ॥

दोग्ध्री धेनुरिति । धेन्वामेव पयो दधाति तस्मात्पुरा धेनुर्दोग्ध्री जज्ञे ॥३॥

वोढाऽनड्वानिति । ( त्य ) अनडुह्येव बलन्दधाति तस्मात्पुराऽनड्वान्वोढा जज्ञे ॥ ४ ॥

(ह्र३आ) आशुः सप्तिरिति । (त्य) अश्वऽ एव जवन्दधाति तस्मात्पुराऽश्वः सप्तिर्जज्ञे ॥ ५ ॥

पुरन्धिर्योषेति । योषित्येव रूपन्दधाति तस्माद्रूपिणी युवतिः प्रिया भावुका ॥ ६ ॥

जिष्णू रथेष्ठाऽइति । राजन्यऽ एव जैत्रम्महिमानन्दधाति तस्मात्पुरा राजन्यो जिष्णुर्जज्ञे ॥ ७ ॥

सभेयो युवेति । ( त्ये ) एष वै सभेयो युवा यः प्रथमवयसी तस्मात्प्रथमवयसी स्त्रीणाम्प्रियो भावुकः ॥ ८ ॥

---

" आ राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम् "–इति । राजन्य एव शौर्यं महिमानं दधाति । तस्मात्पुरा राजन्यः शूर इषव्योऽतिव्याधी महारथो जज्ञे ॥ २ ॥

" दोग्ध्री धेनुः "–इति । धेन्वामेव पयो दधाति । तस्मात्पुरा धेनुर्दोग्ध्री जज्ञे ॥ ३ ॥

" वोढाऽनड्वान् "–इति । अनडुह्येव बलं दधाति । तस्मात्पुराऽनड्वान्वोढा जज्ञे ॥ ४ ॥

" आशुः सप्तिः "–इति । अश्व एव जवं दधाति । तस्मात्पुराऽश्वः सप्तिर्जज्ञे ॥ ५ ॥

" पुरंधिर्योषा "–इति । योषित्येव रूपं दधाति । तस्माद्रूपिणी युवतिः प्रिया भावुका ॥ ६ ॥

" जिष्णू रथेष्ठाः "–इति । राजन्य एव जैत्रं महिमानं दधाति । तस्मात्पुरा राजन्यो जिष्णुर्जज्ञे ॥ ७ ॥

" सभेयो युवा "–इति । एष वै सभेयो युवा । यः प्रथमवयसी । तस्मात् प्रथमवयसी स्त्रीणां प्रियो भावुकः ॥ ८ ॥

---

एवमाशासानोऽध्वर्युः ब्राह्मणे ब्रह्मवर्चसं दधाति, तस्मात् पुरा सदा ब्राह्मणाः ब्रह्मवर्चसिनो जज्ञिरे । सदा ब्रह्मवर्चसी जातं । य एव एवं तस्मात् एवमन्यानि ईदृशानि वचनानि व्याख्येयानि । शूरपतीति शूरः पराक्रमी ।

( ९ ) आऽस्य यजमानस्य वीरो जायतामिति यजमानस्यैव प्रजायाम्वीर्यन्दधाति तस्मात्पुरेजानस्य वीरो जज्ञे ॥ ९ ॥ अर्द्धः प्रपाठकः ॥ ६४ ॥

निकामेनिकामे नः पर्ज्जन्यो वर्षत्विति । निकामेनिकामे वै तत्र पर्ज्जन्यो वर्षति यत्रैतेन यज्ञेन यजन्ते फलवत्यो नऽओषधयः पच्यन्तामिति फलवत्यो वै तत्रौषधयः पच्यन्ते यत्रैतेन यज्ञेन यजन्ते योगक्षेमो नः कल्पतामिति योगक्षेमो वै तत्र कल्पते यत्रैतेन यज्ञेन यजन्ते तस्माद्यत्रैतेन यज्ञेन यजन्ते क्लृप्तः प्रजानां योगक्षेमो भवति ॥ १० ॥

इति प्रथमप्रपाठके नवमं ब्राह्मणम् ॥ १३।१।९॥( १–९ ) ॥

प्रथमोऽध्यायश्च समाप्तः ॥ १३ । १ ॥

कण्डिकासंख्या ॥ ९९ ॥

---

" आऽस्य यजमानस्य वीरो जायताम् "–इति । यजमानस्यैव प्रजायां वीर्यं दधाति । तस्मात्पुरेजानस्य वीरो जज्ञे ॥ ९ ॥

" निकामेनिकामे नः पर्जन्यो वर्षतु "–इति । निकामेनिकामे वै तत्र पर्जन्यो वर्षति । यत्रैतेन यज्ञेन यजन्ते । " फलवत्यो न ओषधयः पच्यन्ताम् "–इति । फलवत्यो वै तत्रौषधयः पच्यन्ते । यत्रैतेन यज्ञेन यजन्ते । "योगक्षेमो नः कल्पताम्"–( वा. सं. २२ । २२ ) इति । योगक्षेमो वै तत्र कल्पते । यत्रैतेन यज्ञेन यजन्ते । तस्माद्यत्रैतेन यज्ञेन यजन्ते । क्लृप्तः प्रजानां योगक्षेमो भवति ॥ १० ॥

---

" शूरविक्रान्तो " ( पा. पा. सु. प. ३९९ ) ' इषव्य ' इषुषु साधु । ' अतिव्याधी ' अतिक्रम्य अन्येषां लक्ष्यं विध्यतीति अतिव्याधी । दोग्ध्री साधुदुग्धा । वोढा साधु वहति । जिष्णु साधु जयति । सभेय समायां साधु । ' प्रथमवयसी ' प्रथम वयः तरुणं विद्यते स प्रथमवयसी । तस्मात् पुरा ईजानस्य अश्वमेधेन इष्टवत वीरो जायते स्म । सस्यानुपरोधादिनिशतं कामं ॥ १–१० ॥

इति श्रीमदाचार्यहरिस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे प्रथमेऽध्याये नवम ब्राह्मणम् ॥ १३ । १ । ९ ॥

नागस्वामिसुतोऽवन्त्या पाराशर्यो वसन्हरिः । श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूभर्त्रा विक्रमार्केण क्ष्मादौ कनकवेदिकाम् । दामायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिना कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे प्रथमोऽध्यायः समाप्तः ॥ ( १३–१ ) ॥

# अथ द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ।
## प्रथमप्रपाठके च दशमं ब्राह्मणम् ।



प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत् । (स) सऽआत्मन्नश्वमेधमधत्त ते देवाः प्रजापतिमब्रुवन्नेष वै यज्ञो यदश्वमेधोऽपि नोऽत्रास्तु भागऽइति तेभ्यऽएतानन्नहोमानकल्पयद्यदन्नहोमाञ्जुहोति देवानेव तत्प्रीणाति ॥ १ ॥

(स्या) आज्येन जुहोति । तेजो वाऽआज्यन्तेजसैवास्मिंस्तत्तेजो दधात्याज्येन जुहोत्येतद्वै देवानां प्रियन्धाम यदाज्यं प्रियेणैवैनान्धाम्ना समर्द्धयति ॥ २ ॥

सक्तुभिर्जुहोति । देवानाम्वाऽएतद्रूपं यत्सक्तवो देवानेव तत्प्रीणाति ॥ ३ ॥

धानाभिर्जुहोति । (स्य) अहोरात्राणाम्वाऽएतद्रूपं यद्धानाऽअहोरात्राण्येव तत्प्रीणाति ॥ ४ ॥

लाजैर्जुहोति । नक्षत्राणाम्वाऽ एतद्रूपं यल्लाजा नक्षत्राण्येव तत्प्रीणाति प्राणाय स्वाहाऽपानाय स्वाहेति नामग्राहञ्जुहोति नामग्राहमेवै-

---

अथान्नहोमब्राह्मणम् ।

प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् । स आत्मन्नश्वमेधमधत्त । ते देवाः प्रजापतिमब्रुवन् । एष वै यज्ञः यदश्वमेधः । अपि नोऽत्रास्तु भाग इति । तेभ्य एतान् अन्नहोमान् अकल्पयत् । यदन्नहोमान् जुहोति । देवानेव तत्प्रीणाति ॥ १ ॥

आज्येन जुहोति । तेजो वा आज्यम् । तेजसैवास्मिंस्तत्तेजो दधाति । आज्येन जुहोति एतद्वै देवाना प्रियं धाम, यदाज्यम् । प्रियेणैवैनान् धाम्ना समर्द्धयति ॥ २ ॥

सक्तुभिर्जुहोति । देवाना वा एतद्रूपम्, यत्सक्तवः । देवानेव तत्प्रीणाति ॥ ३ ॥

धानाभिर्जुहोति । अहोरात्राणा वा एतद्रूपम्, यद्धानाः । अहोरात्राण्येव तत्प्रीणाति ॥ ४ ॥

लाजैर्जुहोति । नक्षत्राणा वा एतद्रूपम्, यल्लाजाः । नक्षत्राण्येव तत्प्रीणाति । "प्राणाय स्वाहाऽपानाय स्वाहा"–(वा० सं० २३ । २३) इति नामग्राहं जुहोति । नाम ग्राह-

---

प्रजापतिरिति । अन्नहोमब्राह्मणमेतत् । देवाना सक्तवो रूपं सत्त्ववत्त्वात् । नक्षत्राणि लाजा रूपं समर्थ-त्वात् । प्राणादीना नामगृहीत्वा नामग्राहम् । एकैक उच्चरन्नुक्तौ देवो यागाद्भुवि ता ....

---

१–आज्यसक्तुधानालाजान्नहोम जुहोति प्रथम सर्वेति प्रतिमन्त्र सर्वप्रयमावर्त्य .... इति .... । सर्वदेवहुति । का श्रौ सू. २० । ११२-११५ ॥

नांस्तत्प्रीणात्येकस्मै स्वाहा द्वाभ्याᳪं स्वाहा शताय स्वाहैकशताय स्वाहेत्यनुपूर्व्वञ्जुहोत्यनुपूर्व्वमेवैनांस्तत्प्रीणात्येकोत्तरा जुहोत्येकवृद्वै स्वर्गो लोकऽ एकधैवैनᳪं स्वर्गं लोकङ्गमयति पराचीर्ज्जुहोति पराङिव वै स्वर्गो लोकः स्वर्गस्य लोकस्याभिजित्यै ॥ ५ ॥

( त्याऽई ) ईश्वरो वाऽएषः ( ० ) पराङ्प्रदघोर्यः पराचीराहुतीर्ज्जुहोति नैकशतमत्येति यदेकशतमतीयादायुषा यजमानं व्यर्द्धयेदेकशतञ्जुहोति शतायुर्व्वै पुरुषऽआत्मैकशतऽआयुष्येवात्मन्प्रतितिष्ठति व्युष्ट्यै स्वाहा स्वर्गाय स्वाहेत्युत्तमेऽ आहुती जुहोति रात्रिर्व्वै व्युष्टिरहः स्वर्गोऽहोरात्रेऽ एव तत्प्रीणाति ॥ ६ ॥

तदाहुः । ( स्र्वं ) यदुभे दिवा वा नक्तम्वा जुहुयादहोरात्रे मोहयेद्व्युष्ट्यै स्वाहेत्यनुदितऽ आदित्ये जुहोति स्वर्गाय स्वाहेत्युदितेऽहोरात्रयो-रव्यतिमोहाय ॥ ७ ॥

इति प्रथमप्रपाठके दशमं ब्राह्मणम् ॥ १३ । १ । १० ॥ ( २-१ )

---

मेवैनांस्तत्प्रीणाति । " एकस्मै स्वाहा द्वाभ्यां स्वाहा शताय स्वाहैकशताय स्वाहा "-( वा. सं. २२ । २४ ) इत्यनुपूर्वं जुहोति । अनुपूर्वमेवैनांस्तत्प्रीणाति । एकोत्तरा जुहोति । एकवृद्वै स्वर्गो लोकः । एकधैवैनं स्वर्गं लोकं गमयति । पराचीर्जुहोति । पराङ् इव वै स्वर्गो लोकः । स्वर्गस्य लोकस्याभिजित्यै ॥ ५ ॥

ईश्वरो वा एष पराङ् प्रदघोः । यः पराचीराहुतीर्जुहोति । नैकशतमत्येति । यदेकशतमतीयात् । आयुषा यजमानं व्यर्द्धयेत् । एकशतं जुहोति । शतायुर्वै पुरुषः । आत्मैकशतः । आयुष्येवात्मन्प्रतितिष्ठति । " व्युष्ट्यै स्वाहा स्वर्गाय स्वाहा "-( वा. सं. २२ । २४ ) इत्युत्तमे आहुती जुहोति । रात्रिर्वै व्युष्टि । अहः स्वर्गः । अहोरात्रे एव तत्प्रीणाति ॥ ६ ॥

तदाहुः-यदुभे दिवा वा नक्तं वा जुहुयात् । अहोरात्रे मोहयेत् । व्युष्ट्यै स्वाहेत्यनुदित आदित्ये जुहोति । स्वर्गाय स्वाहेत्युदिते । अहोरात्रयोरव्यतिमोहाय ॥ ७ ॥

---

आहुतीर्जुहोतीति विधिः । पूर्वपूर्वमनूत्तमं इत्येतस्मिन्नर्थे अनुपूर्वमित्यव्ययीभावः । एषोऽपि विधिग्भावः । ततश्च "त्रिभ्यः स्वाहा, चतुर्भ्यः स्वाहा, पञ्चभ्यः स्वाहा" इत्यादि तावज्जुहुयात् । यावच्छताय स्वाहैकशताय स्वाहेति । पराची इत्ना । सर्वां रात्रिं जुहोति । द्विशताय च तु शताय स्वाहेत्यादिका इति द्वेष. कल्प ॥ १-५ ॥

ईश्वरो वा पराङ् प्रदघो । य. पराचीराहुतीर्जुहोति । नैकशतमतिक्रामतीति स्थितिकल्पः ॥ ६ ॥ ७ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे

द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ॥ ( १३ । २ । १ ) ॥

---

१-" त्रिभ्य स्वाहा " इत्यारभ्य-" नवनवतिभ्य स्वाहा " इत्यन्त इत्यध्याय उपमद्गतस्वाध्याय कश्चिच्च ग्रामस्य ध्याय इत्युच्यते । स च जपपारायणहवनादिकर्मस्वनुमेयः ॥

राजा वाऽ एष यज्ञानां यदश्वमेधः । ( घो ) यजमानो वाऽअश्वमेधो यजमानो यज्ञो यदश्वे पशून्नियुनक्ति यज्ञऽएव तद्यज्ञमारभते ॥ १ ॥

( तेऽश्वं ) अश्वन्तूपरङ्गोमृगमिति । तान्मध्यमे यूपऽ आलभते सेनामुखमेवास्यैतेन सᳪं श्यति तस्माद्राज्ञः सेनामुखम्भीष्मम्भावुकम् ॥ २ ॥

( कृष्ण ) कृष्णग्रीवमाग्नेयᳪं रराटे पुरस्तात् । ( त्पू ) पूर्वाग्निमेव तं कुरुते तस्माद्राज्ञः पूर्वाग्निर्भावुकः ॥ ३ ॥

सारस्वतीम्मेषीमधस्ताद्धन्वोः । स्त्रीरेव तदनुगाः कुरुते तस्मात्स्त्रियः पुᳪं सोऽनुवर्त्मानो भावुकाः ॥ ४ ॥

राजा वा एष यज्ञानां यदश्वमेधः । यजमानो वा अश्वमेधः । यजमानो यज्ञः । यदश्वे पशून्नियुनक्ति । यज्ञ एव तद्यज्ञमारभते ॥ १ ॥

अश्वं तूपरं गोमृगमिति । तान्मध्यमे यूप आलभते । सेनामुखमेवास्यैतेन संश्यति । तस्माद्राज्ञः सेनामुखं भीष्मं भावुकम् ॥ २ ॥

कृष्णग्रीवमाग्नेयं रराटे पुरस्तात् । पूर्वाग्निमेव तं कुरुते । तस्माद्राज्ञः पूर्वाग्निर्भावुकः ॥ ३ ॥

सारस्वतीं मेषीमधस्ताद्धन्वोः । स्त्रीरेव तदनुगाः कुरुते । तस्मात् स्त्रियः पुंसोऽनुवर्त्मानो भावुकाः ॥ ४ ॥

(ऽ) आश्विनावधोरामौ बाह्वोः । (बां) बाह्वोरेव बलन्धत्ते तस्माद्राजा बाहुबली भावुकः ॥ ५ ॥

सौमापौष्णꣳ श्याम नाभ्याम् । (म्प्र) प्रतिष्ठामेव ताङ्कुरुतऽइयं वै पूषाऽस्यामेव प्रतितिष्ठति ॥ ६ ॥

सौर्य्ययामौ श्वेतश्च कृष्णश्च पार्श्वयोः । कवचेऽएव ते कुरुते तस्माद्राजा सन्नद्धो वीर्य्यङ्करोति ॥ ७ ॥

त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः । (रू) ऊर्व्वोरेव बलन्धत्ते तस्माद्राजोरुबली भावुकः ॥ ८ ॥

(को) वायव्यꣳ श्वेतम्पुच्छे । (च्छऽउ) उत्सेधमेव तङ्कुरुते तस्मादुत्सेधम्प्रजा भयेऽभिसꣳश्रयन्तीन्द्राय स्वपस्याय वेहतं यज्ञस्य सेन्द्रतायै वैष्णवो वामनो यज्ञो वै विष्णुर्यज्ञऽ एवान्ततः प्रतितिष्ठति ॥ ९ ॥

---

आश्विनावधोरामौ बाह्वोः । बाह्वोरेव बलं धत्ते । तस्माद् राजा बाहुबली भावुकः ॥ ५ ॥

सौमापौष्ण श्यामं नाभ्याम् । प्रतिष्ठामेव तां कुरुते । इयं वै पूषा । अस्यामेव प्रतितिष्ठति ॥६॥

सौर्ययामौ श्वेतं च कृष्णं च पार्श्वयोः । कवचे एव ते कुरुते । तस्माद्राजा सन्नद्धो वीर्यं करोति ॥ ७ ॥

त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः । ऊर्वोरेव बलं धत्ते । तस्माद्राजोरुबली भावुकः ॥ ८ ॥

वायव्यं श्वेतं पुच्छे । उत्सेधमेव तं कुरुते । तस्मादुत्सेधं प्रजा भयेऽभिसंश्रयन्ति । इन्द्राय स्वपस्याय वेहतम् । यज्ञस्य सेन्द्रतायै । वैष्णवो वामनः । यज्ञो वै विष्णुः । यज्ञ एवान्ततः प्रतितिष्ठति ॥ ९ ॥

---

तथैव अनुगा अनुगामिनी पुंस कुरुते । तस्मात् स्त्रियः पुरुषस्यानुवर्तमाना साधु भवति । अनुवर्मैवेन कृतानुकारता । अनुकारकारिणीति आनुकूल्य लक्ष्यते ॥ ४ ॥

'बाहुबली' बाहुबलमस्यास्तीति बाहुबली ॥ ५–८ ॥

*उत्सेधमुच्छ्रायं पर्वतादिकं स्थलं प्रासादं वा तत्कुरुते । वायुर्हि स्कन्धस्य उच्छ्रित इत्यभिप्राय । तस्मादुत्सेधं* स्थलं प्रासादं वा पर्वतं सर्वोद भये सति प्रजा अभिसंश्रयन्ति । स हि राजसबधो राजन्यात्यर्तीति मन्यमाने । वेहत गर्भघातिनम् ॥ ९ ॥

ते वाऽ एते । पञ्चदश पर्य्यङ्ग्याः पशवो भवन्ति पञ्चदशो वै वज्रो वीर्य्यं वज्रो वज्रेणैवैतद्वीर्य्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ १० ॥

पञ्चदश पञ्चदशोऽ एवेतरेषु । पञ्चदशो वै वज्रो वीर्य्यं वज्रो वज्रेणैवैतद्वीर्य्येण यजमानोऽभितः पाप्मानमपहते ॥ ११ ॥

तदाहुः । (१) अपाहैवैतैः पाप्मानꣳ हताऽइत्यकृत्स्नञ्च त्वै प्रजापतिꣳ सꣳस्करोति न चेदꣳ सर्व्वमवरुन्द्धे ॥ १२ ॥

सप्तदशैव पशून्मध्यमे यूपऽआलभेत । सप्तदशो वै प्रजापतिः प्रजापतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै षोडश षोडशेतरेषु षोडशकलं वाऽइदꣳ सर्व्वन्तदिदꣳ सर्व्वमवरुन्द्धे ॥ १३ ॥

---

ते वा एते पंचदश पर्यंग्याः पशवो भवन्ति । पंचदशो वै वज्रः । वीर्यं वज्रः । वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ १० ॥

पंचदश पंचदश उ एवेतरेषु । पंचदशो वै वज्रः । वीर्यं वज्रः । वज्रेणैवैतद्वीर्येण यजमानोऽभितः पाप्मानमपहते ॥ ११ ॥

तदाहुः । अपाहैवैतैः पाप्मानं हता इति । अकृत्स्नं च त्वै प्रजापतिं संस्करोति । न चेदं सर्वमवरुन्धे ॥ १२ ॥

सप्तदशैव पशून्मध्यमे यूप आलभेत । सप्तदशो वै प्रजापतिः । प्रजापतिरश्वमेधः । अश्वमेधस्यैवाप्त्यै । षोडश षोडशेतरेषु । षोडशकलं वा इदं सर्वम् । तदिदं सर्वमवरुन्धे ॥ १३ ॥

---

ते वा एते पर्यंग्या । राज्ञः पर्यंगानि सेनाङ्गानीति यूपेषु सर्वेषु पञ्चदशानु एव नियुज्यन्त इत्यर्थः । अथो दक्षिणे नियुज्यते इत्यर्थः । ( कृष्णग्रीवादयोऽश्वस्य इत्येषु तदा पर्यंग्या एव हि ते च विंशदश्वान्तर-गोमृगैर्भवन्ति १ ) । यदि पुनरश्वस्य पर्यंगानि ललाटादीनि तत्र भवाः पर्यंग्या इति स्यात् । तत्र कृष्णग्रीवादयो द्वादशैव पर्यंग्याः स्युः । पञ्चदशैव पशव इतरेषु नियुज्यन्ते नियुक्ता भवन्ति । तेन [illegible] दुरितमपहन्तीत्यपहन्तेरेव केवलमेते पञ्चदशाभिः पाप्मानं हता इतिकरणं [illegible] इति वाक्यमभाष्ययो द्रष्टव्यं । अकृत्स्नं तु प्रजापतिं संस्करोति । न चेदं सर्वमवरुन्ध इति दूषणम् । कथं तर्हि कुर्यात् ? इत्यत आह ॥ १०–१२ ॥

सप्तदशैवेत्यादि । पञ्चदश पर्यंग्या । द्वौ चाग्नेयावैकादशिनौ । एते सप्तदश मध्यमे । इतरेषु पञ्चदश पञ्चदश रोहितादयः । एकैकश्चैकादशिनः । एवं षोडश षोडश भवन्ति । इत्येवं कात्यायनो मेने । एतदेवाग्नी-षोमीयेत्याह । षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि । अश्वमेधस्य यज्ञस्य न्यूनानि पशुभिस्त्रिभिरिति । एवं वर्तमाने द्वादश पशवोऽतिरिच्येरन् । अथादयो [illegible] । पञ्चदशका [illegible] । तत्राथ

---

१–कारण इत्यर्थः । तत्र पञ्चदशसंख्या पञ्चदशका । तदुक्तम् कात्यायनेन ११–४–१९ । इत्यर्थः । [illegible] [illegible] । इत्यर्थः ।

तान्कथमाप्रीणीयादित्याहुः । समिद्धोऽअञ्जन्कृदरम्मतीनामिति वार्हदुक्थीभिराप्रीणीयाद्बृहदुक्थो ह वै वामदेव्योऽश्वो वा सामुद्रिरश्वस्याप्रीर्ददर्श ताऽएवास्ताभिरेवैनमेतदाप्रीणीमऽइति वदन्तो न तथा कुर्य्याज्जामदग्नीभिरेवाप्रीणीयात्प्रजापतिर्वै जमदग्निः सोऽश्वमेधः स्वयैवैनन्देवतया समर्द्धयति तस्माज्जामदग्नीभिरेवाप्रीणीयात् ॥१४॥

(त) तद्धैके । (क१९) एतेषाम्पर्य्यङ्ग्याणां नाना याज्यापुरोऽनुवाक्याः कुर्वन्ति विन्दामऽएतेषामावित्येतरेषान्न कुर्म्मऽइति न तथा कुर्य्यात्क्षत्रम्वाऽअश्वो विडितरे पशवः प्रतिप्रतिनीर्थं ह वै प्रत्युद्यामिनीं क्षत्राय विशङ्कुर्वन्त्यथोऽआयुषा यजमानं व्यर्द्धयन्ति ये तथा कुर्वन्ति तस्मात्प्राजापत्यऽएवाश्वो देवदेवत्या ऽइतरे क्षत्रायैव तद्विशङ्कृतानुकरामनुवर्त्मानङ्करोत्यथोऽआयुषैव यजमानथं समर्द्धयति ॥ १५ ॥

---

तान्कथमाप्रीणीयादित्याहुः-" समिद्धो अंजन्कृदरं मतीनाम् "-( वा. सं. २९ । १ ) इति वार्हदुक्थीभिराप्रीणीयात् । बृहदुक्थो ह वै वामदेव्योऽश्वो वा सामुद्रिरश्वस्याप्रीर्ददर्श । ता एताः । ताभिरेवैनमेतदाप्रीणीमः, इति वदन्तः । न तथा कुर्यात् । जामदग्नीभिरेवाप्रीणीयात् । प्रजापतिर्वै जमदग्निः । सोऽश्वमेधः । स्वयैवैनं देवतया समर्द्धयति । तस्माज्जामदग्नीभिरेवाप्रीणीयात् ॥ १४ ॥

तद्धैके । एतेषां पर्यङ्ग्याणां नाना याज्यापुरोऽनुवाक्याः कुर्वंति । विन्दाम एतेषामविति ( ? )। आ (?) इतरेषा न कुर्म इति । न तथा कुर्यात् । क्षत्रं वा अश्वः । विडितरे पशवः । प्रतिप्रतिनीं ह वै प्रत्युद्यामिनीं क्षत्राय विशं कुर्वंति । अथो आयुषा यजमानं व्यर्द्धयन्ति । ये तथा कुर्वंति । तस्मात्प्राजापत्य एवाश्वः । देवदेवत्या इतरे । क्षत्रायैव तद्विशं कृतानुकरामनुवर्त्मानं करोति । अथो आयुषैव यजमानं समर्द्धयति ॥ १५ ॥

---

त्रिका । ततश्च एवं चत्वारस्त्रिरा । तेषां यूपी नोक्त स्यात् । मध्यमे च यूपे साक्षात् सप्तदशैवालम्भयेरन् । तत्र सप्तदशैव पशून्मध्यमे यूप आलभेतेति गौणो मध्यमस्याधिकरणभावो द्वादशसु स्यात् । तस्मादेवमवगन्तव्यम् । अथ अश्वादयो द्वादश रोहितादयो द्वौ चाग्नेयौ इत्थं सप्तदश मध्यमे यूपे । षोडश षोडशेति तु यथोक्तमेवेति ॥ १३ ॥

जामदग्नीभि । जामदग्न्य " समिद्धो अद्य मनुषो दुरोणे " इत्येता ( वा. स. २९ । २५-३६ ) ॥ १४ ॥

तद्धैके । एतेषामश्वादीनां पर्वे नाना पृथक् पृथक् याज्यापुरोऽनुवाक्या कुर्वंति । भिन्नदेवत्यानामिति द्रष्टव्यम् । यं तु समानदेवा अन्यूपरम्पेद्, तेषां तन्त्रेणैव प्रदानम् । याज्यापुरोऽनुवाक्याभेदद्वारेण च प्रदानभेद एवायमुपन्यस्तो द्रष्टव्य । एष एव प्रदानभेदो वपानामप्युपन्यस्त । पुरोडाशानामपि यागानामपीति वाच्यमविशेषात् । विदाम लभामहे " विद्ल कामे "-(धा. पा तु. प. १९१)-एषामेतेषां प्राजापत्या-

---

१-अत्र मूलेऽन्यथा कल्पमिति पठ्यते । पर त्वादर्शपुस्तकेषु सर्वेष्वयमेव पाठ उपलभ्यते । अत स एवात्र स्थापितः । इति ध्येयम् ।

हिरण्मयोऽश्वस्य शासो भवति । लोहमयाः पर्य्यङ्ग्याणामायसाऽ इत-रेषाञ्ज्योतिर्व्वै हिरण्यꣳ राष्ट्रमश्वमेधो ज्योतिरेव तद्राष्ट्रे दधात्यथो हिरण्यज्योतिषैव यजमानः स्वर्गं लोकमेत्यथोऽ अनूकाशमेव तत्कुरुते स्वर्गस्य लोकस्य समष्ट्यै ॥ १६ ॥

( एचाऽत्र ) अथो क्षत्रम्वाऽ अश्वः । क्षत्रस्यैतद्रूपं यद्धिरण्यं क्षत्रमेव तत्क्षत्रेण समर्द्धयति ॥ १७ ॥

---

हिरण्मयोऽश्वस्य शासो भवति । लोहमयाः पर्यङ्ग्याणाम् । आयसा इतरेषाम् । ज्योतिर्वै हिरण्यम् । राष्ट्रमश्वमेधः । ज्योतिरेव तद्राष्ट्रे दधाति । अथो हिरण्यज्योतिषैव यजमानः स्वर्गं लोकमेति । अथो अनूकाशमेव तं कुरुते । स्वर्गस्य लोकस्य समष्ट्यै ॥ १६ ॥

अथो क्षत्रं वा अश्वः । क्षत्रस्यैतद् रूपम् । यद्धिरण्यम् । क्षत्रमेव तत्क्षत्रेण समर्द्धयति ॥ १७ ॥

---

दिका याज्यानुवाक्याः । ता किमिति न पृथक्कुर्म । इतरेषां तु रोहितादीनां न विद्म । अथवा गायत्र्यादयो देवता । तदेवत्याश्च दुर्लभा लक्षणोपेता याज्यानुवाक्या इत्यभिप्राय । क्षत्रं वै अश्व, महत्वात् बहूपकरणत्वात् एकत्वाद्वा । विड्इतरे पशव, अल्पवान् अल्पोपकरणत्वाच्च । ' प्रतिप्रतिनी ' प्रतिप्रति वर्तन इति प्रतिप्रति प्रतिस्पर्द्धा, सा अस्यां विद्यत इति प्रतिप्रतिनी विट् । " व्रीह्यादिभ्यश्च "–( पा. सू ५–२–११६ ) इति इनिर्मत्वर्थे द्रष्टव्य । प्रयुद्धामिनी प्रयुद्धमनशीला । क्षत्रायेति प्राप्ते क्षत्रायेति षष्ठ्यर्थे छन्दसि चतुर्थी ( पा. सू. २।३।६२ वा. ) यदेव न कुर्यात् । कथं तर्हि कुर्यादित्यत आह–तस्मात्प्राजापत्य एवाश्व । कर्तव्य इति शेष । दैवदेवत्या इतरे । कर्तव्या इति शेष । एतदुक्तं भवति–प्राजापत्यस्याश्वादेः पृथक् याज्यानुवाक्ये कर्तव्ये । इतरेषां सर्वेषां साधारण्यौ देवदेवत्ये द्वे एव कार्ये । तत्र च भिन्नदेवत्या अपि ते सहैव प्रदेया इति । अश्वग्रहणं चादोषाणां प्राजापत्यानां दर्शनार्थम् । ततश्च सर्वे प्राजापत्या अश्वेनैव सह प्रदेया । तथा च वक्ष्यति–" सकृदेव प्राजापत्यान् प्रचरेयु सकृद्देवदेवत्यान् "–( श. प. १३ । ५ । ३ । ६ । ) इति । तत्र च वशाग्रहणं मुख्यत्वादविशामपि प्रदर्शनार्थम् । एवं दर्शितम् । न तु विशेषमेतद्वचनं वक्ष्यति ॥ १५ ॥

हिरण्मय । हिरण्यपरिष्कृत शासम् । लोहमया लोहताम्रम् । ताम्रपरिष्कृता स्वस्व शासा । कुत एतत् । तदेव विशसनसामर्थ्यात् । यदि तु ताम्रहिरण्यगर्भशासा एव स्यु । ततो विशसनमेव तैर्न शक्यते कर्तुम् । पर्यङ्ग्याश्चात्राश्वव्यतिरिक्ता द्रष्टव्या, अश्वस्य पृथग्वचनात् । आयसा अयस एव अयोविकारास्त एव । न तत्परिष्कृता । इतरेषां रोहितादीनां ज्योतिर्वै हिरण्यं, ज्योतिरिव । दीप्ति शोभा राष्ट्रं स्वानुकारेण ज्योति । तेन युक्तो यजमान. स्वर्गं लोकं गच्छति । अपि च अनूकाशमात्मनो तत् कुरुते स्वर्गस्य प्रकाशे । पदार्थ पाठ्यमध्यमे यूपे ॥ १६ ॥

अथो क्षत्रं वै अश्व, अभ्यर्हितत्वात् । हिरण्मयमपि अभ्यर्हितत्वादेव क्षत्रस्य रूपम् ॥ १७ ॥

( त्यु ) अथ यल्लोहमयाः पुर्य्यङ्ग्याणाम् । यथा वै राज्ञोऽराजानो राजकृतः सूतग्रामण्य ऽएवम्वाऽएतेऽश्वस्य यत्पर्य्यङ्ग्याऽ एवमु वाऽएतद्धिरण्यस्य यल्लोहं स्वेनैवैनांस्तद्रूपेण समर्द्धयति ॥ १८ ॥

( त्यु ) अथ यदायसाऽ इतरेषाम् । ( म्बि ) म्विड्वाऽइतरे पशवो विशऽ एतद्रूपं यदयो विशमेव तद्विशा समर्द्धयति वैतसऽइटसूनऽ उत्तरतोऽश्वस्यावद्यन्त्यानुष्टुभो वाऽअश्वऽआनुष्टुभेषा दिक्स्वायामेवैनन्तद्दिशि दधात्यथ यद्वैतसऽ इटसूनेऽप्सुयोनिर्व्वाऽअश्वोऽप्सुजा वेतसः स्वयैवैनं योन्या समर्द्धयति ॥ १९ ॥

इति प्रथमप्रपाठके एकादशं ब्राह्मणम् ॥ १३।१।११ ॥ ( २-२ ) ॥

देवा वाऽअश्वमेधे पवमानम् । ( ध्रूँ ) स्वर्ग्गं लोकन्न प्राजानंस्तमश्वः

---

अथ यल्लोहमयाः पर्य्यङ्ग्याणाम् । यथा वै राज्ञोऽराजानो राजकृतः सूतग्रामण्यः । एवं वा एतेऽश्वस्य यत्पर्य्यङ्ग्याः । एवमु वा एतद्धिरण्यस्य यल्लोहम् । स्वेनैवैनांस्तद्रूपेण समर्द्धयति ॥ १८ ॥

अथो यदायसा इतरेषाम् । विड्वा इतरे पशवः । विश एतद् रूपं यदयः । विशमेव तद्विशा समर्द्धयति । वैतस इटसूने । उत्तरतोऽश्वस्यावद्यन्ति । आनुष्टुभो वा अश्वः । आनुष्टुभेषा दिक् । स्वायामेवैनं तद्दिशि दधाति । अथ यद्वैतस इटसूने । अप्सुयोनिर्वा अश्वः । अप्सुजा वेतसः । स्वयैवैनं योन्या समर्द्धयति ॥ १९ ॥

देवा वा अश्वमेधे पवमानं स्वर्गं लोकं न प्राजानन् । तमश्वः प्राजानात् । यदश्वमेधेऽश्वेन पव-

---

अथ यत् । यथा वै राज्ञ । अराजान राजकृत मन्त्रिपुरोहितप्रभृता अराजान । सूतग्रामण्यश्चोपकरणभूता य तुरगादय पर्य्यङ्ग्या । एवमेवैतद्धिरण्यस्योपकरणभूत यल्लोहम् । तत्र हि तत्र पतितायते तत्र च रक्ष्यते॥ १८॥

विड्वै इतर पशव , बहुत्वात् । विश एतद्रूप यदय । तद्वत्सबकमकरणत्वाच्च । वैतसे वेतसविकार । ' इटसून ' इट कट । इटवासौ सून च प्रसूयते । तस्मिन्नेव शाखामय इत्य । उत्तरत उत्तरपार्श्वे आहवनीयस्य अश्वस्य यान्यवदानानि तान्यवद्यन्ति । ' आनुष्टुभ ' अनुष्टुभा सम्मितास्तस्य हि चत्वार खुरा भवति । अनुष्टुबपि चतुष्पदा । 'आनुष्टुभा' अनुष्टुभा सम्मिता एषा उत्तरा दिक् । एषा हि प्राच्या आरभ्य चतुर्थी भवति । अनुष्टुबपि चतुष्पदा । आनुष्टुभीति प्राप्त छान्दस । य एव ' अप्सुयोनि ' आपो योनिरस्य स अप्सुयोनि । अप्स्योनारीति प्राप्ते प्रथमाया सप्तमी । तस्या छान्दस अप्सु जायत इत्यत्र लुकि प्राप्त "तत्पुरुषे कृति बहुलम् " ( पा सू ६ । ३ । १४ ) इति सप्तम्या अलुक् ॥ १९ ॥

इति श्रीमदाचार्य हरिस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे द्वितीयाऽध्याये द्वितीय ब्राह्मणम् ॥ ( १३ । २ । २ ) ॥

' देवा वा अश्वमेधे ' अश्वमेधे मध्यमेऽहनीति शेष. । कुत एतत् अधिकारात् । तथा च उत्तराश्वमेधे

प्राजानाद्यदश्वमेधेऽश्वेन पवमानाय सर्पन्ति स्वर्गस्य लोकस्य प्रज्ञात्यै पुच्छमन्वारभन्ते स्वर्गस्यैव लोकस्य समष्ट्यै न वै मनुष्यः स्वर्गं लोकमञ्जसा वेदाश्वो वै स्वर्गं लोकमञ्जसा वेद ॥ १ ॥

यदुद्गातोद्गायेत् । (यः) यथाऽक्षेत्रज्ञोऽन्येन पथा नयेत्तादृक्तद्य यदु-द्गातारमवरुध्याश्वमुद्गीथाय वृणीते यथा क्षेत्रज्ञोऽञ्जसा नयेदेवमेवैतद्य-जमानमश्वः स्वर्गं लोकमञ्जसा नयति हिङ्करोति सामैव तद्धिङ्करोत्यु-द्गीथएव स वडवाऽउपरुन्धन्ति सꣳशिञ्जते यथोपगातारऽउपगा-यन्ति तादृक्तद्धिरण्यन्दक्षिणा सुवर्णꣳ शतमानन्तस्योक्तं ब्राह्मणम् ॥ २॥

इति प्रथमप्रपाठके द्वादशं ब्राह्मणम् ॥ १३।१।१२ ॥ ( २-३ ॥ )

---

मानाय सर्पन्ति । स्वर्गस्य लोकस्य प्रज्ञात्यै । पुच्छमन्वारभन्ते । स्वर्गस्यैव लोकस्य समष्ट्यै । न वै मनुष्यः स्वर्गं लोकमञ्जसा वेद । अश्वो वै स्वर्गं लोकमञ्जसा वेद ॥ १ ॥

यदुद्गातोद्गायेत् । यथाऽक्षेत्रज्ञोऽन्येन पथा नयेत् । तादृक्तत् । अथ यदुद्गातारमपरुध्याश्वमुद्गीथाय वृणीते । यथा क्षेत्रज्ञोऽञ्जसा नयेत् । एवमेवैतत् यजमानमश्वः स्वर्गं लोकमञ्जसा नयति । हिं करोति । सामैव तत् । हिं करोति । उद्गीथ एव सः वडवा उपरुन्धन्ति संशिञ्जते । यथोपगातार उपगायन्ति । तादृक्तत् । हिरण्यं दक्षिणा । सुवर्णं शतमानम् । तस्योक्तं ब्राह्मणम् ॥ २ ॥

---

"एकविंश मध्यममहर्भवति" इत्येवमेव प्रकृत्य वक्ष्यति यत् "अथ निष्कोदानयन्ति" इति (श. प १३। ५।१। ९-१६) पवमान प्रात सवनिक बहिष्पवमानम् । कुत एतत् । स हि नौर्ह वा एषोऽस्य ज्योति सस्तुत इह च स्वर्गं लोकमित्याह स एष जीवयध्ये वर्तते । उत्तरौ तु पवमानौ सद्मन्यध्ये वर्तेते । इदर्थं कथमश्वेन सर्पेत् । य स्वर्गं लोक स्वर्गलोकसम्प्रुत प्रज्ञातवत । बहिष्पवमान च स्वर्गं लोकमश्व प्रज्ञातवान् । यदश्वमेधे मध्यमेऽहनि अश्वेनोद्गातृस्थानीयेन सह बहिष्पवमानायाश्वाय यजमानो ब्रह्माऽऽवसथात्सर्पति, तत्स्वर्गस्य प्रज्ञात्यै पुच्छमन्वारभन्ते स्वर्गस्यैव । अश्वो वै स्वर्गं लोक अञ्जसा ऋजुना मार्गेण वेद । स हि प्रजापतिरित्यभिप्राय ॥१॥

यद्यदि उद्गाता स्तोतृनिहर्तृभ्यां सह उद्गायेत् स्तोत्र कुर्वत् । ततो यथा अक्षेत्रज्ञ अन्येन पथा गन्तव्ये नयेत् । तद्वदेवान्येन गच्छति स्वदर्शनप्राताया तादृक्तत् । अथ यत् उद्गातार समाप-मवरुध्यासनीय अश्वमुद्गीथाय स्तोत्राय वृणते । तद्यथा क्षेत्रज्ञ देशज्ञ अञ्जसा नयेत् । एव यजमानमश्वः स्वर्गं पवमानमञ्जसा नयति । 'हिं करोति' हेषितशब्द करोति । सोऽश्व बहिष्पवमानदेश गत्वा यत् हिं करोति । तत्साम हिं करोति । साम एव तत् हिंकार करोतीत्यर्थ । उद्गीथ एव स इति । न

---

१-वडवेमपमनाम संलग्नपमजम्न । का. श्रौ सू. २० । ११८ ।

प्रजापतिरकामयत । ( तो ) उभौ लोकावभिजयेयन्देवलोकम्मनुष्यलोकञ्चेति स एतान्पशूनपश्यद्ग्राम्यांश्चारण्यांश्च तानालभत तैरिमौ लोकाववारुन्ध ग्राम्यैरेव पशुभिरिमं लोकमवारुन्धारण्यैरमुमयम्वै लोको मनुष्यलोकोऽथासौ देवलोको यद्ग्राम्यान्पशूनालभतऽ इममेव तैर्लोकं यजमानोऽवरुन्धे यदारण्यानमुन्तैः ॥ १ ॥

स यद्ग्राम्यैः सꣳस्थापयेत् । ( न्स ) समध्वानः क्रामेयुः समन्तिकं ग्रामयोर्ग्रामान्तौ स्यातां नऽर्क्षीकाः पुरुषव्याघ्राः परिमोषिणऽ आव्याधिन्यस्तस्कराऽअरण्येष्वाजायेरन्यदारण्यैर्व्यध्वानः क्रामेयुर्विदूरङ्ग्रामयोर्ग्रामान्तौ स्यातामृक्षीकाः पुरुषव्याघ्राः परिमोषिणऽ आव्याधिन्यस्तस्कराऽअरण्येष्वाजायेरन् ॥ २ ॥

---

प्रजापतिरकामयत । उभौ लोकावभिजयेयम् । देवलोकं मनुष्यलोकं चेति । स एतान्पशूनपश्यत् । ग्राम्यांश्चारण्यांश्च । तानालभत । तैरिमौ लोकाववारुन्ध । ग्राम्यैरेव पशुभिरिमं लोकमवारुन्ध, आरण्यैरमुम् । अयं वै लोको मनुष्यलोकः । अथासौ देवलोकः । यद्ग्राम्यान्पशूना लभते । इममेव तैर्लोकं यजमानोऽवरुन्धे । यदारण्यान् । अमुं तैः ॥ १ ॥

स यद् ग्राम्यैः संस्थापयेत् । समध्वानः क्रामेयुः । समन्तिकं ग्रामयोर्ग्रामान्तौ स्याताम् । नर्क्षीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिन्यस्तस्करा अरण्येष्वाजायेरन् । यदारण्यैः व्यध्वानः क्रामेयुर्विदूरं ग्रामयोर्ग्रामान्तौ स्याताम् । ऋक्षीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिन्यस्तस्करा अरण्येष्वाजायेरन् ॥ २ ॥

---

हिंकारमात्रं तत् । किं तर्हि सकलमेव तत्स्तोत्रं द्रष्टव्यमित्यर्थः । तदेवा उप अस्याश्वस्य समीपे ऽधसि । यजमानपुरुषा अश्वाश्च तेन मर्शिअते । अन्यत्र स्तनति । तथा कार्यम्, यथा ता संविज्यते । अथ कस्मात् उद्गीथभक्तेरेवाय विकारो न भवति । नैतदेवम् । उपक्रमे हि पवमानस्तोत्रमेव देवा न प्राजानस्तमश्वं प्राजानादित्याह—ततश्च स्तोत्रविकार एवाय लक्षणया गम्यते । तेन च स्वभक्तिमात्रविकार । अन्ये त्वाहु अश्वस्य पुच्छमन्वारभ्य बहिष्पवमानाय सर्पन्ति । तद्वा दर्शयति । अभिरस शिजाना इत्येतावदनुविधीयते तत्रोद्गीथोपगीतवचनं भक्तिमात्रमिति तेषामुद्गातारं स्तुवीत एवेति ॥ २ ॥

इति श्रीमदाचार्यहरिस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे द्वितीयेऽध्याये तृतीय ब्राह्मणम् ॥ १३ । २ । ३ ॥

प्रजापतिरिति । आरण्यान्पशून्पर्यग्निकृतानेवोत्सृजति ग्राम्यैः संस्थापयतीत्येतावदत्र विधीयते । पश्चालम्भस्तु सत्रयागादेः प्राप्तोऽनूद्यते । स यदि ग्राम्यैः पशुभि अश्वादिभिर्यज्ञ ब्राह्मणतर्पणान्त संस्थापयेत् । आरण्यान्पर्यग्निकृतानुत्सृज्य तत पूर्वदेशपश्चाद्देश उत्तरापथदक्षिणापथ इत्येवमादय परस्पर सन्नामयेयु । उपरेयु-

---

१—तद्वा दर्शयन्नभिरसति तत्स्याश्वम् । का श्रौ सू २० । ११६ । २—पवमान दशाति । का श्रौ सू २० । १२१ ।

( रंस्तु ) तुदाहुः । ( ३ ) अपशुर्व्वाऽएष युदारण्यो नैतुस्य होतुव्यं युज्जुहुयात्क्षिप्रं युजमानमुरण्यम्मृत्तं हुरेयुररण्यभाग्गा ह्यारण्याः पशुवो यन्न जुहुयाद्यज्ञवेशुसुं स्यादिति पुर्य्यग्निकृतानेवोत्सृजन्ति तुन्नैव हुतन्नाहुतन्न युजमानमुरण्यम्मृत्तं हरन्ति न यज्ञवेशसं भवति ॥ ३ ॥

ग्राम्यैः सुंस्थापयति । वि पितापुत्रावुवस्यतः समुध्वानः क्रामन्ति सुमंतिकुद्ग्रामयोर्ग्रामान्तौ भवतो नर्क्षीकाः पुरुषव्याघ्राः परिमोषिणऽआव्याधिन्यस्तुस्कराऽ अरण्येष्वाजायन्ते ॥ ४ ॥

इति प्रथमप्रपाठके त्रयोदशं ब्राह्मणम् ॥ १३।१।१३ ॥ ( २–४ ) ॥

---

तदाहुः–अपशुर्वा एष यदारण्यः । नैतस्य होतव्यम् । यत् जुहुयात् । क्षिप्रं यजमानमरण्यं मृतं हरेयुः । अरण्यभाग्गा ह्यारण्याः पशवः । यन्न जुहुयात् । यज्ञवेशसं स्यात् इति । पर्यग्निकृता-नेवोत्सृजंति । तन्नैव हुतम् । नाहुतम् । न यजमानमरण्यं मृतं हरंति । न यज्ञवेशसं भवति ॥ ३ ॥

ग्राम्यैः संस्थापयति । वि पितापुत्राववस्यतः । समध्वानः क्रामंति । समंतिकं ग्रामयोर्ग्रामांतौ भवतः । नर्क्षीकाः पुरुषव्याघ्राः परिमोषिणः आव्याधिन्यस्तस्करा अरण्येष्वाजायंते ॥ ४ ॥

---

रिष्यर्थं । अथ मिरत्र दोषा लक्ष्यन्ते । क्षमे सति मनुष्याः सर्वान् देशान् सचेरन्निति निप्रायः । क्षेम एव सति नि सर्वत्र विप्रिये च वसति । समन्तिकं समीपे ग्रामयो ग्रामान्तौ सीमान्तौ स्याताम् । क्षेमासु हि सीमासु ग्रामस्य समीप एव ग्रामान्तो भवति । नर्क्षा एव नर्क्षीका । पुरुषाश्च ते व्याघ्राश्च पुरुषव्याघ्राः । म्लेच्छा हि व्याघ्ररूपाः पुरुषा वदन्ति न पुरुषव्याघ्राः । परिमोषिणः चौराः । ' आव्याधिन्यः ' आविध्यया-युधैरित्याव्याधिन्यः चोरसेना । तस्करास्तस्मात् कुर्वन्तीत्यन्ये चौराः । न आचारेरन् क्षेमत्वादात्मन । यत् यदि ग्राम्यैः संस्थापयेत् । तत अध्वानः पूर्वदेशादयो विस्तीर्णेषु विरुद्ध क्रामेयु । स्वदेश एव मनुष्या सचेयुः, न देशान्तरेषु अन्तरान्तरमभिजनत्वात् अक्षेमत्वाच्च । विदूर ग्रामयोर्ग्रामान्तौ स्याताम् । अक्षेमे हि सति प्रविरला ग्रामा भवन्ति । तेषां च सीमान्ता दूरे भवन्ति ॥ १ ॥ २ ॥

कथं पुनरारण्यैरारण्यैर्न संस्थापयेत् यज्ञ इत्यत आह तदाहुरिति । तत्रारण्यैः संस्थापने अयं अपशुर्वा । यान्वा पशवोऽपि सन्तुगुणा एष न आरण्यः । नैतस्यारण्यस्य वह्निग्रामिर्होतव्यम् । यदि जुहुयात् दोषः स्यात् । यदि न जुहुयात्, यज्ञविनाशः स्यात् । अथ हि देवतार्थे संकल्प । सर्वं तत्त्वेन तेनैव तदुक्तमिति । साक्षाद्यजमान-पक्षे यज्ञ हुतम् । पर्यग्निकरणेन तु प्रतिनिधिर्भवतीति । नाहुतम् । यथा मन्त्रनिनादो च त्यागने यज्ञ-विनाशः । वचनाच्च पर्यग्निकरणम् । नैव दोषः गुणवत्त्वमित्यभिप्रायः ॥ ३ ॥

ग्राम्यैः संस्थापयति । पितापुत्रौ वै पृथग्वसतः । क्षेमे हि सति विपृथग्वसतः । अक्षेमे तु सहैवाल्पेकत्र वसत ॥ ४ ॥

इति श्रीमदाचार्यहरिस्वामिविरचिते माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे द्वितीयेऽध्याये चतुर्थं ब्राह्मणम् ॥ १३ । २ । ४ ॥

संवत्सरे पर्य्यवेते दीक्षा । प्राजापत्यमालभ्योत्सीदन्तीष्टयः पुरोहितस्याग्निषु यजेतेत्यु हैकऽआहुः किमु दीक्षितो यजेत द्वादश दीक्षा द्वादशोपसदस्तिस्रः सुत्यास्तास्त्रिणवमभिसम्पद्यते वज्रो वै त्रिणवः क्षत्त्रमश्वः क्षत्रꣳ राजन्यो वज्रेण खलु वै क्षत्रꣳ स्पृतन्तद्वज्रेणैव क्षत्त्रꣳ स्पृणोति ॥ १ ॥

दीक्षणीयायाꣳ सꣳस्थितायाम् ।(उꣳ) सायम्वाचि विसृष्टायां वीणागणगिनऽउपसमेता भवन्ति तानध्वर्युः सम्प्रेष्यति वीणागणगिनऽइत्याह देवैरिमं यजमानꣳ सङ्गायतेति तन्ते तथा सङ्गायन्ति ॥ २ ॥

(न्यु) अहरहर्व्वाचि विसृष्टायाम् । (म) अग्नीषोमीयाणामन्ततः सꣳस्थायाम्परिहृतासु वसतीवरीषु तद्यदेनन्देवैः सङ्गायन्ति देवैरेवैनन्तत्सलोकङ्कुर्व्वन्ति ॥ ३ ॥

---

संवत्सरे पर्यवेते दीक्षा । प्राजापत्यमालभ्य, उत्सीदन्तीष्टयः । पुरोहितस्याग्निषु यजेनेत्यु हैक आहुः । किमु दीक्षितो यजेत । द्वादश दीक्षाः । द्वादशोपसदः । तिस्रः सुत्याः । तास्त्रिणवमभिसंपद्यते । वज्रो वै त्रिणवः । क्षत्रमश्वः । क्षत्रं राजन्यः । वज्रेण खलु वै क्षत्रं स्पृतम् । तद्वज्रेणैव क्षत्रं स्पृणोति ॥ १ ॥

दीक्षणीयायां संस्थितायाम् । सायं वाचि विसृष्टायाम् । वीणागणगिन उपसमेता भवंति । तानध्वर्युः संप्रेष्यति । वीणागणगिन इत्याह–" देवैरिमं यजमानं संगायत "–इति । तं ते तथा संगायंति ॥ २ ॥

अहरहर्वाचि विसृष्टायाम् । अग्नीषोमीयाणामंततः संस्थायाम् । परिहृतासु वसतीवरीषु । तद्यदेनं देवैः संगायंति । देवैरेवैनं तत्सलोकं कुर्वंति ॥ ३ ॥

---

रथं श्रयितुमश्रियत तस्य यः श्लेष्माऽऽसीत्स सार्द्धं समवद्रुत्य मध्यतो नस्तोऽदभिनत्सऽएष वनस्पतिरभवद्रज्जुदालस्तस्मात्स श्लेष्मणः श्लेष्मणो हि समभवत्तेनैवैनन्तद्रूपेण समर्द्धयति तद्यन्तोऽग्निष्ठो भवति मध्यम्वाऽएतद्यूपानां यदग्निष्ठो मध्यमेतदात्मनां यन्नासिके स्वऽएवैनन्तदायतने दधाति ॥ ६ ॥

(त्व) अथ यदापोमयन्तेजऽआसीत् । (घ्रो) यो गन्धः स सार्द्धं समवद्रुत्य चक्षुष्टऽउदभिनत्सऽएष वनस्पतिरभवत्पीतुदारुस्तस्मात्स सुरभिर्गन्धाद्धि समभवत्तस्मादुज्ज्वलनस्तेजसो हि समभवत्तेनैवैनन्तद्रूपेण समर्द्धयति तद्यत्तावभितोऽग्निष्ठम्भवतस्तस्मादिमेऽअभितो नासिकामक्षिणी स्वऽएवैनौ तदायतने दधाति ॥ ७ ॥

(त्व) अथ यत्कुन्तापमासीत् । (घ्रो) यो मज्जा स सार्द्धं समवद्रुत्य श्रोत्रतऽउदभिनत्सऽएष वनस्पतिरभवद्बिल्वस्तस्मात्तस्यान्तरतः सर्वमिव फलमाद्यम्भवति तस्माद्धारिद्रऽइव भवति हारिद्र-

---

श्लेष्माऽऽसीत् । स सार्द्धं समवद्रुत्य मध्यतो नस्त उदभिनत् । स एव वनस्पतिरभवत् रज्जुदालः । तस्मात्स श्लेष्मणः । श्लेष्मणो हि समभवत् । तेनैवैनं तद्रूपेण समर्द्धयति । तद्यत्तोऽग्निष्ठो भवति । मध्यं वा एतद्यूपानां यदग्निष्ठः । मध्यमेतदात्मनाना, यन्नासिके । स्वे एवैनं तदायतने दधाति ॥ ६ ॥

अथ यदापोमयं तेज आसीत् । यो गंधः । स सार्द्धं समवद्रुत्य चक्षुष उदभिनत् । स एव वनस्पतिरभवत् पीतुदारुः । तस्मात्स सुरभिः । गंधाद्धि समभवत् । तस्मादुज्ज्वलनः । तेजसो हि समभवत् । तेनैवैनं तद्रूपेण समर्द्धयति । तद्यत्तावभितोऽग्निष्ठं भवतः । तस्मादिमे अभितो नासिका चक्षुषी । स्वे एवैनौ तदायतने दधाति ॥ ७ ॥

अथ यत् कुंतापमासीत् । यो मज्जा । स सार्द्धं समवद्रुत्य श्रोत्रत उदभिनत् । स एव वनस्पतिरभवत् बिल्वः । तस्मात्तस्यान्तरतः सर्वमिव फलमाद्यं भवति । तस्माद्धारिद्र इव भवति ।

ऽइव हि मज्जा तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे पैतुदारवौ भवतो बाह्ये बैल्वाऽअन्तरे हि चक्षुषी बाह्ये श्रोत्रे स्वऽएवैनास्तदायतने दधाति ॥ ८ ॥

( त्यु ) अस्थिभ्यऽ एवास्य खदिरः समभवत् । ( त्तु ) तस्मात्स दारुणो बहुसारो दारुणमिव ह्यस्थि तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे बैल्वा भवन्ति बाह्ये खादिराऽअन्तरे हि मज्जानो बाह्यान्यस्थीनि स्वऽएवैनांस्तदायतने दधाति ॥ ९ ॥

माꣳसेभ्यऽएवास्य पलाशः समभवत् । ( त्तु ) तस्मात्स बहुरसो लोहितरसो लोहितमिव हि माꣳसन्तेनैवैनं तद्रूपेण समर्द्धयत्यन्तरे खादिरा भवन्ति बाह्ये पालाशाऽअन्तराणि ह्यस्थीनि बाह्यानि माꣳसानि स्वऽएवैनांस्तदायतने दधाति ॥ १० ॥

( त्यु ) अथ यदेकविꣳशतिर्भवन्ति । ( न्त्ये ) एकविꣳशत्यरत्नयऽ एकविꣳशो वाऽ एष यऽएष तपति द्वादश मासाः पञ्चर्त्तवस्त्रयऽइमे लोकाऽअसावादित्यऽएकविꣳशः सोऽश्वमेधः ऽएष प्रजापतिरेवमेतम्प्रजापतिं यज्ञक्रतुꣳ संꣳस्कृत्य तस्मिन्नेकविꣳशतिमग्नीषोमीयान्पशूनालभते तेषाꣳ समानङ्कर्म्मेत्येतत्पूर्व्वैश्चः कर्म्म ॥ ११ ॥

इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ १३।३।२ ॥ ( ४-२ ) ॥

इति चतुर्थोऽध्यायः समाप्तः ॥ १३-४ ॥

कण्डिकासंख्या ॥ ५८ ॥

---

हारिद्र इव हि मज्जा । तेनैवैनं तद्रूपेण समर्द्धयति । अंतरे पैतुदारवौ भवतः । बाह्ये बैल्वा । अंतरे हि चक्षुषी । बाह्ये श्रोत्रे । स्व एवैनास्तदायतने दधाति ॥ ८ ॥

अस्थिभ्य एवास्य खदिरः समभवत् । तस्मात स दारुणो बहुसारः । दारुणमिव ह्यस्थि । तेनैवैनं तद्रूपेण समर्द्धयति । अंतरे बैल्वा भवन्ति । बाह्ये खादिराः । अंतरे हि मज्जानः । बाह्यान्यस्थीनि । स्व एवैनास्तदायतने दधाति ॥ ९ ॥

मांसेभ्य एवास्य पलाशः समभवत् । तस्मात् स बहुरसो लोहितरसः । लोहितमिव हि मांसम् । तेनैवैनं तद्रूपेण समर्द्धयति । अंतरे खादिरा भवन्ति । बाह्ये पालाशाः । अंतराणि ह्यस्थीनि । बाह्यानि मांसानि । स्व एवैनास्तदायतने दधाति ॥ १० ॥

अथ यदेकविंशतिर्भवंति । एकविंशत्यरत्नयः । एकविंशो वा एषः । य एष तपति । द्वादश

---

काह्-द्वा दाश्वा वा एष पशु । अहानवाह्नि द्वादशाय दीक्षा उपसदश्च मासा । सुत्याश्च तिस्र उपसावव

# अथ पञ्चमेऽध्याये प्रथमं ब्राह्मणम् ।

## तृतीयप्रपाठके च तृतीयं ब्राह्मणम् ।



अथ प्रातर्गौतमस्य । चतुरुत्तर स्तोमो भवति तस्य चतसृषु बहिष्पवमानमष्टास्वाशस्वाज्यानि द्वादशसु माध्यन्दिनः पवमानः षोडशसु पृष्ठानि विंशत्यामार्भवः पवमानश्चतुर्विंशत्यामग्निष्टोमसाम ॥ १ ॥

तस्य हैके । ( केऽग्नि ) अग्निष्टोमसाम चतुःसाम कुर्वन्ति नाग्निष्टोमो नोक्थ्यऽ इति वदन्तस्तद्यदि तथा कुर्युः सार्द्धँ स्तोत्रियँ शस्त्वा सार्द्धमनुरूपँ शँसेद्रथन्तरम्पृष्ठँ राथन्तरँ शस्त्रमग्निष्टोमो यज्ञस्तेनेमं लोकमृध्नोति ॥ २ ॥

( त्ये ) एकविँशतिः सवनीयाः पशवः । सर्वेऽआग्नेयास्तेषाँ समानङ्कर्मेत्यु हैकऽ आहुर्द्वे त्वेवैतेऽएकादशिन्यावालभेत यऽएवैकादशिनेषु कामस्तस्य कामस्याप्त्यै ॥ ३ ॥

---

अथ प्रातर्गौतमस्य चतुरुत्तरः । स्तोमो भवति । तस्य चतसृषु बहिष्पवमानम् । अष्टास्वाशस्वाज्यानि । द्वादशसु माध्यन्दिनः पवमानः । षोडशसु पृष्ठानि । विंशत्यामार्भवः पवमानः । चतुर्विंशत्यामग्निष्टोमसाम ॥ १ ॥

तस्य हैकेऽग्निष्टोमसाम चतुःसाम कुर्वंति । नाग्निष्टोमः । नोक्थ्य इति वदंतः । तत् यदि तथा कुर्युः । सार्धं स्तोत्रियं शस्त्वा सार्द्धमनुरूपं शंसेत् रथंतरं पृष्ठम् । राथंतरं शस्त्रम् । अग्निष्टोमो यज्ञः । तेनेमं लोकमृध्नोति ॥ २ ॥

एकविंशतिः सवनीयाः पशवः । सर्वे आग्नेयाः । तेषां समानं कर्म । इति उहैक आहुः । द्वे त्वेव एते एकादशिन्यौ आलभेत । य एवैकादशिनेषु कामः । तस्य कामस्याप्त्यै ॥ ३ ॥

---

अथ प्रातर्गौतमस्य स एष स पूर्वोक्तः । त एव उक्थ्यानुरूपैः सार्द्धं सह एकीभूय एव शंसेत् । तथाहि-त्रीण्यपि आध्वर्यवौद्गात्रहौत्राणि अविरुद्धानि भवन्तीत्यभिप्रायः ॥ १ ॥

रथंतर पृष्ठमाधवनम् । तत्र प्रथमेऽहनि भवति न बृहत् इति नियमवचनम् । राथंतरं च शस्त्रं रथंतरपृष्ठसंबद्धं यादृश निष्केवल्यशस्त्रं तादृशमत्र भवति । अग्निष्टोम. अग्निष्टोमसंस्थोऽयं यज्ञो भवति । न उक्थ्यादिसंस्थः ॥ २ ॥

एकविंशति सवनीया. आग्नेयाः समानकर्माणः अत्र प्रथमे अहनि भवन्तीत्येके आहु । न तु तथा

---

१-अग्निष्टोमः । का. श्रौ. सू. २० । १०-२ ।

संस्थितेऽग्निष्टोमे । परिवृतासु वसतीवरीष्वध्वर्युरन्नहोमाञ्जुहोति तेषामुक्तम्ब्राह्मणम्प्राणाय स्वाहाऽपानाय स्वाहेति द्वादशभिरनुवाकैर्द्वादश मासाः सम्वत्सरः सर्वᳪं सम्वत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ४ ॥

---

संस्थितेऽग्निष्टोमे । परिवृतासु वसतीवरीषु । अध्वर्युरन्नहोमान् जुहोति । तेषामुक्तं ब्राह्मणम् । "प्राणाय स्वाहाऽपानाय स्वाहा"—(वा स० २२ । २३) इति द्वादशभिरनुवाकैः द्वादश मासाः संवत्सरः । सर्वं संवत्सरः । सर्वमश्वमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ ४ ॥

---

( द्व्याऽए ) एकविꣳशम्मध्यममहर्ब्भवति । ( स्य ) असौ ग्गऽआदित्यऽएकविꣳशः सोऽश्वमेधः स्वेनैवैनꣳ स्तोमेन स्वायां देवतायाम्प्रतिष्ठापयति तस्मादेकविꣳशम् ॥ ५ ॥

यद्वेवैकविꣳशम् । (मे) एकविꣳशो वै पुरुषो दश हस्त्याऽअङ्गुलयो दश पाद्याऽआत्मैकविꣳशस्तदनेनैकविꣳशेनात्मनैतस्मिन्नेकविꣳशे प्रतिष्ठायाम्प्रतितिष्ठति तस्मादेकविꣳशम् ॥ ६ ॥

यद्वेवैकविꣳशम् । ( मे ) एकविꣳशो वै स्तोमानाम्प्रतिष्ठा बहु खलु वाऽएतदेतस्मिन्नहन्युच्चावचमिव कर्म्म क्रियते तद्यदेतदेतस्मिन्नहन्युच्चावचम्बहु कर्म्म क्रियते तदेतस्मिन्नेकविꣳशे प्रतिष्ठायाम्प्रतिष्ठितं क्रियाताऽइति तस्माद्वेवैतदेकविꣳशमहः ॥ ७ ॥

( स्तु ) तस्य प्रातःसवनम् । ( म ) अग्निं तम्मन्ये यो वसुरिति होता पाङ्क्तमाज्यꣳ शस्त्वैकाहिकमुपसꣳशꣳसति बार्हतञ्च प्रउगम्माधुच्छन्दसञ्च त्रिचशऽउभे सꣳशꣳसति यश्च बार्हते प्रउगे कामो यऽ उ च माधुच्छन्दसे तयोरुभयोः कामयोराप्त्यै क्लृप्तम्प्रातःसवनम् ॥ ८ ॥

---

एकविंशं मध्यममहर्भवति । असौ वा आदित्य एकविंशः । सोऽश्वमेधः । स्वेनैवैनं स्तोमेन स्वायां देवतायां प्रतिष्ठापयति । तस्मादेकविंशम् ॥ ५ ॥

यद्वेवैकविंशम् । एकविंशो वै पुरुषः । दश हस्त्या अङ्गुलयः । दश पाद्याः । आत्मैकविंशः । तदनेनैकविंशेनात्मनैतस्मिन्नेकविंशे प्रतिष्ठायां प्रतितिष्ठति । तस्मादेकविंशम् ॥ ६ ॥

यद्वेवैकविंशम् । एकविंशो वै स्तोमानां प्रतिष्ठा । बहु खलु वा एतत् एतस्मिन्नहन्युच्चावचमिव कर्म क्रियते । तद्यदेतदेतस्मिन्नहन्युच्चावचं बहु कर्म क्रियते । तदेतस्मिन्नेकविंशे प्रतिष्ठायां प्रतिष्ठितं क्रियाता इति । तस्मात् उ एवैतदेकविंशमहः ॥ ७ ॥

तस्य प्रातःसवनम् । " अग्निं तं मन्ये यो वसुः "–(वा. स १५ । ४१ । ) इति होता पाङ्क्तमाज्यं शस्त्वा ऐकाहिकमुपसंशंसति । बार्हतं च प्रउगं माधुच्छन्दसं च । त्रिचशः

---

एकविंशमिति । औद्गात्रमन्त्र दशनां [illegible] । [illegible] । स्वाय [illegible] प्रतिष्ठापयति ॥ ५ ॥

यद्वैकविंशम् । [illegible] ॥ ६ ॥

सामान्यात् प्रकृतौ च । स्तोमानाम [illegible] । [illegible] ॥ ७ ॥

तस्य प्रात सवनम् । तस्य मध्यमाह हौत्र प्रात सवन विशेषेण [illegible] इति शेष. । " अग्निं त

(म) अथातो निष्केवल्यम् । (मम) महानाम्न्यः पृष्ठम्भवन्ति सानुरूपाः सप्रगाथाः शर्ठ्ँसति सर्व्वे वै कामा महानाम्नीषु सर्व्वे कामाऽअश्वमेधे सर्व्वेषाङ्कामानामाप्त्याऽइन्द्रो मदाय वावृधे प्रेदम्ब्रह्म वृत्रतूर्व्ये-ष्वाविथेति पङ्क्तीश्च पदपदाश्च शस्त्वैकाहिके निविदन्दधाति कलप्तम्माध्यन्दिनर्ठ्ँ सवनम् ॥ १० ॥

---

वसो सुतमंधः''-इत्यनुचरः । एष एव निरप एकाहतानः । "इत्था हि सोम इन्मदे अवितासि सुन्वतो वृक्तबर्हिषः ''-इति पंक्तीश्च पदपदाश्च शस्त्वा ऐकाहिके निविदं दधाति । इति मरुत्वतीयम् ॥ ९ ॥

अथातो निष्केवल्यम् । महानाम्न्यः पृष्ठं भवति । सानुरूपाः सप्रगाथाः शंसति । सर्वे वै

---

एकाहतान । एकाहे आतान " इह नेदीय " इत्यादि । एकाहतानादूर्ध्वम् " इत्थौ हि सोम इन्मदे " इति पङ्क्तीं शसति । तत " अवितासि सुन्वतो वृक्तबर्हिष " इति षंपदा । तत " ऐकाहिक सूक्त " शसति । तत्र च माध्यन्दिनस्य ऋचो निविद दधाति । इति मरुत्वतीयम्-इत्युपसंहार ॥ ९ ॥

अथातो निष्केवल्यमिति । निष्केवल्य माहेन्द्रशस्त्रं तत् विशेषविष्यत इति शेष । महानाम्न्य शक्वर्य । सिमाम्निमाद्यस्य । तानि शाक्वर लक्ष्यन । शाक्वर मध्यमे अहनि पृष्ठ भवति । प्रतिविन्ध्यो-पन्यास । एत अग तस्य ता महानाम्नी स्तोत्रिया । सहानुरूपेण तृचेन "स्वादो" " इत्था " "विपृक्ष" इति सह च प्रगाथेन होता शसति । सर्वे कामा महानाम्नीषु । आसता सर्वकामप्राप्ता इत्यर्थ । " इन्द्रो मदाय " इति पङ्क्ती । प्रद " ब्रह्म " इति षंपदा शस्त्वा ऐकाहिके " इन्द्रस्य नु वीर्याणि प्रवोचम् " इत्येतस्मिन् सूक्ते निविद दधाति ॥ १० ॥

---

१ ' इह नेदीय ' ऋ स म ८ सू ५३ ऋ ५ । आतान पुनरपि विस्तार । २-" इ ३ हि सोम इन्मद " ऋ स म १ सू ८० ऋ १ पङ्क्तिश्छन्दस्कमृक् । पङ्क्तिच्छन्दस्का ॥ ३-' अवितासि सुन्वतो " ऋ स म ९ सू ७ अ ४३ ॥ ४-षट्पदा महापङ्क्तिच्छन्दस्का । तथा च का मर्व अ ५ क ८ " अष्टकौ महत षट्को दशको नवकश्च षडष्टको महापङ्क्ति ' इति । तन्त्र भाष्य ' आद नष्ट त । अन्या समक ष्ट्य पदका' । दशक ऽ नवकः सा महापङ्क्तिरुच्यते । अष्टाक्षरा वा यस्या पदसा महापङ्क्तिरेव हि "। इति । पादा इति शेष । अतश्चाष्टाक्षरेति यावत् । ५-ऐकाहिक सूक्त अग्निष्टोम इत्य सदम तुरावति " इत्य द्विकमकादशाच सूक्त एक हे मूलप्रकृतिरूप अग्निष्ट म समुपन्नमित ऐकाहिकमित्युच्यते । ऋ स म १० सू ७३ ऋ १ । ६-मूलप्रकृतिरूपे अग्निष्टोमे षण्णासृचा शमन कृत्वा तन ऋच ' इहा मद्वन्त " इत्यादीनि निविल्पदानि सूक्तमध्ये धायते तस्मादेतत् ऐकाहिक निविद्धानमित्युच्यते । अत्र तु तानि निविल्पदानि सूक्तस्य ऽ नाम या मन्त्रोत्तरा य ' इत्यस्या ऋच प्राक् निविल्पदानि धायन इति विशेष । ९ । ७-'महानाम्न्य विदामघवन् इत्याद्या नव ऋच । ऐतरेयारण्यके ४।१।१ ता शक्वर्य शाक्वरपृष्ठस्थ धेन्य न तु शक्वरीच्छन्दस्का । ८-शाक्वर शक्वरत्र माद्र पृष्ठस्तोत्र यस्य महानाम्न्य स्तोत्रिया । ९ अनुरूप एक साम तृच गीयत तत् तृच स्तोत्रियम् । स प्रथमस्तृचस्तोत्रय माध्यन्द प्रथमकत्य । तत् तृचमनुरूपात् इत्यत पठ्यते या द्वितीयस्तृच स अनुरूप इत्युच्यते एष च द्वितीयो तृचो शस्त्रस्य दी ... । ... ऋ स म १० सू १२ ऋ ३ 'इत्था हि सम ' ऋ स म १ सू ८० ऋ १ विपृक्ष । १०-प्रगाथ अनुरूपमनुरूपमान दृष्टव्य प्रगाथ । ११-' इन्द्रो मदाय " ऋ स म १ सू ८१ ऋ १ । १२-" प्रद ब्रह्म " ऋ स म १ सू ८ अ ४३ ॥ १३-' इन्द्रस्य नु वीर्याणि " ऋ । स म १ सू ३२ ऋ १ । इन्द्रो सूक्त पञ्चदशर्चम् ॥

(म) अथातस्तृतीयसवनम् । (मु) अतिच्छन्दाऽएव प्रतिपद्वैश्वदेवस्याभि त्यन्देवꣳ सवितारमोण्योरिति तस्याऽएतदेव ब्राह्मणं यत्पूर्वस्याऽअभि त्वा देव सवितरित्यनुचरोऽभिवानभिभूत्यै रूपमुदुष्य देवः सविता दमूनाऽइति सावित्रꣳ शस्त्वैकाहिके निविदन्दधाति मही द्यावापृथिवीऽइह ज्येष्ठेऽइति चतुर्ऋचन्द्यावापृथिवीयꣳ शस्त्वैकाहिके निविदन्दधात्यृभुर्विभ्वा वाजऽइन्द्रो नोऽअच्छेत्यार्भवꣳ शस्त्वैकाहिके निविदन्दधाति को नु वां मित्रावरुणावृतायन्निति वैश्वदेवꣳ शस्त्वैकाहिके निविदन्दधातीति वैश्वदेवम् ॥ ११ ॥

(म) अथातऽआग्निमारुतम् । (मू) मूर्द्धानन्दिवोऽ अरतिम्पृथिव्याऽइति वैश्वानरीयꣳ शस्त्वैकाहिके निविदन्दधात्या रुद्रासऽइन्द्रवन्तः सजोषसऽइति मारुतꣳ शस्त्वैकाहिके निविदन्दधातीमूपु-

---

कामा महाभार्ग्नीषु । सर्वे कामा अश्वमेधे । सर्वेषां कामानामाप्त्यै । " इन्द्रो मदाय वावृधे भेदं ब्रह्म वृत्रतूर्येष्वाविथ "-इति पंक्तीश्च पदपदाश्च शस्त्वा ऐकाहिके निविदं दधाति । क्लसं माध्यंदिनं सवनम् ॥ १० ॥

अथातस्तृतीयसवनम् । अतिच्छन्दा एव प्रतिपत् वैश्वदेवस्य । " अभि त्यं देवꣳ सवितारमोण्योः "-( वा. सं. ४ । २५ ) इति । तस्या एतदेव ब्राह्मणम् , यत्पूर्वस्याः । " अभि त्वा देव सवितः "-इत्यनुचरः । अभिवानभिभूत्यै रूपम् । " उदुष्य देवः सविता दमूनाः "-इति सावित्रं शस्त्वा ऐकाहिके निविदं दधाति । "मही द्यावापृथिवी इह ज्येष्ठे"-इति चतुर्ऋचं द्यावापृथिवीयं शस्त्वा ऐकाहिके निविदं दधाति । " ऋभुर्विभ्वा वाज इंद्रो नो अच्छ "-इत्यार्भवं शस्त्वा ऐकाहिके निविदं दधाति । " को नु वां मित्रावरुणावृतायन "-इति वैश्वदेवं शस्त्वा ऐकाहिके निविदं दधाति । इति वैश्वदेवम् ॥ ११ ॥

अथात आग्निमारुतम् । " मूर्द्धानं दिवो अरतिं पृथिव्याः "-( वा. सं. ७ । २४ ) इति वैश्वानरीयं शस्त्वा ऐकाहिके निविदं दधाति । " आ रुद्रास इंद्रवंतः सजोषसः "-

वोऽअतिथिमुषर्बुधमिति नवर्चञ्जातवेदसीयꣳ शस्त्वैकाहिके निविदं दधाति तद्यदैकाहिकानि निविद्धानानि भवन्ति प्रतिष्ठा वै ज्योतिष्टोमः प्रतिष्ठाया अप्रच्युत्यै ॥ १२ ॥

तस्यैते पशवो भवन्ति । ( न्यु ) अश्वस्तूपरो गोमृगऽइति पञ्चदश पर्यङ्ग्यास्तेषामुक्तम्ब्राह्मणमथैतऽआरण्या वसन्ताय कपिञ्जलानाल-भते ग्रीष्माय कलविङ्कान्वर्षाभ्यस्तित्तिरीनिति तेषामुक्तमेवोक्तम् ॥१३॥

( मु ) अथैतानेकविꣳशतये । चातुर्मास्यदेवताभ्य एकविꣳशति-मेकविꣳशतिम्पशूनालभतऽएतावन्तो वै सर्वे देवा यावन्तश्चातुर्मास्य-देवताः सर्वे कामाऽअश्वमेध सर्वान्देवान्प्रीत्वा सर्वान्कामानाप्र-वानीति न तथा कुर्यात् ॥ १४ ॥

---

इति मारुतं शस्त्वा ऐकाहिके निविदं दधाति । " इममू षु वो अतिथिमुषर्बुधम् "-इति । नवर्चं जातवेदसीयं शस्त्वा ऐकाहिके निविदं दधाति । तद्यत् ऐकाहिकानि निविद्धानानि भवंति । प्रतिष्ठा वै ज्योतिष्टोमः । प्रतिष्ठाया अप्रच्युत्यै ॥ १२ ॥

तस्यैते पशवो भवंति । " अश्वः तूपरः गोमृगः "-( वा सं. २४ । १ ) इति पंचदश पर्यंग्याः । तेषामुक्तं ब्राह्मणम् । अथैत आरण्याः । " वसन्ताय कपिंजलानालभते, ग्रीष्माय कलविंकान्, वर्षाभ्यस्तित्तिरीन् "-( वा स. २४ । २० ) इति । तेषाम् उ एवोक्तम् ॥१३॥

अथैतानेकविंशतये चातुर्मास्यदेवताभ्य एकविंशतिमेकविंशतिं पशूनालभते । एतावन्तो वै सर्वे देवाः । यावन्तश्चातुर्मास्यदेवताः । सर्वे कामा अश्वमेधे । सर्वान् देवान् प्रीत्वा सर्वान् कामानामवानीति । न तथा कुर्यात् ॥ १४ ॥

---

शंसनीयान्येव । मारुतमग्निर्वृत्राणीत्यादीनि त्रीणि आश्वमेधिकानि ऐकाहिकेनैव निविद्धानार्थे समुच्चिनोति ॥ ११ ॥ १२ ॥

तस्यैते पशवः । तस्य मध्यमस्याह्नः पूर्वे अश्वादयः पशवो भवन्ति । इति केचिदाहुस्तेन ऐक. पशुत्व. उपन्यस्य प्रतिषिद्ध ॥ १३ ॥ १४ ॥

---

१- तेषामुक्तं ब्राह्मणम् " । ( श प १३ । २ । १ । २ । )

२-तथामेव कर्तुं । ब्राह्मणमिति च ( श प १३ । २ । ८ । १४ । )

३ साग्निमारुत ( यानि । नीथ यन्त्र । ( ४ )

४-" वैश्वदेव्यां " इत्याकरण सप्तसु च एकविंशत्युपन्यास्य तत् । ( [illegible] )

५-अश्वमेधिक पशुभ्यः । पञ्चप्रकरणात सम्भुग्नाः । तदाम्नाय । [illegible] । किं च सर्वो । तथा [illegible] पर्यङ्गिकानिति । का श्रौ सु २० । १४७ ।

यदक्रन्दः प्रथमं जायमानऽइति । त्रिः प्रथमया त्रिरुत्तमया ताः पञ्चदश सम्पद्यन्ते पञ्चदशो वै वज्रो वीर्यं वज्रो वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते तद्वै यजमानायैव वज्रः प्रदीयते योऽस्य स्तृत्यस्तस्मै स्तर्तवा उप प्रागाच्छसनं वाज्यर्वोप प्रागात्परमं यत्सधस्थमिति ॥ १७ ॥

[illegible]

प्पुरस्ताद्दधाति नेदनायतने प्रणवं दधामीत्यथो नेदेकवचनेन बहुवचनं व्यवायामेति न तथा कुर्यात्साङ्गमेव सूक्तमावपेदुप प्रागाच्छसनं वाज्यर्वोप प्रागात्परमं यत्सधस्थमिति ॥ १८ ॥

इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ १२।३।३ ॥ ( ९-१ ) ॥

---

" यदक्रंदः प्रथमं जायमानः "-( वा सं २९ । १२ । २२ ) इति त्रिः प्रथमया, त्रिरुत्तमया, ताः पंचदश संपद्यन्ते । पंचदशो वै वज्रः । वीर्यं वज्रः । वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते । तद्वै यजमानायैव वज्रः प्रदीयते । योऽस्य स्तृत्यः । तं स्तर्तवे । " उप प्रागाच्छसनं वाज्यर्वा, उप प्रागात्परमं यत्सधस्थम् "-( वा. सं. २९ । २३ । २४ ) इति ॥ १७ ॥

एते उद्धृत्य । "मा नो मित्रो वरुणो अर्यमाऽऽयुः"-( वा. सं. २९ । २४-४० ) इत्येतत्सूक्तमधिगावावपति । " चतुस्त्रिंशद्वाजिनो देवबंधोः "-( वा. सं. २९ । ४१ ) इति उ हैके । एना वंक्रीणां पुरस्ताद्दधाति । नेदनायतने प्रणवं दधामेति । अथो नेत् एकवचनेन बहुवचनं

---

तद्वै यजमानायैव । तद्वै इत्यत्र स वै इति लिंगव्यत्यय । पंचदशो वज्र यजमानायैव प्रदीयते । स्तिम ? य अस्य यजमानस्य स्तृत्य । "स्तृ हिंसायाम्"-( धा पा. स्वा. प ६ ) हिंसनीय. शत्रु सन् वर्तते । तुमर्थे तवेङ्‌ प्रत्यय । त स्तर्तुं स्तरीतु स्तुमित्यर्थ । " उप प्रागात् " इत्येते उद्धृत्य अश्वसूक्तात् । " यदक्रद " इत्येतत् एकादशभिरथ होता अभिष्टौति इति गतः ॥ १७ ॥

एते उद्धृत्य । " मा नो मित्र " इत्येतेमृक होता वाचयति " अग्निगो शमीध्व " इत्येतस्मात् प्राक् । अत्र सूक्ते उच्यमाने " चतुस्त्रिंशद्वाजिन " इत्येतामृच स्वस्थानादपनीय वंक्रीणां पुरस्तात् आवपति ।

---

१-सत तुरूमण्या ? दय यत -मा नाऽऽयत्तामस्य दीर्घतमाविड़ुभ ऋचिरुक्षरयुचमस्तागुरीरिति । ( वा० स० २५।२४-४५ ) आप्नग्ग शमीध्वमिति हैतुर्वचनम् ।

२-चतुस्त्रिंशद्वाजिन । ( वा० स० २५ । ४१ ) मा नो मित्रो वरुण इत्येतस्सूक्तान्तर्गतैवर्क् ।

( त्सु ) अथाध्वर्युः कुमारीमभिमेथति । कुमारि हयेहये कुमारि यकाऽसकौ शकुन्तिकेति तं कुमारी प्रत्यभिमेथत्यध्वर्यो हयेहयेऽध्वर्यो यकोऽसकौ शकुन्तकऽइति ॥ ४ ॥

( त्सु ) अथ ब्रह्मा महिषीमभिमेथति । महिषि हयेहये महिषि माता च ते पिता च तेऽग्रं वृक्षस्य रोहतऽइति तस्यै शतꣳ राजपुत्र्योऽनुचर्यो भवन्ति ता ब्रह्माणं प्रत्यभिमेथन्ति ब्रह्मन्हयेहये ब्रह्मन्माता च ते पिता च तेऽग्रे वृक्षस्य क्रीडतऽइति ॥ ५ ॥

( त्सु ) अथोद्गाता वावातामभिमेथति । वावाते हयेहये वावातऽऊर्ध्वामेनामुच्छ्रापयेति तस्यै शतꣳ राजन्याऽअनुचर्यो भवन्ति ताऽउद्गातारं प्रत्यभिमेथन्त्युद्गातर्हयेहयऽउद्गातरूर्ध्वमेनमुच्छ्रयतादिति ॥ ६ ॥

---

अथाध्वर्युः कुमारीमभिमेथति । कुमारि हयेहये कुमारि । "यकाऽसकौ शकुंतिका"–(वा. सं. २३ । २२) इति । तं कुमारी प्रत्यभिमेथति । अध्वर्यो हयेहयेऽध्वर्यो । "यकोऽसकौ शकुंतकः"–(वा. सं. २३ । २३) इति ॥ ४ ॥

अथ ब्रह्मा महिषीमभिमेथति । महिषि हयेहये महिषि । "माता च ते पिता च तेऽग्रं वृक्षस्य रोहतः"–(वा. सं. २३ । २४) इति । तस्यै शतं राजपुत्र्योऽनुचर्यो भवंति । ता ब्रह्माणं प्रत्यभिमेथंति । ब्रह्मन् हयेहये ब्रह्मन् । "माता च ते पिता च तेऽग्रे वृक्षस्य क्रीडतः"–(वा. सं. २३ । २५) इति ॥ ५ ॥

अथोद्गाता वावातामभिमेथति । वावाते हयेहये । वावाते । "ऊर्ध्वामेनामुच्छ्रापय"–(वा. सं. २३ । २६) इति । तस्यै शतं राजन्या अनुचर्यो भवंति । ता उद्गातारं प्रत्यभिमेथंति । उद्गातर्हयेहय उद्गातः । "ऊर्ध्वमेनमुच्छ्रयतात्"–(वा. सं. २३ । २७) इति ॥ ६ ॥

---

हयेहये इति । हयेशब्दस्य अभ्यामन्त्रणार्थस्य कुत्सायां द्विर्वचनम् । मथति आक्रोशति । मेथतिराक्रोशकर्मा ॥ ४–१९ ॥

---

( त्यु ) अथ होता परिवृक्तामभिमेथति । परिवृक्ते हयेहये परिवृक्ते यदस्याऽअँहुभेद्याऽइति तस्यै शतँ सूतग्रामण्यां दुहितरोऽनुचर्यो भवन्ति ता होतारम्प्रत्यभिमेथन्ति होतर्हयेहये होतर्यद्देवासो ललामगुमिति ॥ ७ ॥

( त्यु ) अथ क्षत्ता पालागलीमभिमेथति । पालागलि हयेहये पालागलि यद्धरिणो यवमत्ति न पुष्टं पशु मन्यतऽइति तस्यै शतं क्षात्त्रसङ्ग्रहीतॄणान्दुहितरोऽनुचर्यो भवन्ति ताः क्षत्तारम्प्रत्यभिमेथन्ति क्षत्तर्हयेहये क्षत्तर्यद्धरिणो यवमत्ति न पुष्टम्बहु मन्यतऽइति ॥ ८ ॥

सर्वाभिर्वाऽएषा व्वाचः । ( चां ) यदभिमेथिकाः सर्वे कामाऽ अश्वमेधे सर्वया व्वाचा सर्वान्कामानाप्नवामेत्युत्थापयन्ति महिषी ततस्ता यथेतम्प्रतिपरायन्त्यथेतरे सुरभिमतीमृचमन्ततोऽन्वाहुर्दधिक्राव्णोऽ अकारिषमिति ॥ ९ ॥ अर्द्धः प्रपाठकः ॥ ५३ ॥

( त्यु ) अप वाऽएतेभ्यऽआयुर्देवताः क्रामन्ति । ये यज्ञेऽपूताम्वाचम्वदन्ति व्वाचमेवैतत्पुनते देवयज्यायै देवतानामनपक्रमाय सा च गोमृगे

---

अथ होता परिवृक्तामभिमेथति । परिवृक्ते हयेहये परिवृक्ते । "यदस्या अंहुभेद्याः"–( वा. सं. २३ । २८ ) इति । तस्यै शतं सूतग्रामण्यां दुहितरोऽनुचर्या भवंति । ता होतारं प्रत्यभिमेथंति । होतर्हयेहये होतः । "यद्देवासो ललामगुम्"–( वा. सं. २३।२९ ) इति ॥ ७ ॥

अथ क्षत्ता पालागलीमभिमेथति । पालागलि हयेहये पालागलि ! "यद्धरिणो यवमत्ति न पुष्टं पशु मन्यते"–( वा. सं. । २३ । ३० ) इति । तस्यै शतं क्षात्त्रसंग्रहीतॄणां दुहितरोऽनुचर्या भवंति । ताः क्षत्तारं प्रत्यभिमेथंति । क्षत्तर्हयेहये क्षत्तः । "यद्धरिणो यवमत्ति न पुष्टं बहु मन्यते"–( वा. सं. २३ । ३१ ) इति ॥ ८ ॥

सर्वाभिर्वा एषा वाचः । यदभिमेथिकाः । सर्वे कामा अश्वमेधे । सर्वया वाचा सर्वान्कामानाप्नवामेति । उत्थापयति महिषीम् । ततस्ता यथेतं प्रतिपरायंति । अथेतरे सुरभिमतीमृचमंततोऽन्वाहुः–"दधिक्राव्णो अकारिषम्"–( वा. सं. २३ । ३२ ) इति ॥ ९ ॥

अप वा एतेभ्य आयुर्देवताः क्रामंति । ये यज्ञेऽपूतां वाचं वदंति । वाचमेवैतत्पुनते । देवय-

---

१ तस्य सूतग्रामण्या । का. श्रौ. सू. २० । ६ ।

२–३ क्षत्तृपालागल्यौ सचुर्थ्यौ । का. श्रौ. सू. २० । ६ ।

३–"महिषीमुत्थाप्य सुरभिमतीं दधिक्राव्ण इति जपन्ति" ( का. श्रौ. सू. २० । ६ ) ( महिषीमुत्थापयन्त्यनुचरीकर्तृक पुनरपि वाङ्मलापहत्यै । वा. सं. २३–३२ । अत्र ब्राह्मणम् ( श. प. १३ । २ । ९ । ९ )

वपा भवति या चात्र नूपरे तेऽ शृश्वे प्रत्यवधायाहरन्ति याश्वम्य वपा-ऽस्तीति वदन्तो न तथा कुर्यादश्वस्यैव प्रत्यक्षम्मेदऽ आहरेत्प्रज्ञाताऽइतराः ॥ १० ॥

शृतासु वपासु । स्वाहाकृतिभिश्चरित्वा प्रत्यञ्चः प्रतिपरेत्य सदारा ब्रह्मोद्यम्वदन्ति पूर्वया द्वारा प्रपद्य यथाधिष्ण्यमभ्युपविशन्ति ॥ ११ ॥

स होताऽध्वर्य्युम्पृच्छति । कः स्विदेकाकी चरतीति तम्प्रत्याह सूर्यऽ एकाकी चरतीति ॥ १२ ॥

( त्यु ) अथाध्वर्युर्होतारम्पृच्छति । किꣳ स्वित्सूर्य्यसमञ्ज्योतिरिति तम्प्रत्याह ब्रह्म सूर्य्यसमञ्ज्योतिरिति ॥ १३ ॥

( त्यु ) अथ ब्रह्मोद्गातारम्पृच्छति । पृच्छामि त्वा चितये देवसखेति तम्प्रत्याहापि तेषु त्रिषु पदेष्वस्मीति ॥ १४ ॥

( त्यु ) अथोद्गाता ब्रह्माणम्पृच्छति । केष्वन्तः पुरुषऽआविवेशेति तम्प्रत्याह पञ्चस्वन्तः पुरुषऽ आविवेशेति ॥ १५ ॥

( त्ये ) एतस्यामुक्तायामुत्थाय । सदसोऽधि प्राञ्चो यजमानमभ्या-यन्त्यग्रेण हविर्द्धानेऽआसीनमेत्य यथायतनम्पर्य्युपविशन्ति ॥ १६ ॥

स होताऽध्वर्य्युम्पृच्छति । का स्विदासीत्पूर्व्वचित्तिरिति तम्प्रत्याह द्यौरासीत्पूर्व्वचित्तिरिति ॥ १७ ॥

( त्यु ) अथाध्वर्य्युर्होतारम्पृच्छति । कऽ ईमरे पिशङ्गिलेति तम्प्र-त्याहाजाऽरे पिशङ्गिलेति ॥ १८ ॥

( त्यु ) अथ ब्रह्मोद्गातारम्पृच्छति । कत्यस्य विष्ठाः कत्यक्षराणीति तम्प्रत्याह षडस्य विष्ठाः शतमक्षराणीति ॥ १९ ॥

( त्यु ) अथोद्गाता ब्रह्माणम्पृच्छति । कोऽअस्य वेद भुवनस्य नाभि-मिति तम्प्रत्याह वेदाहमस्य भुवनस्य नाभिमिति ॥ २० ॥

( त्यु ) अथाध्वर्य्यु यजमानः पृच्छति । पृच्छामि त्वा परमन्तम्पृ-थिव्या ऽइति तम्प्रत्याहेयम्वेदिः परोऽअन्तः पृथिव्याऽइति ॥ २१ ॥

---

एतस्यामुक्तायां उत्थाय सदसो अधि प्रांचो यजमानमभ्यायंति । अग्रेण हविर्द्धाने आसीन-मेत्य, यथायतनं पर्युपविशंति ॥ १६ ॥

स होताऽध्वर्युं पृच्छति–" का स्विदासीत्पूर्वचित्तिः "–( वा. सं. २३ । ५३ ) इति । तं प्रत्याह–" द्यौरासीत्पूर्वचित्तिः "–( वा. सं २३ । ५४ ) इति ॥ १७ ॥

अथाध्वर्युर्होतारं पृच्छति–" का ईमरे पिशंगिला "–( वा सं. २३ । ५५ ) इति । तं प्रत्याह–" अजारे पिशंगिला "–( वा. सं २३ । ५६ ) इति ॥ १८ ॥

अथ ब्रह्मोद्गातारं पृच्छति–" कत्यस्य विष्ठाः कत्यक्षराणि "–( वा सं. २३ । ५७ ) इति । तं प्रत्याह–" षडस्य विष्ठाः शतमक्षराणि "–( वा. सं. २३ । ५८ ) इति ॥ १९ ॥

अथोद्गाता ब्रह्माणं पृच्छति–" को अस्य वेद भुवनस्य नाभिम् "–( वा. सं. २३।५९ ) इति । तं प्रत्याह–" वेदाहमस्य भुवनस्य नाभिम् "–( वा. सं. २३ । ६० ) इति ॥२०॥

अथाध्वर्युं यजमानः पृच्छति–" पृच्छामि त्वा परमन्तं पृथिव्याः" ( वा. सं. २३।६१ ) इति । तं प्रत्याह–"इयं वेदिः परो अंतः पृथिव्याः"–( वा. सं २३।६२ ) इति ॥ २१ ॥

---

एतस्यां वाचि उक्तायां सदस उत्थाय प्राञ्च अग्रेण हविर्द्धाने आसीनं यजमानं अभिश्रयन्ति । एत्य च

---

१–पुन पूर्वापरणोनाद्रादि च स्विदासादि ति । का. श्रौ सू २० । १७१ । ( पूर्वौ होत्रध्वर्यू )

२ कतरो च कत्यस्येति । का श्रौ सू २० । १७२ । ( उत्तरौ पश्चादुक्तौ ब्रह्मोद्गातारौ । )

३–"यजमानोऽध्वर्युं पृच्छामि त्वेति " " इय वेदिरित्यध्वर्यु " ( प्रत्याहेत्यर्थः । ) का. श्रौ. सू २० । १७३ । १७४ ।

सर्व्वांतिर्व्वाऽ एषा व्वाचः । (चो) यद्ब्रह्मोद्यꣳ सर्व्वे कामाऽ अश्वमेधे सर्व्वया व्वाचा सर्व्वान्कामानामवाप्नवामेति ॥ २२ ॥

(त्यु) उदिते ब्रह्मोद्ये । प्रपद्याध्वर्य्युर्हिरण्मयेन पात्रेण प्राजापत्यम्महिमानङ्ग्रहं गृह्णाति तस्य पुरोरुग्घिरण्यगर्ब्भः समवर्त्तताग्रऽइत्यथास्य पुरोऽनुवाक्या स्वभूः स्वयम्भूः प्रथमऽइति होता यक्षत्प्रजापतिमिति प्रैषः प्रजापते न त्वदेतान्यन्यऽइति होता यजति व्वषट्कृते जुहोति यस्तेऽहन्त्संव्वत्सरे महिमा सम्बभूवेति नानुवषट्करोति सर्व्वहुतꣳ हि जुहोति ॥ २३ ॥

इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ १३।३।४॥ (९–२) ॥

---

सर्वानित्वा एषा वाचः । यद् ब्रह्मोद्यम् । सर्वे कामा अश्वमेधे । सर्वया वाचा । सर्वान् कामाना-मवामेति ॥ २२ ॥

अथ पूर्वोमहिमग्रहः ।

उदिते ब्रह्मोद्ये । प्रपद्याध्वर्युः । हिरण्मयेन पात्रेण प्राजापत्यं महिमानं ग्रहं गृह्णाति । तस्य पुरोरुक्–" हिरण्यगर्भः समवर्ततामे "–(वा. सं. २३ । १) इति । अथास्य पुरोऽनु-वाक्या–" स्वभूः स्वयंभूः प्रथमः "–(वा. सं. २३ । ६३) इति । " होता यक्षत्प्रजा-पतिम् "–(वा. सं. २३ । ६४) इति प्रैषः । " प्रजापते न त्वदेतान्यन्यः "–(वा. सं. २३ । ६५) इति होता यजति । वषट्कृते जुहोति–" यस्तेऽहन्त्संवत्सरे महिमा संबभूव "–(वा. सं. २३ । २) इति । नानुवषट्करोति । सर्वहुतं हि जुहोति ॥ २३ ॥

---

यथायतनं यद् यस्यायतनं स तत्प्रविशति । न चात्र देवो पूर्वकल्पितानि आयतनानि सन्ति यथार्थमत वचनात् कल्पनीयानि ॥ १६–२३ ॥

इति श्रीमदाचार्यहरिस्वामिन. कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे द्वितीयेऽध्याये द्वितीयं ब्राह्मणम् ॥ १३ । ९ । २ ॥

---

अथातो वपानाꣳ होमः । (मो) नानैव चरेयुरा वैश्वदेवस्य वपायै वैश्वदेवस्य वपायाꣳ हुतायां तदन्वितरा जुहुयुरिति ह स्माह सत्यकामो जाबालो विश्वे वै सर्वे देवास्तदेतान्यथादेवतम्प्रीणातीति ॥ १ ॥

(त्यै) ऐन्द्राग्नस्य वपायाꣳ हुतायाम् । (न्त) तदन्वितरा जुहुयुरिति ह स्माहतुः सौमापी मानुतन्तव्याविन्द्राग्नी वै सर्वे देवास्तदेवैनान्यथादेवतम्प्रीणातीति ॥ २ ॥

कायस्य वपायाꣳ हुतायाम् । ( न्त ) तदन्वितरा जुहुयुरिति ह स्माह शैलालिः प्रजापतिर्वै कः प्रजापतिमु वाऽअनु सर्वे देवास्तदेवैनान्यथादेवतम्प्रीणातीति ॥ ३ ॥

---

अथ वपाप्रचरणम् ।

अथातो वपानां होमः । नानैव चरेयुः आ वैश्वदेवस्य वपायै। वैश्वदेवस्य वपायां हुतायाम् । तदनु इतरा जुहुयुः, इति ह स्माह सत्यकामो जाबालः । विश्वे वै सर्वे देवाः । तदेतान् यथादेवतं प्रीणातीति ॥ १ ॥

ऐन्द्राग्नस्य वपाया हुतायाम् । तदनु इतरा जुहुयुः, इति ह स्माहतुः सौमापी मानुतंतव्यौ। इन्द्राग्नी वै सर्वे देवाः । तदेवैनान् यथादेवतं प्रीणातीति ॥ २ ॥

कायस्य वपाया हुतायाम् । तदनु इतरा जुहुयुः, इति ह स्माह शैलालिः । प्रजापतिर्वै कः । प्रजापतिं उ वा अनु सर्वे देवाः । तदेवैनान् यथादेवतं प्रीणातीति ॥ ३ ॥

---

अथातो वपानामिति—आ वैश्वदेवस्य वपाया इत्यत्र "बहुरूपा वैश्वदेवा" इत्येष (श. प. १३।२।५।४ ॥ १३।३।२।७) वैश्वदेवोऽत्रापि "नशिल्पा वैश्वदेव्य"–(वा स. २४।५) इति । कुत ? पुंल्लिङ्गनिर्देशात् कायैन्द्राग्नसाहचर्यात्, अतो हि चातुर्मास्यदेवतापशुसाहचर्यात्, एषोऽपि चातुर्मास्यदेवता-पशुरेवेति गम्यते ॥ १ ॥

सौमापौ । सोमापस्य अपत्ये सौमापौ। मनुतन्तोरपत्ये मानुतन्तव्यौ। इन्द्राग्न्योर्विश्वेषां देवानां कस्य च सर्व-देवतात्मकत्वात् तेभ्यो हुता वपा यथादेवतमेव हुता भवतीत्यभिप्रायः । पूर्वम् "एकविंशतिधा कृत्वा

---

१–वपाभिश्चरति । का श्रौ सू १० । १५७ । प्रथम एकादशिभ्यो पशुना वपाभिः । तत अश्वतूपरगोमृगानां वपाभिस्त्रतः । तत क्रमेण पृथक् पृथक् "कृष्णग्रीव आग्नेयो रराटे" इत्यादीनां "श्वेता सौर्या" इत्यन्तानां वपाभिः । तत्रापि समानदेवत्यानां तिसृणां तिसृणां वपानां प्रचारस्तन्त्रेण । अयं प्रकारः "नानैव चरेयुरिति" अग्निमपञ्चमकण्डिकानुसारी बाध्य । अयमेको वपाप्रचारपक्षः ॥ ऐन्द्राग्नवैश्वदेवकायानके । ( का श्रौ सू १० । १८१ ) ऐन्द्राग्नो वारुणप्राघासिक । वैश्वदेवो वैश्व-देवपर्वसम्बन्धी । कायश्च वारुणप्राघासिकः । अयमभिप्रायः –आदित आरभ्य वारुणप्राघासिकैन्द्राग्नपर्यन्तं क्रमेण पृथक् पृथक् वपा-प्रचारं कृत्वा ऐन्द्राग्नस्य वपायां हुतायां अवशिष्टाः सर्वा वपा अनुहोतव्याः । अयं द्वितीयो वपाप्रचारपक्षः । एवं वैश्वदेवकाययोः इमौ तृतीयचतुर्थौ वपाप्रचारपक्षौ ॥ एकविंशतिप्रदानानकेऽन्यकं चातुर्मास्यदेवता पित्र्यवर्जं वैश्वदेवकपुनरुक्तावर्जम् । का श्रौ. सू. २० । ८१ । अथ पञ्चमो वपाप्रचारपक्षः ।

( त्ये ) एकविꣳशतिञ्चातुर्मास्यदेवताऽअनुद्रुत्य । ( त्यै ) एकविꣳशतिधा कृत्वा प्रचरेयुरिति ह स्माह भाल्लवेयऽएतावन्तो वै सर्व्वे देवा यावत्यश्चातुर्म्मास्यदेवतास्तदुदेवैनान्यथादेवतम्प्रीणातीति ॥ ४ ॥

नानैव चरेयुः । ( रि ) इतीन्द्रोतः शौनकः किमु तु त्वरेरंस्तदुदेवैनान्यथादेवतम्प्रीणातीत्येतदुह तेषाम्वचोऽन्या त्वेवात स्थितिः ॥ ५ ॥

( रु ) अथ होवाच याज्ञवल्क्यः । सकृदेव प्राजापत्याभिः प्रचरेयुः सकृद्देवदेवत्याभिस्तदुदेवैनान्यथादेवतम्प्रीणात्यञ्जसा यज्ञस्य सꣳस्थामुपैति न ह्वलतीति ॥ ६ ॥

---

एकविंशतिं चातुर्मास्यदेवता अनुद्रुत्य, एकविंशतिधा कृत्वा प्रचरेयुः; इति ह स्माह भाल्लवेयः । एतावंतो वै सर्वे देवाः । यावत्यश्चातुर्मास्यदेवताः । तदेवैनान् यथादेवतं प्रीणातीति ॥ ४ ॥

नानैव चरेयुः; इतींद्रोतः शौनकः । किमुत त्वरेरन् । तदेवैनान् यथादेवतं प्रीणातीति । एतदह तेषां वचः । अन्या त्वेवातः स्थितिः ॥ ५ ॥

अथ होवाच याज्ञवल्क्यः । सकृदेव प्राजापत्याभिः प्रचरेयुः । सकृद्देवदेवत्याभिः । तदेवैनान्यथादेवतं प्रीणाति । अंजसा यज्ञस्य संस्थामुपैति । न ह्वलतीति ॥ ६ ॥

---

प्रचरेयुः" इति ( ४ क. ) प्रचरणवचनाद् याग व प्रतीयते । इह तु "तदन्विनरा जुहुयु "–इति (२ क.) होमत्वमिति भेदः ॥ २ ॥ ३ ॥

एकविंशतिं चातुर्मास्यदेवता. । त्रिष्वपि पर्वस्वपुनरुक्तत्वेन. । कुत एतत् ? पितॄणामदेवत्वात् । त्र्यंबकस्याप्रधानदेवतात्वात् । पुनरुक्तानामनन्यदेवतात्वात् । "अनुद्रुत्य" अनुपूर्वमनुदिश्य । एकविंशतिधा कृत्वा एकविंशतिं चवसारासी. कृत्वा । एकैक राशि एकैका चातुर्मास्यदेवता संकीर्त्य जुहुयात् । तद्यथा–सर्वमेव वसानामेकविंशतिभागम् अग्निदेवत्यानामयाभ्यासा अग्ने जुहुयात् । अपर एकविंशतितमं भाग सोमोद्देशेनेत्येवं सर्वेषां राशीनां ज्ञेयम् ॥ ४ ॥

नाना पृथक्पृथक् यथाप्राप्तमेव चरेयुः । किं कारणम् ? येन त्वरमाणाः सकल्पनमयथा कुर्युः । प्रकृतिवैलक्षण्यं चेति । एवमेव हि अनुप्रचरितया कृत्वा यथादेवत द्रव्यदेवतोच्चारणेन देवताः प्रीणातीति । इतरथा तदुच्चारणेत्यभिप्रायः ॥ ५ ॥

अथ होवाच याज्ञवल्क्यः । यावत्यः प्राजापत्याः ताभि. । सकृदेव सह प्रचरेयुः । सकृदेव सहाग्न्यादि-

---

१–देवता त्वेव तु । ( का. श्रौ. सू. २० । १८३ ) त्रिभ्यो देवेभ्य इत्येव सर्वासां देवतानां तदेकोच्चारणं कृत्वा सर्वेषामेकदेव प्रचार. तदेव कर्तव्य. । अथ वा सर्वेषामेव सह प्रचरणम्. । अत एव. पक्षे पक्षान्तरेभ्यो विशिष्ट. तथा देवतानामेव तु ना चेष्यते ; अन्यस्मिन् पक्षे एकविंशत्यो. पशूनां हव्यानि वा देवैः सह एकमन्त्रेण प्रचारो न भवति । तत्कारणमाह कल्प्यान.–नकलभेदत्व । ( का. श्रौ. सू. २० । १८४ ) कलभेदश्च अर्थादिदेवतायाम्यवधानकः । अत एकविंशत्योर्देवता प्रथम पृथक् पृथक् प्रचारः । तेषामपि मध्ये द्वयं द्वयोरेकदेवत्यत्वेनैव प्रचारः । तदोऽनुप्रचरणेऽनुगत्वं, ततः क्रमपरिपाटी सर्वेषां तत्त्वेन ।

हुतासु व॒पासु । प्रपुद्याध्वर्युं रजतेन॒ पात्रे॑ण प्राजापत्यम्म॑हि॒मान॑मु॒त्तरङ्ग्रहङ्गृह्णाति तस्य॑ पुरो॒रुग्यः प्राण॒तो नि॑मिष॒तो म॑हि॒त्वेति॑ विपर्य॑स्ते याज्यानुवाक्येऽयातयामताया एष एव प्रैषो वषट्कृते जुहोति यस्ते रात्रौ॑ सम्वत्स॒रे म॑हि॒मा सम्ब॒भूवेति॒ नानुवषट्करोति तस्योक्तम्ब्राह्मणम् ॥ ७ ॥

(ब्रा) नाग्नेयाम्पशूनान्तेदन्याऽअवद्यन्ति । (न्त्य) अवद्यन्त्यश्वस्य दक्षि-

हुतासु वपासु प्रपद्याध्वर्युः रजतेन पात्रेण प्राजापत्यं महिमानमुत्तरं ग्रहं गृह्णाति । तस्य पुरोरुक्–"यः प्राणतो निमिषतो महित्वा"–(वा. सं. २३ । ३) इति । विपर्यस्ते याज्यानुवाक्ये । अयातयामतायै । एष एव प्रैषः । वषट्कृते जुहोति–"यस्ते रात्रौ संवत्सरे महिमा संबभूव"–(वा. सं. २३ । ४) इति । नानुवषट्करोति । तस्योक्तं ब्राह्मणम् ॥ ७ ॥

नाग्नेयानां पशूनां तेदन्या अवद्यंति । अवद्यंत्यश्वस्य । दक्षिणतोऽन्येषां पशूनामवद्यंति । उत्तरतोऽश्वस्य । प्लक्षशाखास्वन्येषां पशूनामवद्यंति । वेतसशाखास्वश्वस्य ॥ ८ ॥

देवताभिः, तदेव तेनैव एनान् देवान्, यथादेवत प्रीणाति देवग्रहणेन हि ते सर्वेऽप्याग्न्यादय, शक्यन्ते ग्रहीतुमित्यर्थः । अजसा ऋजुमार्गेण सवनकालमनतिक्रमेण यज्ञस्य समाप्तिं प्राप्नोति । न ह्वलति न चलति, कर्मकालात् । इति तु तन्, इदयाद्यगाना प्रचारमपि एवमेव दर्शयति । तथाच प्रागुक्तम्–"प्राजापत्य एवाश्वो देवतया इतरे" इति ॥ ६ ॥

अथोत्तरो महिमग्रहः ।

हुतासु वपासु । रजतेन पात्रेण प्राजापत्यं महिमानमुत्तरं ग्रहं गृह्णाति । एतावत् अनुविधीयते अन्यत् लिङ्गादिभिरपि प्राप्तमनूद्यते । विपर्यस्ते याज्यानुवाक्ये । इत्येतदपि विधीयते[1] ॥ ७ ॥

तेदन्या तेदनी लोहित तस्यामेदन्या एकदेशमवद्यन्ति । अश्वस्येति विधि इतरं अनुवादः ॥ ८ ॥

---

१–स्वपाने द्वितीयेन पूर्ववत्स्व रात्राविति जुहोति । (का. श्रौ. सू. २० । १८५) द्वितीयेन राजतेन महिम्ना ग्रहेण । पूर्ववदिति सर्वहुतेन अग्रे वा ग्रहणमित्याद्यतिदिश्यते । यस्ते रात्राविति राजतेन "यः प्राणत" इति पुरोरुक् । विपर्यस्ते याज्याऽनुवाक्ये प्रथमस्य महिम्नो या याज्या "प्रजापते न त्वदेतान्यन्य" इति । सा द्वितीयस्य महिम्न पुरोऽनुवाक्या । या प्रथमस्य पुरोऽनुवाक्या "स्वभूः स्वयम्भूः प्रथमम्" इति । सा द्वितीयस्य याज्येत्यर्थः । प्रैषस्तु प्रथममहिम्न सम्बन्धी "होता यक्षत्प्रजापतिमिति" तस्योक्तं ब्राह्मणम् (श. प. १३ । १।५।१–३) आश्वलायनस्तु उभयोर्महिम्नोर्याज्यानुवाक्ये अप च समाम्नातः । महिम्ना पुरस्तादुपरिष्टाच्च वपाना चरन्ति स्वभूः स्वयम्भूः प्रथमममन्तर्महत्यर्णवे ॥ दधे ह गर्भमृत्वियं यतो जातः प्रजापति ॥ होता यक्षत्प्रजापतिं महिम्नो जुषतां पिबतु सोम होतर्यजेति प्रैषमन्त्रवेमे लोका प्रदिशो दिशश्चेति याज्या । आश्व. श्रौ. सू. उ. ष. ६ । ४ । ९ ।

२–"सर्पणप्रभृत्या पश्चात्सवनात्कृत्वा लोहितमवद्यति गोमृगकण्ठाश्वशकपोरयस्मये चरौ" (का. श्रौ. सू. २० । १८८ ।) इति । अवद्यतीति शेष । गोमृगो गवय । अयस्मये चरौ आयसे पात्रे । "गोमृगकण्ठेन प्रथमामाहुतिं जुहोति" "अश्वशफेन द्वितीयामाहुतिं जुहोति" "अयस्मयेन चरुणा तृतीयमाहुतिं जुहोति" (श. प. । १३ । ३ । ४ । ३ । ४ । ५) इति श्रुत्या एभि पात्रैर्होमविधानात् । एतेषु तेदन्या अवदानग्रहणम् ।

३–"वेतसशाखासु प्राजापत्यानाम्" । "अश्वस्य वा" । (का. श्रौ. सू. २० । १८९ । १९०) वाशब्दोऽवधारणे । वेतसशाखा वेतसशब्दः ॥

पुतोऽन्येषाम्पशूनामवद्यन्त्युत्तरतोऽश्वस्य प्लक्षशाखास्वन्येषाम्पशूनाम-
वद्यन्ति श्वेतसशाखास्वश्वस्य ॥ ८ ॥

तदु होवाच सात्ययज्ञिः । ( रि ) इतरथैव कुर्य्युः पथ एव नापोदित्य-
मिति पूर्व्वा त्वेव स्थितिकृतथ्यो यज्ञस्तेनान्तरिक्षलोकमृध्नोति सर्व्व-
स्तोमोऽतिरात्रऽउत्तममहर्भवति सर्व्वम्वै सर्व्वस्तोमोऽतिरात्रः सर्व्व-
मश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ ९ ॥

तस्य त्रिवृद्बहिष्पवमानम् । ( म्प ) पञ्चदशान्याज्यानि सप्तदशो माध्य-
न्दिनः पवमानऽएकविꣳशानि पृष्ठानि त्रिणवस्तृतीयः पवमानस्त्रयस्त्रिꣳश-
मग्निष्टोमसामैकविꣳशान्युक्थान्येकविꣳशः षोडशी पञ्चदशी रात्रि-
स्त्रिवृत्सन्धिर्य्यद्द्वितीयस्याह्नः पृष्ठ्यस्य षडहस्य तच्छ्रमतिरात्रो यज्ञस्ते-
नामुं लोकमृध्नोति ॥ १० ॥

( त्ये ) एकविꣳशतिः सवनीयाः पशवः । सर्व्वऽआग्नेयास्तेषाꣳ

---

तदु होवाच सात्ययज्ञिः । इतरथैव कुर्युः । पथ एव नापोदित्यमिति । पूर्वा त्वेव स्थितिः । उक्थ्यो यज्ञः । तेनान्तरिक्षलोकमृध्नोति । सर्वस्तोमोऽतिरात्र उत्तममहर्भवति । सर्वं वै सर्वस्तोमोऽतिरात्रः । सर्वमश्वमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ ९ ॥

तस्य त्रिवृद्बहिष्पवमानम् । पंचदशान्याज्यानि । सप्तदशो माध्यंदिनः पवमानः । एकविंशानि पृष्ठानि । त्रिणवस्तृतीयः पवमानः । त्रयस्त्रिंशमग्निष्टोमसाम । एकविंशान्युक्थानि । एकविंशः षोडशी । पंचदशी रात्रिः । त्रिवृत्सन्धिः । यद् द्वितीयस्याह्नः पृष्ठ्यस्य षडहस्य तच्छ्रमम् । अतिरात्रो यज्ञः । तेनामुं लोकमृध्नोति ॥ १० ॥

एकविंशतिः सवनीयाः पशवः । सर्वे आग्नेयाः । तेषां समानं कर्म । इति उ हैक आहुः । चतुर्वि-

---

कर्मान्तरोपस्थान । तदु होवाच सात्ययज्ञिः । इतरथा यथा अन्यथा पठ्यते तथा कुर्युः । पश्वन्तरकर्म मर्यादैव प्रतिष्ठानात् । 'नापोदित्यमिति' अपोदित्यम् इति । उत्पथम् अनतिक्रमितव्यम् । एवं । "एनिम्नुशा सद्रुत्र क्रतु"–(पा. सू. ३।१।१०९) "हृमवस् नित्यमिति तुत्"–(पा सू ६।१।७१) इति इत्यम् । एव च न इत्यम् । पूर्वा त्वेव स्थितिः । पूर्वा तु स्थितिरेव सात्ययज्ञिमतम् । ततश्च आदेदमेव सोऽहिमन्येति । उक्तरतश्च श्वेतसशाखास्विति कुर्युः । उक्थ्यो यज्ञः । इत्यनेनैकविंश सप्तमसहस्त्रमन्यम् । तदु-त्पन्नस्य भवतीत्यर्थ । तेन मध्यमेन अह्ना अन्तरिक्षलोकमृध्नोति ॥ ९ ॥ १० ॥

षड्विंशतिं त्वेवैतान् गव्यानन्यतेन । एतान् "आग्नेय कृष्णग्रीव" इत्यादीन् शाकिनीति च द्वौ च

---

१ प्रयतस्थ । का श्रौ.सू २०।११६।

समानं कर्मेत्यु हैकऽआहुश्चतुर्विꣳशतिन्त्वेवैतान्गव्यानालभेत द्वाद-शभ्यो देवताभ्यो द्वादश मासाः संवत्सरः सर्वꣳ संवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ११ ॥

इति तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ १३।३।५ ॥ ( ५–३ । )

एतेन हेन्द्रोतो दैवापः शौनकः । ( कौ ) जनमेजयम्पारिक्षितं याज-याञ्चकार तेनेष्ट्वा सर्वाम्पापकृत्याꣳ सर्वाम्ब्रह्महत्यामपजघान सर्वाꣳ ह वै पापकृत्याꣳ सर्वाम्ब्रह्महत्यामपहन्ति योऽश्वमेधेन यजते ॥ १ ॥

तदेतद्गाथयाऽभिगीतम् । ( मा ) आसन्दीवति धान्यादꣳ रुक्मिणꣳ हरितस्रजम् । आबध्नादश्वꣳ सारङ्गन्देवेभ्यो जनमेजयऽइति ॥ २ ॥

( त्ये ) एतेऽएव पूर्वेऽअहनी । ज्योतिरतिरात्रस्तेन भीमसेनमेते

---

शति त्वेवैतान् गव्यानालभेत द्वादशभ्यो देवताभ्यः । द्वादश मासाः संवत्सरः । सर्वं संवत्सरः । सर्वमश्वमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ ११ ॥

एतेन ह इन्द्रोतो दैवापः शौनको जनमेजय पारिक्षितं याजयाञ्चकार । तेनेष्ट्वा सर्वां पापकृत्यां सर्वां ब्रह्महत्यामपजघान । सर्वां ह वै पापकृत्यां सर्वां ब्रह्महत्यामपहंति । योऽश्वमेधेन यजते ॥ १ ॥

तदेतद् गाथयाऽभिगीतम्–" आसंदीवति धान्यादं रुक्मिणं हरितस्रजम् । आबध्नादश्वं सारङ्गं देवेभ्यो जनमेजयः "–इति ॥ २ ॥

एत एव पूर्वे अहनी । ज्योतिरतिरात्रः । तेन भीमसेनम् । एते एव पूर्वे अहनी । गौरतिरात्रः ।

ऽएव पूर्व्वेऽअहनी गोरतिरात्रस्तेनोग्रसेनमेते ऽएव पूर्व्वेऽअहनी ऽआयुरतिरात्रस्तेन श्रुतसेनमित्येते पारिक्षितीयास्तदेतद्गाथयाऽभिगीतम्पारिक्षिता यजमानाऽअश्वमेधैः परोऽवरम् । अजहुः कर्म्म पापकम्पुण्याः पुण्येन कर्मणेति ॥ ३ ॥

(त्ये)एतेऽएव पूर्व्वेऽअहनी । (नीऽअ) अभिजिदतिरात्रस्तेन ह पुरऽआह्लारऽईजे कौसल्यो राजा तदेतद्गाथयाऽभिगीतमह्लारस्य परः पुत्रोऽश्वम्मेध्यमबन्धयत् । हैरण्यनाभः कौसल्यो दिशः पूर्णाऽअमँहतेति ॥ ४ ॥

( त्ये ) एतेऽएव पूर्व्वेऽअहनी । विश्वजिदतिरात्रस्तेन ह पुरुकुत्सो दौर्ग्गहेणेजऽऐक्ष्वाको राजा तस्मादेतदृषिणाऽभ्यनूक्तमस्माकमत्र पितरस्तऽआसन्त्सप्तऽऋषयो दौर्ग्गहे बध्यमानऽइति ॥ ५ ॥

---

तेनोग्रसेनम् । एते एव पूर्वे अहनी । आयुरतिरात्रः । तेन श्रुतसेनम् । इत्येते पारिक्षितीयाः । तदेतद्गाथयाऽभिगीतम्-" पारिक्षिता यजमाना अश्वमेधैः परोऽवरम् । अजहुः कर्म पापकं पुण्याः पुण्येन कर्मणा "-इति ॥ ३ ॥

एते एव पूर्वे अहनी । अभिजिदतिरात्रः । तेन ह पर आह्लार ईजे कौसल्यो राजा । तदेतद्गाथयाऽभिगीतम्-" अह्लारस्य परः पुत्रोऽश्वं मेध्यमबंधयत् । हैरण्यनाभः कौसल्यो दिशः पूर्णा अमंहत "-इति ॥ ४ ॥

एते एव पूर्वे अहनी । विश्वजिदतिरात्रः । तेन ह पुरुकुत्सो दौर्गहेणेज ऐक्ष्वाको राजा । तस्मादेतदृषिणाऽभ्यनूक्तम्-" अस्माकमत्र पितरस्त आसन् सप्त ऋषयो दौर्गहे बध्यमाने "-इति ॥ ५ ॥

---

परिक्षित्पुत्रा इमे भ्रातरः पारिक्षितीयाः । अश्वमेधसंशोधका इत्यपरे । परोऽवरम् । परे परे तत अवरेऽवरे इत्येतस्मिन्नर्थे अव्ययीभावसमासश्चेत्यर्थः । सन्तः यजमानाः पुण्याः भवन्तः कर्म पापकम् अजहुः त्यक्तवन्तः ॥ ३ ॥

परो नामतः अह्लारपुत्रः कौसल्यो गोत्रेण । हिरण्यनाभस्यापत्यं अबन्धत् । दिशः पूर्णाः सर्वाः गोभिर्जितवान् । दिशो जितस्य पूर्णा अमंहत महनिर्दानकर्मा ऋत्विग्भ्यो दत्तवानित्यर्थः ॥ ४ ॥

तेन क्रतुना । पुरुकुत्स इक्ष्वाकोरपत्यं ऐक्ष्वाकः दौर्गहो नामतः दौर्गहेणाश्वेन नाम्नेन क्रतुना ईजे । अश्वमेधेन ईजे इत्यर्थः । तस्मादेतदृषिणा मन्त्रदृशा अभितः अनुक्तम् । ये अस्माकं पितरः पूर्वजाः गोतम इत्यादयः अत्र स्थाने आसन् । दौर्गहे अश्वे बध्यमाने पुरुकुत्सेन ते आगच्छन् । अनन्तरमस्य इन्द्र न वृत्रहणमिव ते सर्वेऽपि आयजन आभिमुख्येन परिचरितवन्तः । कं त्रसदस्युं नाम राजानम् । कीदृशं अस्य पुत्रिका अर्धदेवम् । इन्द्रदेवतासमानं देवं ईश्वरं वृत्रस्य हन्तारं इन्द्रं न इन्द्रमिव वृत्रतुरं अयाजयन् ॥ ५ ॥

---

१-अत्र स्थ । ईं न इत्यत्र । अत्रे अर्थो (अयजन्त इत्यत्रे मत्वा विचार्यमिदम् ।

( त्ये ) एतेऽ एव पूर्वेऽ अहनी । महाव्रतमतिरात्रस्तेन ह मरुत्तऽ आविक्षितऽ ईजऽआयोगवो राजा तस्य ह ततो मरुतः परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः सभासदो बभूवुस्तदेतद्गाथयाऽभिगीतम्मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे । आविक्षितस्याग्निः क्षत्ता विश्वे देवाः सभासदऽ इति मरुतो ह वै तस्य परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः सभासदो भवन्ति योऽश्वमेधेन यजते ॥ ६ ॥

( तऽए ) एतेऽएव पूर्वेऽअहनी । ( नीऽ अ ) अतोर्यामोऽतिरात्रस्तेन हैतेन क्रैव्यऽईजे पाञ्चालो राजा क्रिवयऽइति ह वै पुरा पञ्चालानाचक्षते तदेतद्गाथयाऽभिगीतमश्वम्मेध्यमालभते क्रिवीणामतिपूरुषः । पाञ्चालः परिवक्रायाᳬँ सहस्रशतदक्षिणमिति ॥ ७ ॥

( त्यु ) अथ द्वितीयया । सहस्रमासन्नयुता शता च पञ्चविᳬँशतिः । दिक्तो दिक्तः पञ्चालानाम्ब्राह्मणा या विभेजिरऽ इति ॥ ८ ॥

---

एते एव पूर्वे अहनी । महाव्रतमतिरात्रः । तेन ह मरुत्त आविक्षित ईजे आयोगवो राजा । तस्य ह ततो मरुतः परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः सभासदो बभूवुः । तदेतद्गाथयाऽभिगीतम्– " मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे । आविक्षितस्याग्निः क्षत्ता विश्वे देवाः सभासदः "–इति । मरुतो ह वै तस्य परिवेष्टारोऽग्निः क्षत्ता विश्वे देवा सभासदो भवन्ति । योऽश्वमेधेन यजते ॥ ६ ॥

एते एव पूर्वे अहनी । अतोर्यामोऽतिरात्रः । तेन हैतेन क्रैव्य ईजे पाञ्चालो राजा । क्रिवय इति ह वै पुरा पञ्चालानाचक्षते । तदेतद्गाथयाऽभिगीतम् " अश्वं मेध्यमालभते क्रिवीणामतिपूरुषः । पांचालः परिवक्रायां सहस्रशतदक्षिणम् "–इति ॥ ७ ॥

अथ द्वितीयया–" सहस्रमासन्नयुता शता च पञ्चविंशतिः । दिक्तो दिक्तः पंचालानां ब्राह्मणा या विभेजिरे "–इति ॥ ८ ॥

---

मरुत्त मरुत्तो नाम राजा अविक्षितस्यापत्य आविक्षित । आयोगवो भोजयितारः । अग्नि क्षत्ता । सन्निधाता कोशाध्यक्ष । अवसन् उषिता गृहे ॥ ६ ॥

परिवक्रा नगर्याम् ॥ ७ ॥

सहस्रमयुतानि गवां कोटीरित्यर्थः । शतानि पञ्चविंशतिर्गृहाणां एकैकस्या दिश आदत्ता ब्राह्मणा ऋत्विज । यानि अयुतानि शतानि शतानि विभक्तवत स्वे स्वे पुरुषे सह ॥ ८ ॥

त्रिवृदग्निष्टोमः पञ्चदशऽउक्थ्यः सप्तदशन्तृतीयमहः सोक्थकमेकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरित्येषोऽनुष्टुप्सम्पन्नस्तेन हैतेन ध्वसा द्वैतवनऽईजे मात्स्यो राजा यत्रैतद्द्वैतवनꣳ सरस्तदेतद्गाथयाऽभिगीतञ्चतुर्दश द्वैतवनो राजा सङ्ग्रामजिद्धयान् । इन्द्राय वृत्रघ्नेऽबध्नात्तस्माद्द्वैतवनꣳ सर ऽइति ॥ ९ ॥

चतुर्विꣳशाः पवमानाः । ( त्रि ) त्रिवृदभ्यावर्त्तश्चतुश्चत्वारिꣳशाः पवमानाऽएकविꣳशमभ्यावर्त्तमष्टाचत्वारिꣳशाः पवमानास्त्रयस्त्रिꣳशमभ्यावर्त्तमाऽग्निष्टोमसामाद्द्वात्रिꣳशान्युक्थान्येकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरिति ॥ १० ॥

---

त्रिवृदग्निष्टोमः । पंचदश उक्थ्यः । सप्तदश तृतीयमहः सोक्थकम् । एकविंशः षोडशी । पंचदशी रात्रिः । त्रिवृत्संधिः । इत्येषोऽनुष्टुप् संपन्नः । तेन हैतेन ध्वसा द्वैतवन ईजे मात्स्यो राजा । यत्रैतत् द्वैतवनं सरः । तत् एतद्गाथयाऽभिगीतम्— "चतुर्दश द्वैतवनो राजा संग्रामजिद्धयान् । इंद्राय वृत्रघ्नेऽबध्नात तस्मात् द्वैतवनं सरः "—इति ॥ ९ ॥

चतुर्विंशाः पवमानाः । त्रिवृदभ्यावर्तम् । चतुश्चत्वारिंशाः पवमानाः । एकविंशमभ्यावर्तम् । अष्टाचत्वारिंशाः पवमानाः । त्रयस्त्रिंशमभ्यावर्तम् । आ अग्निष्टोमसामात् । द्वात्रिंशान्युक्थानि । एकविंशः षोडशी । पंचदशी रात्रिः । त्रिवृत् संधिरिति ॥ १० ॥

---

त्रिवृदग्निष्टोम । अत्र त्रिष्वपि दिवसेषु स्तोमान्तराणि उच्यन्ते । तत्र प्रथमेऽहनि अग्निष्टोमः । सप्तदश तृतीयमहः सोक्थकं उक्थ्यानमित्यर्थः । षोडशिस्तोत्रं चैकविंशम् । सन्धिस्तोत्रं त्रिवृदेव । एष अश्वमेधे स्तोत्रियाणां अनुष्टुभि पर्यवसाना भवति । कथं ? अत्र हि सर्वा एव स्तोत्रिया अपि गण्यमाना सप्त शतानि अष्टानवतिश्चानि ( ७९८ ) भवन्ति । तासां नामा द्वात्रिंशता ( ३१ ) भागे अपहृते पञ्चविंशति अनुष्टुभो लभ्यन्ते । अन्त्या तु तत्र द्वाभ्यां ऊना अनुष्टुप् भवति । तथापि " नाक्षरा च्छन्दो व्येत्येकस्मान्न द्वाभ्यां "—(श प ७ १-२ ११)इत्यभिप्राय । तेन हैतेन । अनुष्टुप्सम्पन्नेनाश्वमेधेन च ध्वसा प्रसिद्धेन द्वैतवनो राजा ईजे इष्टवान् । यत्र स्थाने यत्प्रसिद्धमेव एतत् सर्वदा द्वैतवनाख्य सरः । तत् तदेतो हयान् द्वैतवन द्वैतवननाम राजा संग्रामजितः इन्द्राय अबध्नात् । प्राजापत्यानेव चाबध्नात् । सोमैस्तर्पयतीति कृत्वा इन्द्रायावध्नादित्याह । तस्मात् द्वैतवनं सर· सर्वैस्तत्सम्बन्धयो विभक्तिव्यत्ययश्च द्रष्टव्य । यस्मिन् द्वैतवन सर तत्रावध्नादित्यर्थः ॥ ९ ॥

चतुर्विंशा पवमाना । पवमानस्तोत्राणि कल्पितानि यज्ञानामरण्ये प्रवर्त्स्यन्ते । तत्र प्रथमे तावदहनि त्रयोऽपि पवमानाश्चतुर्विंशाः । तत्र अभ्यावर्तेऽस्मिन् अभ्यावर्ते धुर्ये स्तुवते तत् त्रिवृत् पवमानस्यान्तरितानि आज्यस्तोत्राणि त्रिवृन्ति भवन्तीत्यर्थः । द्वितीयेऽहनि चतुश्चत्वारिंशा पवमाना एकविंशमभ्यावर्तम् । तृतीयेऽहनि अष्टाचत्वारिंशा पवमाना त्रयस्त्रिंशमभ्यावर्तम् इत्यादि ॥ १० ॥

( त्ये ) एतद्विष्णोः क्रान्तम् । ( न्ते ) तेन हैतेन भरतो दौःष्यन्तिरीजे तेनेष्ट्वेमां व्यष्टिं व्यानशे येयं भरतानान्तदेतद्गाथयाऽभिगीतमष्टासप्ततिम्भरतो दौःष्यन्तिर्यमुनामनु । गङ्गायाम्वृत्रघ्नेऽबध्नात्पञ्चपञ्चाशतꣳ हयानिति ॥ ११ ॥

( त्य ) अथ द्वितीयया । त्रयस्त्रिꣳशꣳ शतꣳ राजाऽश्वान्बद्ध्वाय मेध्यान् । सौद्युम्निरत्यष्ठादन्यान्मायान्मायवत्तरऽ इति ॥ १२ ॥

( त्यु ) अथ तृतीयया । शकुन्तला नाडपित्यप्सरा भरतन्दधे । परः सहस्रानिन्द्रायाश्वान्मेध्यान्यऽआहरद्विजित्य पृथिवीꣳ सर्वामिति ॥ १३ ॥

---

एतद् विष्णोः क्रान्तम् । तेन हैतेन भरतो दौःष्यन्तिरीजे । तेनेष्ट्वा इमां व्यष्टिं व्यानशे । येयं भरतानाम् । तदेतद् गाथयाऽभिगीतम्–" अष्टासप्ततिं भरतो दौःष्यन्तिर्यमुनामनु । गङ्गायां वृत्रघ्नेऽबध्नात् पञ्चपञ्चाशतं हयान् "–इति ॥ ११ ॥

अथ द्वितीयया–" त्रयस्त्रिंशं शतं राजाऽश्वान् बद्ध्वाय मेध्यान् । सौद्युम्निरत्यष्टाद्न्यानमायान्मायवत्तरः "–इति ॥ १२ ॥

अथ तृतीयया " शकुन्तला नाडपित्यप्सरा भरतं दधे । परः सहस्रानिन्द्रायाश्वान् मेध्यान् य आहरत् विजित्य पृथिवीं सर्वाम् "–इति ॥ १३ ॥

---

एतद्विष्णोः क्रान्तम् । एतत् स्थानविशेषः । क्रान्तं विक्रमणम् । विप्रकृष्टत्वसामान्यात् । यथा हि विष्णोः क्रममाणस्य महत्तराणि पदानि भवन्ति । एवं महत्तराः स्तोमाः । इमां व्यष्टिमानशे । भरतकालादारभ्य कलियुगं यावत् तदा राज्यानुवृत्तिरेषा भरतानामिह यानुवर्तिता व्यष्टिः । या तु द्वात्रिंशतं वै स्वरथा तपयालोक इत्यादि व्यष्टिः । सा विदुषः क्रतुफलरूपा इति द्रष्टव्यम् । अष्टासप्ततिं हयान् अश्वान् यमुनामनु यमुनातीरे अबध्नात् । भरतो दौःष्यन्तिपुत्रः । वृत्रघ्न इन्द्राय गङ्गायां तु गङ्गातीरे । पञ्चपञ्चाशतम् । स अबध्नात् । स मित्र मित्रवत्सलानामभ्युदयोर्नद्याम्नायाम्यां अश्वमेधं यजमान " स्तवनो यावत्प्रतिष्ठामिति "– तदिमं ... ॥ ११ ॥

अथ द्वितीयया । यमुनातीर तद्दिन उभय अपि । य त्रयस्त्रिंशं शतं भवति । तान् त्रयस्त्रिंशं शतं अश्वान् बद्ध्वाय । य इत्यनथर । राजा सुद्युम्नस्यापत्यम् । मायवत्तरः प्रज्ञावत्तरः । अत्यष्ठात् अतीत्य स्थितः । अन्यानमायान् अप्रज्ञान् राज्ञः ॥ १[1] ॥

अथ तृतीयया । शकुन्तला नामाप्सरा नाडपित्नी । सा यदा कण्वाश्रमे भरतं पुत्रं इच्छया तं दधे धारितवती । यश्चक्रवर्ती सन् सकलां पृथिवीं विजित्य मेध्यानश्वान् अश्वार महताऽऽधिकान् आहृतवान् यागार्थं निरिव्वानित्यर्थः । तत्र च त्रयस्त्रिंशं शतं यमुनातीरात्पर्यन्तं ... इति विरोधपरिहार ॥ १३ ॥

---

१ ऐतरेय ब्राह्मणे तु ' बध्नाऽयम् ' इति पाठः । ऐ० ब्रा० ३९ । ९ । ४ । इत्यत्र ॥ मूलकाण्ठ तु ' कृत्व यह् " ( पा० सू० ७ । १ । ४७ ) इति यगागम । ' संभाव्यमस्यै दत्त्वाय ' इत्यत्र ।

( त्यु ) अथ चतुर्थी । महदद्य भरतस्य न पूर्वे नापरे जनाः । दिवम्मर्त्यऽइव बाहुभ्यान्नोदापुः पञ्च मानवाऽइति ॥ १४ ॥

( त्ये ) एकविᳫंशस्तोमेन । ( ८ ) ऋषभो याज्ञतुरऽईजे श्विक्नानाᳫं राजा तदेतद्गाथयाऽभिगीतं याज्ञतुरे यजमाने ब्रह्माणऽऋषभे जनाः । अश्वमेधे धनं लब्ध्वा विभजन्ते स्म दक्षिणाऽ इति ॥ १५ ॥

त्रयस्त्रिᳫंशस्तोमेन । शोणः सात्रासाहऽ ईजे पाञ्चालो राजा तदेतद्गाथयाऽभिगीतᳫं सात्रासाहे यजमानेऽश्वमेधेन तौर्वशाः । उदीरते त्रयस्त्रिᳫंशाः षट्सहस्राणि वर्मिणामिति ॥ १६ ॥

( त्यु ) अथ द्वितीयया । षट्पद् षड्ढा सहस्राणि यज्ञे कोकपितुस्तव । उदीरते त्रयस्त्रिᳫंशाः षट्सहस्राणि वर्मिणामिति ॥ १७ ॥

---

अथ चतुर्थ्या–"महदद्य भरतस्य न पूर्वे नापरे जनाः । दिवं मर्त्य इव बाहुभ्यां नोदापुः पंच मानवाः"–इति ॥ १४ ॥

एकविंशस्तोमेन ऋषभो याज्ञतुर ईजे श्विक्नानां राजा । तदेतत् गाथयाऽभिगीतम्–"याज्ञतुरे यजमाने ब्रह्माण ऋषभे जनाः । अश्वमेधे धनं लब्ध्वा विभजंते स्म दक्षिणाः"–इति ॥ १५

त्रयस्त्रिंशस्तोमेन शोणः सात्रासाह ईजे पाञ्चालो राजा । तदेतद्गाथयाऽभिगीतम्–"सात्रासाहे यजमानेऽश्वमेधेन तौर्वशाः । उदीरते त्रयस्त्रिंशाः षट्सहस्राणि वर्मिणाम्"–इति ॥ १६ ॥

अथ द्वितीयया–"षट्पद् षड्ढा सहस्राणि यज्ञे कोकपितुस्तव । उदीरते त्रयस्त्रिंशाः षट्सहस्राणि वर्मिणाम्"–इति ॥ १७ ॥

---

अथ चतुर्थी । महत्त्वामहत्त्वाभ्यां भरतस्यायाति पञ्च मानवा [illegible] । कीदृशा न पूर्वे तस्मात् भरतात् न वा परे अर्वाञ्च कथमप्युदव एव बाहुभ्यां मर्त्य ॥ १४ ॥

एकविंशस्तोमेन । तत्र त्रिवृति दिवसेषु एकविंश स्तोमो यस्य क्रतोस्तेनैकविंशस्तोमेन ऋषभ इष्टवान् । याज्ञतुरे ऋषभे यजमाने ब्रह्मणो [illegible] अश्वमेधे धनं लब्ध्वा विभक्तवन्तो दक्षिणा ॥ १५ ॥

त्रयस्त्रिंशस्तोमेन । त्रिवृति दिवसेषु त्रयस्त्रिंश स्तोम अस्येति त्रयस्त्रिंश स्तोम तेन सहन् शोणो नाम [illegible] । पाञ्चालदेश एव राजा । तस्य हि अश्वमेधेन यजमाने सन् ईरते उद्गच्छन्ति । के । तौर्वशा यथा । ज्येष्ठ तमभिमृज्यैरभिति । त्रयस्त्रिंश स्तोमा उद्गच्छन्ति । स हि शोण त्रयस्त्रिंशदात्रिव स्तोमान् त्रिवृति दिवसेषु प्रयुक्ते नान्यानिति । उद्गच्छन्तीत्याह–षट्सहस्राणि सहस्राणि । वानर [illegible] कवचिनां अश्वसादिनां उदीरते इति वर्तते । वर्मिणामा एव द्रष्टव्या । राजपुत्र कवचिन इत्यभिप्रायोऽति- शतानीमान अन्य एव ॥ १६ ॥

अथ द्वितीया । कोको नाम्नेन्वर्थ । के ते अश्वा उदीरते इति प्रथमायां गाथायामुक्त । तदन्वत्रानु-

( स्तु ) अथ तृतीयया । सात्रासाहे यजमाने पाञ्चाले राज्ञि सुस्रजि । अमाद्यदिन्द्रः सोमेनातृप्यन्ब्राह्मणा धनैरिति ॥ १८ ॥

गोविनतेन शतानीकः । सात्राजितऽ ईजे काश्यस्याश्वमादाय ततो हैतद्दर्वाक्काशयोऽग्नीऽन्नादधत आत्तसोमपीथाः स्मऽइति वदन्तः ॥ १९ ॥

( स्तु ) तस्य विधा । चतुर्विꣳशाः पवमानास्त्रिवृदभ्यावर्त्तश्चतुश्चत्वारिꣳशाः पवमानाऽ एकविꣳशान्याज्यानि त्रिणवान्युक्थान्येकविꣳशानि पृष्ठानि षट्त्रिꣳशाः पवमानास्त्रयस्त्रिꣳशमभ्यावर्त्तमाग्निष्टोमसामादेकविꣳशान्युक्थान्येकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ २० ॥

---

अथ तृतीयया–"सात्रासाहे यजमाने पांचाले राज्ञि सुस्रजि । अमाद्यदिंद्रः सोमेना तृप्यन् ब्राह्मणा धनैः"–इति ॥ १८ ॥

गोविनतेन शतानीकः सात्राजित ईजे काश्यस्याश्वमादाय । ततो हैतद्दर्वाक् काशयोऽग्नी न्नादधत । आत्तसोमपीथाः स्मः । इति वदंतः ॥ १९ ॥

तस्य विधा । चतुर्विंशाः पवमानाः । त्रिवृदभ्यावर्तः । चतुश्चत्वारिंशाः पवमानाः । एक-विंशान्याज्यानि । त्रिणवान्युक्थानि । एकविंशानि पृष्ठानि । षट्त्रिंशाः पवमानाः । त्रयस्त्रिंश-मभ्यावर्तम् । आ अग्निष्टोमसामात । एकविंशान्युक्थानि । एकविंशः षोडशी । पंचदशी रात्रिः । त्रिवृत्संधिः ॥ २० ॥

---

धनैः, तत्र तत्र परिमाण नोक्तम् । अत्र षट्त्रिंशत्सहस्राणि दक्षिणा अनुचरभूतानि उद्गच्छन्नित्याह–त्रयस्त्रिंशा अश्वा उदीरते षट्सहस्राणि वर्मिणा इत्यादिनात्रमु न उक्तानि ॥ ’७ ॥ १८ ॥

गोविनतेन । गोविनतो नाम कश्चन स्तोमविशेष अश्वमेधे । तेन शतानीको नाम सत्राजितोऽपत्यम् ईजे । काशेरपत्य काश्य काश्यस्य स्वभूत स्वाश्वमपायं कश्चित्मध्यमागाप युद्धे विनिश्च ततश्चारभ्य तद्वाणि काशाय कामिवाक्या राजान अग्नीन्नादधत । किम ? आत्त अपहृत सोमपीथो येषा ते आत्तसोमपीथा आत्तसोमा स्म भवाम । किमस्मा न जिग्मि वे अश्वमेध एव परत सोमपीथाय तस्मिन्नपहृते सर्व एव सोमपीथो ऽपहृत इत्यभिप्राय ॥ १९ ॥

तस्य विधा । तस्य गोविनतस्य विधा विधान स्तोमप्रकारो वक्ष्यत इति शेष । चतुर्विंशा. पवमाना । इत्यादि सर्वमेत्यजनि । चतुश्चत्वारिंशा इत्यादि द्वितीयमेत्यजनि । तृचानुक्त्वा एकविंशानि पृष्ठानि इति क्रमभेदो भवत । न तावदर्पमनुयोग । षट्त्रिंशा पवमाना इति तृतीयमेत्यजनि । तथा इत्यम् (?) ॥ २० ॥

(स्तु) तदेतद्गाथयाऽभिगीतम्। (पृ॑) शतानीकः समन्तासु मेध्यꣳ सात्राजितो हयम्। आदत्त यज्ञं काशीनाम्भरतः सत्वतामिवेति ॥ २१ ॥

(त्यु) अथ द्वितीयया। श्वेतꣳ समन्तासु वशञ्चरन्तꣳ शतानीको धृतराष्ट्रस्य मेध्यम्। आदाय सह्वा दशमास्यमश्वꣳ शतानीको गोविनतेन हेजऽ इति ॥ २२ ॥

(त्यु) अथ चतुर्थ्या। महदद्य भरतानान्न पूर्वे नापरे जनाः। दिवं मर्त्यऽ इव पक्षाभ्यान्नोदापुः सप्त मानवाऽइति ॥ २३ ॥

(त्य) अथातो दक्षिणानाम्। (म्भु) मध्यम्प्रतिराष्ट्रस्य यदन्यद्भूमेश्च पुरुषेभ्यश्च ब्राह्मणस्य च वित्तात्प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुस्तदेव होतृकाऽअन्वाभक्ताः ॥ २४ ॥

---

तदेतद्गाथयाऽभिगीतम्—" शतानीकः समंतासु मेध्यं सात्राजितो हयम्। आदत्त यज्ञं काशीनां भरतः सत्वतामिव "—इति ॥ २१ ॥

अथ द्वितीयया—" श्वेत समंतासु वश चरन शतानीको धृतराष्ट्रस्य मेध्यम्। आदाय सह्वा दशमास्यमश्वं शतानीको गोविनतेन हेजे " इति। २२ ॥

अथ चतुर्थ्या—" महदद्य भरतानां न पूर्वे नापरे जनाः। दिवं मर्त्य इव पक्षाभ्यां नोदापुः सप्त मानवाः "—इति ॥ २३ ॥

अथातो दक्षिणानाम्। मध्य प्रति राष्ट्रस्य। यदन्यद् भूमेश्च पुरुषेभ्यश्च ब्राह्मणस्य च वित्तात्। प्राची दिक् होतुः दक्षिणा ब्रह्मणः, प्रतीची अध्वर्योः, उदीची उद्गातुः, तदेव। होतृका अन्वाभक्ताः ॥ २४ ॥

(ऽ) उदयनीयायाꣳ संस्थितायाम् । (मु) एकविꣳशतिम्वशा ऽअनूबन्ध्या ऽआलभते मैत्रावरुणीर्वैश्वदेवीर्बार्हस्पत्या ऽएतासान्देवताना-माप्त्यै तद्यद्बार्हस्पत्या ऽअन्त्या भवन्ति ब्रह्म वै बृहस्पतिस्तदु ब्रह्मण्ये-वान्ततः प्रतितिष्ठति ॥ २५ ॥

(त्यु) अथ यदेकविꣳशतिर्भवन्ति । (न्त्ये) एकविꣳशो वा ऽएष य ऽएष तपति द्वादश मासाः पञ्चर्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविꣳश ऽएतामभिसम्पदम् ॥ २६ ॥

(मु) उदवसानीयायाꣳ संस्थितायाम् । (श्रु) चतस्रश्च जायाः कुमारीम्पञ्चमीञ्चत्वारि च शतान्यनुचरीणां यथासमुदितन्दक्षिणा-न्ददाति ॥ २७ ॥

(त्य) अथोत्तरꣳ सम्वत्सरमृतुपशुभिर्यजते । षड्भिराग्नेयैर्वसन्ते षड्भिरैन्द्रैर्ग्रीष्मे षड्भिः पार्जन्यैर्वा मारुतैर्वा वर्षासु षड्भिर्मैत्रा-

उदयनीयायां संस्थितायाम्, एकविंशतिं वशा अनूबन्ध्या आलभते । मैत्रावरुणीः, वैश्वदेवीः, बार्हस्पत्याः । एतासां देवतानामाप्त्यै । तद्यत् बार्हस्पत्या अंत्या भवंति । ब्रह्म वै बृहस्पतिः । तदु ब्रह्मण्येवांततः प्रतितिष्ठति ॥ २५ ॥

अथ यदेकविंशतिर्भवंति । एकविंशो वा एषः । य एष तपति । द्वादश मासाः । पंचर्तवः । त्रय इमे लोकाः । असावादित्य एकविंशः । एतामभिसंपदम् ॥ २६ ॥

उदवसानीयायां संस्थितायाम्, चतस्रश्च जायाः, कुमारीं पंचमीम्, चत्वारि च शतान्यनुचरीणां यथासमुदितम् । दक्षिणां ददाति ॥ २७ ॥

अथोत्तरं संवत्सरमृतुपशुभिर्यजते । षड्भिराग्नेयैर्वसंते । षड्भिरैन्द्रैर्ग्रीष्मे । षड्भिः पार्जन्यैर्वा मारु-

वरुणैः शरदि षड्भिरैन्द्रावैष्णवैर्हेमन्ते षड्भिरैन्द्राबार्हस्पत्यैः शिशिरे षडृतवः सम्वत्सरऽऋतुष्वेव सम्वत्सरे प्रतितिष्ठति षट्त्रिꣳशदेते पशवो भवन्ति षट्त्रिꣳशदक्षरा बृहती बृहत्यामधि स्वर्गो लोकः प्रतिष्ठितस्तद्यन्तो बृहत्यैव च्छन्दसा स्वर्गे लोके प्रतितिष्ठति ॥ २८ ॥

इति तृतीयप्रपाठके षष्ठं ब्राह्मणम् ॥ १३।३।६ ॥ (५-४) ॥

इति पञ्चमोऽध्यायः समाप्तः ॥ १३ । ५ ॥

कण्डिकासंख्या ॥ ८० ॥

इति तृतीयः प्रपाठकश्च समाप्तः ॥ १३-३ ॥

कण्डिकासंख्या ॥ १०६ ॥

---

सैत्रं वर्षासु । षड्भिर्मैत्रावरुणैः शरदि । षड्भिरैन्द्रावैष्णवैर्हेमन्ते । षड्भिरैन्द्राबार्हस्पत्यैः शिशिरे । षड् ऋतवः संवत्सरः । ऋतुष्वेव संवत्सरे प्रतितिष्ठति । षट्त्रिंशदेते पशवो भवंति । षट्त्रिंशदक्षरा बृहती । बृहत्यामधि स्वर्गो लोकः प्रतिष्ठितः । तद्यंतो बृहत्यैव च्छंदसा स्वर्गे लोके प्रतितिष्ठति ॥ २८ ॥

---

यथाम्नुदिनमिति अन्वर्थाभिधममान । यत्रापि भागश्च सानुवर्तिभि गतम् । यात्मार्थी तु क्वतु प्राप्ता, वचनान्तरेण अभ्यर्थेव दर्शने ॥ २७ ॥ २८ ॥

इति श्रीनगाचार्यहरिस्वामिन. कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे पञ्चमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( १३ । ५ । ४ ) ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरिः ।
श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूम्यां विक्रमार्केण कन्दर्शां कनकवेदिकाम् ।
दानाध्यक्षस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे पञ्चमोऽध्यायः समाप्तः ॥ १३-५ ।

---

# अथ षष्ठेऽध्याये प्रथमं ब्राह्मणम् ।
# चतुर्थप्रपाठके च प्रथमं ब्राह्मणम् ।



पुरुषो ह नारायणोऽकामयत । (ता) अतितिष्ठेयꣳ सर्वाणि भूतान्यहमेवेदꣳ सर्वꣳ स्यामिति स एतम्पुरुषमेधम्पञ्चरात्रं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वाऽत्यतिष्ठत्सर्वाणि भूतानीदꣳ सर्वमभवदतितिष्ठति सर्वाणि भूतानीदꣳ सर्वम्भवति य एवं विद्वान्पुरुषमेधेन यजते यो वैतदेवम्वेद ॥ १ ॥

तस्य त्रयोविꣳशतिर्दीक्षाः । (०) द्वादशोपसदः पञ्च सुत्याः स एष चत्वारिꣳशद्रात्रः सदीक्षोपसत्कश्चत्वारिꣳशदक्षरा विराट्तद्विराजमभिसम्पद्यते ततो विराडजायत विराजोऽअधि पूरुष ऽइत्येषा वै सा विराडेतस्या ऽएवैतद्विराजो यज्ञम्पुरुषञ्जनयति ॥ २ ॥

---

अथ पुरुषमेधः ।

पुरुषो ह नारायणोऽकामयत । अतितिष्ठेयं सर्वाणि भूतानि । अहमेवेदं सर्वं स्यामिति । स एतं पुरुषमेधं पंचरात्रं यज्ञक्रतुमपश्यत् । तमाहरत् । तेनायजत । तेनेष्ट्वा, अत्यतिष्ठत् सर्वाणि भूतानि । इदं सर्वमभवत् । अतितिष्ठति सर्वाणि भूतानि । इदं सर्वं भवति । य एवं विद्वान् पुरुषमेधेन यजते । यो वा एतदेवं वेद ॥ १ ॥

तस्य त्रयोविंशतिर्दीक्षाः । द्वादशोपसदः । पंच सुत्याः । स एष चत्वारिंशद्रात्रः सदीक्षोपसत्कः । चत्वारिंशदक्षरा विराट् । तद्विराजमभिसंपद्यते । "ततो विराडजायत विराजो अधि पूरुषः"–(वा. स ३१ । ५) इति । एषा वै सा विराट् । एतस्या एवैतद्विराजो यज्ञं पुरुषं जनयति ॥ २ ॥

---

पुरुषो ह नारायणोऽकामयत । अत्राध्याये पुरुषमेध उच्यते । परत्र सर्वमेध । अधुना उपन्यस्तस्याऽऽ चत्वारिंशतां रात्रीणां समूह सह दीक्षोपसद्भिरिति चत्वारिंशद्रात्रो भवति । ततस्तत्पूर्वोपन्यस्तपञ्चरात्रत्वेन विनिहत्यम् अन्यनिप्राय । चत्वारिंशदक्षरा विराट् यत । तत् विराजमभिसंपद्यत इति । तत् तेन चत्वारिंशद्रात्र विराजमुपपद्यते । मगध्ने च राजा मन्त्रब्राह्मण इति महर्षपुराणादिमहाभाष्य मतान्तरे शयनाम्यायां कामितवान । सर्वाणि भूतानि । धर्मज्ञानवैराग्यैश्वर्यप्राप्तिप्राकाम्यादिभिर्गुणैः अतीत्य तिष्ठेयम् । इतरकर्तव्य स्यामित्यर्थ । अहमेव च इदं सर्वं चेतनाचेतनं स्यां भवेयम्, मम चित्तानुवर्ति इदं सर्वं स्यादिति । स एतं प्रकारं प्रमाणं पुरुषमेधाख्यं यज्ञक्रतुं एतच्छास्त्रानुसारेणैव, नारायण प्रादुर्भावम् य अपश्यत्,

ता वाऽ एताः । ( श्रु ) चतस्रो दशतो भवन्ति तद्यदेताश्चतस्रो दशतो भवन्त्येषां चैव लोकानामाप्त्यै दिशाञ्चेममेव लोकम्प्रथमया दशताऽऽप्नुवन्नन्तरिक्षन्द्वितीयया दिवन्तृतीयया दिशश्चतुर्थ्या तथैवैतद्यजमानऽ इममेव लोकम्प्रथमया दशताऽऽप्नोत्यन्तरिक्षन्द्वितीयया दिवन्तृतीयया दिशश्चतुर्थ्यैतावद्वाऽ इदᳪ सर्व्वं यावदिमे च लोका दिशश्च सर्व्वम्पुरुषमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ ३ ॥

( ब्राऽण ) एकादशाग्नीषोमीयाः पशवऽउपवसथे । तेषाᳪ समानं कर्म्मैकादश यूपाऽएकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्य्यं त्रिष्टुब्वज्रेणैवैतद्वीर्य्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ ४ ॥

ता वा एताः । चतस्रो दशतो भवन्ति । तद्यदेताश्चतस्रो दशतो भवति । एषा चैव लोकानामाप्त्यै । दिशां च । इममेव लोकं प्रथमया दशताऽऽप्नुवन् । अंतरिक्षं द्वितीयया । दिवं तृतीयया । दिशश्चतुर्थ्या । तथैवैतद्यजमान इममेव लोकं प्रथमया दशताऽऽप्नोति । अन्तरिक्षं द्वितीयया । दिवं तृतीयया । दिशश्चतुर्थ्या । एतावद्वा इदं सर्वम् । यावदिमे च लोका दिशश्च । सर्वं पुरुषमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ ३ ॥

एकादशाग्नीषोमीयाः पशव उपवसथे । तेषां समानं कर्म । एकादश यूपाः । एकादशाक्षरा त्रिष्टुप् । वज्रस्त्रिष्टुप् । वीर्यं त्रिष्टुप् । वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ ४ ॥

(तऽऐ)ऐकादशिनाः सुत्यासु पशवो भवन्ति । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्य्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्य्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ ५ ॥

यद्वेवैकादशिना भवन्ति । (न्त्ये) एकादशिनी वा ऽइदᳬ सर्व्वं प्रजापतिर्ह्येकादशिनी सर्व्वᳬ हि प्रजापतिः सर्व्वं पुरुषमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ ६ ॥

स वाऽएष पुरुषमेधः । पञ्चरात्रो यज्ञक्रतुर्भवति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः सम्वत्सरो यत्किञ्च पञ्चविधमधिदैवतमध्यात्मन्तदेनेन सर्व्वमाप्नोति ॥ ७ ॥

तस्याग्निष्टोमः प्रथममहर्भवति ।(त्य) अथोक्थ्योऽथातिरात्रोऽथोक्थ्योऽथाग्निष्टोमः स वाऽ एषऽ उभयतोज्योतिरुभयतऽउक्थ्यः ॥ ८ ॥

---

ऐकादशिनाः सुत्यासु पशवो भवंति । एकादशाक्षरा त्रिष्टुप् । वज्रस्त्रिष्टुप् । वीर्यं त्रिष्टुप् । वज्रेणैवैतद्वीर्येण । यजमानः ~ पाप्मानमपहते ॥ ५ ॥

यद्वेवैकादशिना भवंति । एकादशिनी वा इदं सर्वम् । प्रजापतिर्ह्येकादशिनी । सर्वं हि प्रजापतिः । सर्वं पुरुषमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ ६ ॥

स वा एष पुरुषमेधः पंचरात्रो यज्ञक्रतुर्भवति । पाङ्क्तो यज्ञः । पाङ्क्तः पशुः । पंचर्तवः संवत्सरः । यत्किंच पंचविधमधिदेवतमध्यात्मम् । तदेनेन सर्वमाप्नोति ॥ ७ ॥

तस्याग्निष्टोमः प्रथममहर्भवति । अथोक्थ्यः । अथातिरात्रः । अथोक्थ्यः । अथाग्निष्टोमः । स वा एष उभयतोज्योतिः । उभयतउक्थ्यः ॥ ८ ॥

---

लोके प्रथमतो दशनाऽनुवर्तिनि । न पूर्वं अपि पुरुषा । एतदेव यज्ञविराजा इमा दैवीं विराजमाप्नुवन्तत तस्यापि यजमानस्य पुरुषत्व तत्र तस्मात् इत्यभिप्राय । "तथैवैतद्यजमान" इत्युपसंहारवचनम् । एतावद्वा इदं सर्वं पुरुषमेध इति साधुरि दिक्सामान्यात् त्रिलोकात्मक एवेत्यभिप्राय ॥ २–५ ॥

प्रथममन्त्रवाचनाय सर्वं भवनाति तस्यैवायमुपसंहार । न तु फलांतर इति दर्शयति–सर्वं पुरुषमेध इति । सोऽपि दशात्मकतुसमस्तसमाप्त्या त्रिगायात्मक एवेत्यभिप्राय ॥ ६ ॥

स वा एष पुरुषमेध । अत्र मासत्वावस्थयोपासना उच्यते ॥ ७ ॥

तस्याग्निष्टोम । अत्र कर्तिराहय अह्वा तस्या आध्यात्माधिदैवोपासना उच्यते । उभयतोज्योतिरिति । अग्निरेव यदग्निष्टोमो ज्योतिरित्यभिप्राय । उभयतउक्थ्य इति । मध्यापेक्षया उभयत उक्थ्यौ इत्याशय ॥८॥

---

* 'यजमान पाप्मानम्" इत्यनया पदद्वयमध्य "पुरस्तात्" इति पद जर्मनदेशीयमुद्रितपुस्तकेऽधिक वर्तते यस्मदुपलब्धमातृकासु तु न स्ति । अनल्पचिन्त्यम् ।

१—अभयत अवसायतिरात्र उक्थ्ययज्ञ । (का श्रौ सू २१ । ३ ।) (एतानि संस्थान्यहानि । १ अग्निष्टोम २ उक्थ्य ३ अतिरात्र ४ उक्थ्य ५ अग्निष्टोम इति यावत् ।) यूपैकादशिनी भवति । 'तत–नाभ्याश्रमेधे' । (का श्रौ सू २१।४।५।) (मध्यदे सुत्यासु भवतीत्यर्थ ।)

( कथ्यो ) यवमध्यः पञ्चरात्रो भवति । ( तौ ) इमे वै लोकाः पुरुषमेधऽउभयतोज्योतिषो वाऽ इमे लोकाऽ अग्निनेतऽआदित्येनामुतस्तस्मादुभयतोज्योतिरन्नमुक्थ्यऽआत्माऽतिरात्रस्तद्देताऽउक्थ्याऽतिरात्रमभितो भवतस्तस्मादयमात्माऽन्नेन परिवृतोऽथ यदेष वर्षिष्ठोऽतिरात्रोऽह्नांथँ स मध्ये तस्माद्यवमध्यो युते ह वै द्विषन्तम्भ्रातृव्यमयमेवास्ति नास्य द्विषन्भ्रातृव्यऽइत्याहुर्यऽएवम्वेद ॥ ९ ॥

तस्यायमेव लोकः प्रथममहः । ( १ ) अयमस्य लोको वसन्तऽऋतुर्यदूर्ध्वमस्माल्लोकादर्वाचीनमन्तरिक्षात्तद्द्वितीयमहस्तद्दस्य ग्रीष्मऽ ऋतुरन्तरिक्षमेवास्य मध्यममहरन्तरिक्षमस्य वर्षाशरदावृतू यदूर्ध्वमन्तरिक्षादर्वाचीनन्दिवस्तच्चतुर्थमहस्तद्दस्य हेमन्तऽऋतुर्द्यौरेवास्य पञ्चममहर्द्यौरस्य शिशिरऽऋतुरित्यधिदेवतम् ॥ १० ॥

( मु ) अथाध्यात्मम् । ( म्र ) प्रतिष्ठैवास्य प्रथममहः प्रतिष्ठोऽस्य वसन्तऽऋतुर्यदूर्ध्वम्प्रतिष्ठायाऽअर्वाचीनम्मध्यात्तद्द्वितीयमहस्तद्दस्य ग्रीष्मऽऋतुर्म्मध्यमेवास्य मध्यममहर्म्मध्यमस्य वर्षाशरदावृतू यदूर्ध्वं

यवमध्यः पंचरात्रो भवति । इमे वै लोकाः पुरुषमेधः । उभयतोज्योतिषो वा इमे लोकाः । अग्निनेतः । आदित्येनामुतः । तस्मादुभयतोज्योतिः । अन्नमुक्थ्यः । आत्माऽतिरात्रः । तद्देता उक्थ्यावतिरात्रमभितो भवतः । तस्मादयमात्माऽन्नेन परिवृतः । अथ यदेष वर्षिष्ठोऽतिरात्रः । अह्नां स मध्ये । तस्माद्यवमध्यः । युते ह वै द्विषंतं भ्रातृव्यम् । अयमेवास्ति । नास्य द्विषन् भ्रातृव्य इत्याहुः । य एवं वेद ॥ ९ ॥

तस्यायमेव लोकः प्रथममहः । अयमस्य लोको वसंत ऋतुः । यदूर्ध्वमस्माल्लोकादर्वाचीनमंतरिक्षात् । तत् द्वितीयमहः । तदस्य ग्रीष्म ऋतुः । अंतरिक्षमेवास्य मध्यममहः । अंतरिक्षमस्य वर्षाशरदावृतू । यदूर्ध्वमन्तरिक्षादर्वाचीनं दिवः । तच्चतुर्थमहः । तदस्य हेमंत ऋतुः । द्यौरेवास्य पंचममहः । द्यौरस्य शिशिर ऋतुः । इत्यधिदैवतम् ॥ १० ॥

अथाध्यात्मम् । प्रतिष्ठैवास्य प्रथममहः । प्रतिष्ठा अस्य वसंत ऋतुः । यदूर्ध्वं प्रतिष्ठाया अर्वाचीनं मध्यात् । तत् द्वितीयमहः । तदस्य ग्रीष्म ऋतुः । मध्यमेवास्य मध्यममहः । मध्यमस्य वर्षाशरदावृतू । यदूर्ध्वं मध्यादर्वाचीनं शीर्ष्णः । तच्चतुर्थमहः । तदस्य हेमन्त ऋतुः । शिशिर

'यवमध्य.' । यवस्येव मध्यम्योऽपदेर्वानि, इमे वै लोका. पुरुषमेध इति विधिनत्र इत्यधिदैवतवचनम् । अन्नमुक्थ्य', आत्माऽतिरात्र इत्याध्यात्मवचनम् । अन्नमुक्थ्यः परिवृतत्वादुत्थान् । आत्मा अतिरात्रः मध्यत्वात्

मुध्यादवाचीनᳫँ शीर्ष्णस्तुच्चतुर्थमुहस्तुद्रस्य हेमन्तऽऋतुः शिरऽएवास्य पञ्चममुहः शिरोऽस्य शिशिरऽऋतुरेवमिमे च लोकाः सम्वत्सरश्चात्मा च पुरुषमेधमभिसम्पद्यन्ते सुर्व्वम्वाऽइमे लोकाः सुर्वᳫँ सम्वत्सरः सुर्व्वमात्मा सुर्व्वम्पुरुषमेधः सुर्व्वस्याप्त्यै सुर्व्वस्यावरुद्ध्यै ॥ ११ ॥

इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ १३।४।१ ॥ ( ६।१ ) ॥

अथ युस्मात्पुरुषमेधो नाम । (मि) इमे वै लोकाः पूरयमेव पुरुषो योऽयम्पवते सोऽस्याम्पुरि शेते तुस्मात्पुरुषस्तुस्य यदेषु लोकेष्वन्नन्तदस्यान्नम्मेधस्तद्युदस्यैतदन्नम्मेधस्तुस्मात्पुरुषमेधोऽयो युदस्मिन्मेध्यान्पुरुषानालभते तुस्माद्वेव पुरुषमेधः ॥ १ ॥

( स्ता ) तान्वै मध्यमेऽहन्नालभते । ( तेऽन्तु ) अन्तुरिक्षम्वै मध्यममुहरन्तुरिक्षमु वै सुर्व्वेषाम्भूतानामायतनमुथोऽअन्नम्वाऽएते पशवऽउदरम्मध्यममुहरुदरे तदन्नन्दधाति ॥ २ ॥

---

एवास्य पञ्चममहः । शिरोऽस्य शिशिर ऋतुः । एवमिमे च लोकाः संवत्सरश्च आत्मा च पुरुषमेधमभिसंपद्यते । सर्वं वा इमे लोकाः । सर्वं संवत्सरः । सर्वमात्मा । सर्वं पुरुषमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ ११ ॥

अथ यस्मात् पुरुषमेधो नाम । इमे वै लोकाः पूः । अयमेव पुरुषः । योऽयं पवते । सोऽस्या पुरि शेते । तस्मात् पुरुषः । तस्य यदेषु लोकेष्वन्नम् । तदस्यान्नं मेधः । तद्यदस्यैतदन्नं मेधः । तस्मात् पुरुषमेधः । अथो यदस्मिन्मेध्यान्पुरुषानालभते । तस्मादेव पुरुषमेधः ॥ १ ॥

तान्वै मध्यमेऽहन्नालभते । अंतरिक्षं वै मध्यममहः । अंतरिक्षमु वै सर्वेषां भूतानामायतनम् । अथो अन्नं वा एते पशवः । उदरं मध्यममहः । उदरे तदन्नं दधाति ॥ २ ॥

---

महश्चाच अने अयोऽन्येन । अथ यदेव वायव इति यवम यदान्वनिर्वचनम् । युनेह वै दयुपासनात लवचन [illegible] । युते आमना भिथ्रनति स्वीय करोति भ्रातृव्यः अनमवोपासको ऽस्ति । त्रिवर्गसपत्न । अन्य द्विषत् भ्रातृव्यो नास्ति त्रिवर्गहितवान् । इत्येवमन्ये आहु ॥ ९–११ ॥

इति श्रीमदाचार्यहरस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे
षष्ठेऽध्याये प्रथमं ब्राह्मणम् ॥ १३ । ६ । १ ॥

अथ यस्मात् । अधाधिदैविकं आधिभौतिकं च निर्वचनं पुरुषमेधशब्दस्य क्रियते ॥ १ ॥ २ ॥

तान्वै दशदशालभते। दशाक्षरा विराड्विराड्ड कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै ॥ ३ ॥

( ह्याऽए ) एकादश दशतऽआलभते। ( तऽए ) एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यं त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानो मध्यतः पाप्मानमपहते ॥ ४ ॥

( तेऽष्टा )अष्टाचत्वारिꣳशतम्मध्यमे यूपऽआलभते। ( तेऽष्टा ) अष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्द्धे ॥५॥

( न्द्वऽए ) एकादशैकादशेतरेषु । ( ए्वे ) एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यं त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानोऽभितः पाप्मानमपहते ॥६॥

---

तान्वै दशदशालभते। दशाक्षरा विराट्। विराड्ड कृत्स्नमन्नम्। कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै॥३॥

एकादश दशत आलभते। एकादशाक्षरा त्रिष्टुप्। वज्रस्त्रिष्टुप्। वीर्यं त्रिष्टुप्। वज्रेणैवैतद्वीर्येण यजमानो मध्यतः पाप्मानमपहते ॥ ४ ॥

अष्टाचत्वारिंशतं मध्यमे यूप आलभते। अष्टाचत्वारिंशदक्षरा जगती। जागताः पशवः। जगत्यैवास्मै पशूनवरुंधे ॥ ५ ॥

एकादशैकादशेतरेषु। एकादशाक्षरा त्रिष्टुप्। वज्रस्त्रिष्टुप्। वीर्यं त्रिष्टुप्। वज्रेणैवैतद्वीर्येण यजमानोऽभितः पाप्मानमपहते ॥ ६ ॥

स्त्वाऽ इदᳬं सर्वᳬं सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्याऽ-
इत्थमसीत्थमसीत्युपस्तौत्येवैनमेतन्महयत्येवाथो यथैव तथैनमेतदाह
तत्पर्य्यग्निकृताः पशवो बभूवुरसंज्ञप्ताः ॥ १२ ॥

( ८ ) अथ हैनम्वागभ्युवाद । पुरुष मा सन्तिष्ठिपो यदि सᳬंस्थापयि-
ष्यसि पुरुषऽएव पुरुषमत्स्यतीति तान्पर्य्यग्निकृतानेवोदसृजत्तद्देवत्याऽ
आहुतीरजुहोत्ताभिस्ता देवताऽअप्रीणात्ताऽएनम्प्रीताऽअप्रीणन्त्सर्वैः
कामैः ॥ १३ ॥

---

इदं सर्वम् । सर्वं पुरुषमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै । इत्थमसीत्थमसीत्युपस्तौत्येवैनमेतन्महय-
त्येव । अथो यथैव तथैनमेतदाह । तत्पर्यग्निकृताः पशवो बभूवुः असंज्ञप्ताः ॥ १२ ॥

अथ हैन वागभ्युवाद । पुरुष मा सन्तिष्ठिप । यदि संस्थापयिष्यसि । पुरुष एव पुरुष-
मत्स्यतीति । तान् पर्यग्निकृतानेवोदसृजत् । तद्देवत्या आहुतीरजुहोत् । ताभिस्ता देवता अप्री
णात् । ता एन प्रीता अप्रीणन् सर्वैः कामैः ॥ १३ ॥

---

[illegible] नारायणेन सूक्तेन [illegible]ऽभिष्टौतु [illegible] । [illegible] नारायणं एतेन सूक्तेन साक्षात्
[illegible] । तत्र च पुरुषसूक्ता [illegible] । पुरुष एवेदं सर्व " " [illegible] "
[illegible] " इत्यादिवचन । ततश्च अनेन सूक्तेन नारायणाभिष्टवात् [illegible] तदभि-
[illegible] वा पुरुषा पशव अभिष्टूयन्त [illegible] पुरुषेण नारायणेनाभि[illegible]नाति । अन्ये तु
[illegible] नारायणा[illegible] सूक्तम् [illegible] नारायणम् । ततश्च [illegible] पुरुष [illegible] सूक्तेन पुरुषेण
नारायणेन [illegible]ति । तत्र [illegible] प्रकृतिभूमिमभिन एव पुरुषाणाम[illegible] ति वाक्यम् । इत्थमसीत्य
[illegible] मवति । [illegible] महत्त्विरा [illegible]
[illegible] भवति [illegible] नारायण एतत् ।
[illegible] गौणम् [illegible]
[illegible] सूक्तस्य [illegible] । अधुना व्युत्पादनदृष्ट्या
अनुगत[illegible] यथैव । [illegible] "[illegible] (?) नारायणमतमाह ।
[illegible] ) इति । ततश्चेत्थमसीति
[illegible] नारायण सूक्त [illegible] । [illegible] । तत्र कथमत-
सूक्त [illegible] । [illegible] पुरुषस्य [illegible] । इत्थमसि नारायण इति ।
[illegible] पर्यग्निकृता पुरुषपशवः ॥ १२ ॥

[illegible] पुरुष । एतान् पुरुषपशून् मा [illegible] उदङ्कामिष्यनादि
[illegible] मा कुरु [illegible] । [illegible] । तत [illegible] लोकेऽपि पुरुष पुरुष

( ग्र ) आज्येन जुहोति । तेजो वाऽआज्यन्तेजसैवास्मिंस्तत्तेजो दधाति ॥ १४ ॥

( त्यु ) एकादशिनैः सुᳪँस्थापयति । (त्ये) एकादशाक्षरा त्रिष्टुब्वज्त्र-स्त्रिष्टुब्वीर्य्यन्त्रिष्टुब्वज्त्रेणैवैतद्वीर्य्येण यजमानः पाप्मानमपहते ॥ १५ ॥

( तऽउ ) उदयनीयायाᳪँ सुᳪँस्थितायाम् । ( मे ) एकादश वशा-ऽअनूबन्ध्याऽआलभते मैत्रावरुणीर्वैश्वदेवीर्बार्हस्पत्याऽएतासान्देवताना-माप्त्यै तद्यद्बार्हस्पत्याऽअन्त्या भवन्ति 'ब्रह्म वै बृहस्पतिस्तदु ब्रह्मण्ये-वान्ततः प्रतितिष्ठति ॥ १६ ॥

( त्यु ) अथ यदेकादश भवन्ति । ( न्त्ये ) एकादशाक्षरा त्रिष्टुब्वज्त्र-स्त्रिष्टुब्वीर्य्यन्त्रिष्टुब्वज्त्रेणैवैतद्वीर्य्येण यजमानोऽन्ततः पाप्मानमपहते त्रैधा-तव्युदवसानीयाऽसावेव बन्धुः ॥ १७ ॥

---

आज्येन जुहोति । तेजो वा आज्यम् । तेनसैवास्मिन् तत्तेजो दधाति ॥ १४ ॥

ऐकादशिनैः संस्थापयति । एकादशाक्षरा त्रिष्टुप् । वज्रस्त्रिष्टुप् । वीर्यं त्रिष्टुप् । वज्रेणैवै तद्वीर्येण यजमानः पाप्मानमपहते ॥ १५ ॥

उदयनीयाया संस्थितायाम्, एकादश वशा अनूबंध्या आलभते–मैत्रावरुणीः, वैश्वदेवीः, बार्हस्पत्याः । एतासां देवतानामाप्त्यै । तत् यत् बार्हस्पत्या अंत्या भवंति । ब्रह्म वै बृहस्पतिः । तत् उ ब्रह्मण्येवान्ततः प्रतितिष्ठति ॥ १६ ॥

अथ यदेकादश भवंति । एकादशाक्षरा त्रिष्टुप् । वज्रस्त्रिष्टुप् । वीर्यं त्रिष्टुप् । वज्रेणैवैतद्वीर्येण यजमानोऽन्ततः पाप्मानमपहते । त्रैधातव्युदवसानीया । असावेव बंधुः ॥ १७ ॥

---

मन्थयिष्यति । तत्रायुक्तमित्यभिप्राय । तान्पर्यग्निकृतानेवोदसृजन्दित्यादि एवमुपसर्हर्तव्यम् । तानेतान् पर्यग्निकृतानेवोत्सृजन्ति । तदेवया आहुतीर्जुहोति इत्यादि याश्च तदेवत्या आहुता ता आज्येन जुहोति विष्ट कद्रुनम्यतरे जुहोतीत्येव तु वचनान्तरात् ॥ १३ ॥ १४ ॥

ऐकादशिनैः पशुभि यथाप्रकृति याजुर कर्म समापयतीत्यनुवाद । तत्र पर्यग्निकरणात् अथ नित्य-भावात् ॥ १५ ॥

उदयनीयायां संस्थितायां प्रतिदैवतं तिस्रस्तिस्र इति पूर्वयो मतो विभाग । उत्तमानां तु पञ्च ॥ १६ ॥

एकादशसम्पादनार्थं ॥ १७–१९ ॥

---

१–कर्त्रिका देवतुम्बवि यशस्वर्दन् । का श्रौ. सू २० । १२ ।

२–विश्व द्वन्द्व यस्य पुनर्देवताभ्य जुहोति । का श्रौ. सू २० । १२ । अन्येनेति श्रुत । " आज्येन जुहोति " इति अत्रैव चतुर्दशी कंडिका भवे ।

३–मैत्रावरुण मैत्रावरुण्योऽनूबन्ध्या एकादशवशाप । का. श्रौ सू २० । १६ ।

(१) अथातो दक्षिणानाम् । (मध्य) मध्यम्प्रति राष्ट्रस्य यदन्यद्भूमेश्च ब्राह्मणस्य च वित्तात्सपुरुषम्प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुस्तदेव होतृकाऽअन्वाभक्ताः ॥ १८ ॥

(२) अथ यदि ब्राह्मणो यजेत । सर्ववेदसन्दद्यात्सर्वं वै ब्राह्मणः सर्वꣳ सर्ववेदसꣳ सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ १९ ॥

(द्व्याऽत्र) अथात्मन्नग्नी समारोह्य । (ह्यो) उत्तरनारायणेनादित्यमुपस्थायानपेक्षमाणोऽरण्यमभिप्रेयात्तदेव मनुष्येभ्यस्तिरोभवति यद्यु ग्रामे विवत्सेदरण्योरग्नी समारोह्योत्तरनारायणेनैवादित्यमुपस्थाय

---

अथातो दक्षिणानाम् । मध्यं प्रति राष्ट्रस्य । यदन्यद् भूमेश्च, ब्राह्मणस्य च वित्तात्, सपुरुषम् । प्राची दिग् होतुः दक्षिणा ब्रह्मणः । प्रतीच्यध्वर्योः । उदीच्युद्गातुः । तदेव होतृका अन्वाभक्ताः ॥ १८ ॥

अथ यदि ब्राह्मणो यजेत । सर्ववेदसं दद्यात् । सर्वं वै ब्राह्मणः । सर्वं सर्ववेदसम् । सर्वं पुरुषमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ १९ ॥

अथात्मन्नग्नी समारोह्य, उत्तरनारायणेनादित्यमुपस्थाय, अनपेक्षमाणोऽरण्यमभिप्रेयात् । तदेव मनुष्येभ्यस्तिरोभवति । यद्यु ग्रामे विवत्सेत् । अरण्योरग्नी समारोह्य उत्तरनारायणेनैवादित्यमुपस्थाय । गृहेषु प्रत्यवस्येत् । अथ तान् यज्ञक्रतूनाहरेत् । यानभ्याप्नुयात् । स वा एष न सर्वस्मा

---

अथात्मन्नग्नी समारोह्य आत्मनि शरीरे, अग्नी समारोप्य, "अयं ते योनि"–(वा स ३ । १४) इति मंत्रेण ऊष्माणं आघ्राय, कोष्ठे वा आवेश्य । उत्तरनारायणेन नारायणार्थं "अद्भ्यः सम्भृत" (वा स ३१।१७–२२)

---

१–सपुरुषमश्वमेधवद्दक्षिणा । (का श्रौ सू २१ । १४ ।) गतऽस्य दक्षिणादानविधि । अश्वमेध भूमिपुरुषब्राह्मणस्व वर्जम् (का श्रौ सू २० । १०९) इत्युक्तम् । अत्र तु भूमिब्राह्मणस्ववर्जं पुरुषा अपि दीयते । तथा अश्वमेधे अद्धा निसृष्टत्वात्तृतीय लृतध्याभत्युक्तम् । अत्र तु अद्धा पञ्चसङ्ख्यानात् प्रत्यह प्राच्य दिग्विभवदन्यस्य पञ्चम पञ्चमस्य ददातीति विशेष ।

२–सर्वस्वं ब्राह्मणस्य । (का श्रौ सू २१ । १५ ।) ब्राह्मणस्याय दक्षिणादानविधि । अत्रो हेतौ कात्यायन –अधिकार सूत्र द्वितीय रचय नाम "ब्राह्मणराजन्यया" इति । (का श्रौ सू २१ । २ ।)

३–निशातव्यत समारोह्यात्मन्नग्नी सूर्यमुपस्थायादृश्य सम्भृत इत्यनुवाकेनानपेक्षमाणोऽरण्यं गत्वा न प्रत्येयात् । (का श्रौ सू २१ । १७ ।) न प्रत्ययात् पुनर्गृहं प्रतारयर्थं । किंतु अरण्यमेव तु । ततश्चाथमातरप्रस्थित्यमिति केके । अत्र तुन कर्क मध्ये स्मृतिविहितप्राजापत्येष्टिनिर्णय । यच्च स्मृतिपृष्यते "प्राजापत्यां निरुप्येष्टिं सर्ववेदसदक्षिणाम् । आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्" (म स्मृ ६ । ३८ ।) इति ॥ सा चेय पुरुषमेधाख्या सर्वस्वदक्षिणा प्राजापत्येष्टि । ता निरुप्य पारिव्रज्यं ब्राह्मणस्य । एवं च "यावज्जीवमग्निहोत्रं जुहुयात्" इति श्रुति स्तया श्रुत्या विकल्प्यते । अथ स्मार्तेष्टि प्राजापत्या स्यात् । तदानीं स्मृत्या श्रुतिर्बाधिता स्यात् । न चैतदिष्यते । पुरुषमेधे कथ प्राजापत्येष्टिरिति चेत् । सन्ति हि अत्र प्राजापत्या पशव । तदुपलक्षिता प्राजापत्येत्युच्यते ॥

तस्याग्निष्टुदग्निष्टोमः प्रथममहर्भवति । ( त्य ) अग्निर्वाऽअग्निष्टुदग्निष्टोमोऽग्निमुखाऽउ वै सर्व्वे देवाः सर्व्वेषान्देवानामाप्त्यै तस्याग्नेया ग्ग्रहा भवन्त्याग्नेय्यः पुरोरुचः सर्व्वमाग्नेयमसदिति ॥ ३ ॥

( तां ) इन्द्रस्तुदुक्थ्यो द्वितीयमहर्भवति । ( त्री ) इन्द्रो वै सर्व्वे देवाः सर्व्वेषान्देवानामाप्त्यै तस्यैन्द्रा ग्ग्रहा भवन्त्यैन्द्र्यः पुरोरुचः सर्व्वमैन्द्रमसदिति ॥ ४ ॥

सूर्य्यस्तुदुक्थ्यस्तृतीयमहर्भवति । सूर्य्यो वै सर्व्वे देवाः सर्व्वेषां देवानामाप्त्यै तस्य सौर्य्या ग्ग्रहा भवन्ति सौर्य्यः पुरोरुचः सर्व्वꣳ सौर्य्यमसदिति ॥ ५ ॥

वैश्वदेवश्चतुर्थमहर्भवति । विश्वे वै सर्व्वे देवाः सर्व्वेषान्देवानामाप्त्यै तस्य वैश्वदेवा ग्ग्रहा भवन्ति वैश्वदेव्यः पुरोरुचः सर्व्वं वैश्वदेवमसदिति ॥ ६ ॥

---

तस्याग्निष्टुदग्निष्टोमः प्रथममहर्भवति । अग्निर्वा अग्निष्टुदग्निष्टोमः । अग्निमुखा उ वै सर्वे देवाः । सर्वेषां देवानामाप्त्यै । तस्याग्नेया ग्रहा भवंति । आग्नेय्यः पुरोरुचः । सर्वमाग्नेयमसदिति ॥ ३ ॥

इंद्रस्तुदुक्थ्यो द्वितीयमहर्भवति । इंद्रो वै सर्वे देवाः । सर्वेषां देवानामाप्त्यै । तस्यैन्द्रा ग्रहा भवंति । ऐन्द्र्यः पुरोरुचः । सर्वमैन्द्रमसदिति ॥ ४ ॥

सूर्यस्तुदुक्थ्यस्तृतीयमहर्भवति । सूर्यो वै सर्वे देवाः । सर्वेषां देवानामाप्त्यै । तस्य सौर्या ग्रहा भवंति । सौर्यः पुरोरुचः । सर्वं सौर्यमसदिति ॥ ५ ॥

वैश्वदेवश्चतुर्थमहर्भवति । विश्वे वै सर्वे देवाः । सर्वेषां देवानामाप्त्यै । तस्य वैश्वदेवा ग्रहा भवंति । वैश्वदेव्यः पुरोरुचः । सर्वं वैश्वदेवमसदिति ॥ ६ ॥

---

अग्निष्टुन्नामा एकाहः अग्निष्टोमसंस्थ एव । ग्रहा " उपयामगृहीतोऽस्यग्नये त्वा जुष्टं गृह्णाम्येष ते योनिरग्नये त्वा " इत्येव मन्त्राः । आग्नेय्यः पुरोरुचः " अस्याजरासो दमामरित्रा "-( वा. सं. ३३ । १-१७ ) इत्यादयः । एवमुत्तरेष्वपि बोध्याः ॥ ३-६ ॥

---

( त्या ) आश्वमेधिकं मध्यमं पञ्चममहर्भवति । तस्मिन्नश्वम्मेध्यमालभतेऽश्वमेधस्यैवाप्त्यै ॥ ७ ॥

पौरुषमेधिकम्मध्यमꣳ षष्ठमहर्भवति । तस्मिन्मेध्यान्पुरुषानालभते पुरुषमेधस्यैवाप्त्यै ॥ ८ ॥

( प्त्याऽथ ) अप्तोर्य्यामः सप्तममहर्भवति । सर्वेषां यज्ञक्रतूनामाप्त्यै तस्मिन्त्सर्वान्मेध्यानालभते यत्र प्राणि यच्चाप्राणन्त्सर्वा वपावतीर्जुहोति त्वचऽउत्कृत्तमवपाकानाꣳ सन्त्वश्मोषधिवनस्पतीनाम्प्रकिरन्ति शुष्काणाञ्चार्द्राणाञ्चान्नमन्नञ्जुहोत्यन्नस्यान्नस्याप्त्यै सर्वञ्जुहोति सर्वस्मै जुहोति सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै प्रातःसवने हुतासु वपास्वेवमेव तृतीयसवने हुतेषु हविःषु ॥ ९ ॥

---

आश्वमेधिकं पंचममहर्भवति । तस्मिन्नश्वं मेध्यमालभते । अश्वमेधस्यैवाप्त्यै ॥ ७ ॥

पौरुषमेधिकं मध्यमं षष्ठमहर्भवति । तस्मिन्मेध्यान् पुरुषानालभते । पुरुषमेधस्यैवाप्त्यै ॥ ८ ॥

अप्तोर्यामः सप्तममहर्भवति । सर्वेषां यज्ञक्रतूनामाप्त्यै । तस्मिन्, सर्वान्मेध्यानालभते । यत्र प्राणि । यच्चाप्राणत् । सर्वा वपावतीं जुहोति । त्वच उत्कर्तमवपाकानाम् । संत्वश्मोषधिवनस्पतीनां प्रकिरंति-शुष्काणां चार्द्राणां च । अन्नमन्नं जुहोति । अन्नस्यान्नस्याप्त्यै । सर्वं जुहोति । सर्वस्मै जुहोति । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै । प्रातःसवने हुतासु वपासु । एवमेव तृतीयसवने हुतेषु हविःषु ॥ ९ ॥

---

तस्मिन् अश्वं मेध्यमालभत इत्यनुवादः सर्वेषामेव मेधार्हाणां प्राप्तवान् । एवमेव तस्मिन्मेध्यानालभत इति ॥ ७ ॥ ८ ॥

' अप्तोर्याम. ' । अप्तोर्यामो नाम क्रतुः यस्मिन् निगदोऽस्य. उक्थं भक्तिर्याय: दशमो भवति । सर्वेषां यज्ञक्रतूनामिति । सर्वाणि अग्निष्टोमोक्थ्यषोडश्यतिरात्रसदानानि स्तोत्रशस्त्राणि चाप्तोर्यामेऽन्तर्भवन्ती-त्यभिप्रायः । तस्मिन् सर्वान् मेध्यान् यज्ञार्हान् पदार्थान् स्थावरजंगमान् सर्वान् आलभते होमार्थमुपकल्पयति न त्वालभत इति । चोदनासामान्यात् पशुप्रकरणो याग । एते चोदने नादेशनामसमर्थान् तमालभते इत्यादिवत् । ननु सत्यम् जुहोतीत्यस्मिन् देवतासंबन्ध । तत्र यजति स तु होम न यागः, तेन तदुक्ता होमा एव एते न यागा । अत एव तदिदेवमनमान सर्वमेधे सर्वान्मेध्यान्हुत्वा"(श.प १३।७।१।१)इति सर्वमेधे नाना होम एवोपदिशात्येवऽपि श्रुत । न तु सर्वमेधेऽपि द्रव्ये येन याग । तत्र वपावन्त स । उभयोरपि सवनयोश्चैव एव होतव्या. न द्रव्यान्तर्यदानानि । तत्र जुहोतिरूपेणैव न यजतिरूपेण याज्यानुवाक्यादिनेति । यत्र प्राणि यो श्वासनिश्वसन् ।

---

१-आश्वमेधिकं मध्यमं मनुष्याणां । का. श्रौ. सू. २१ । २७ ।

२-अंगसमधिष्ठ वज्रोदनस्य । का श्रौ. सू. २१ । १८ ।

त्रिणुवमष्टममुहर्भवति । वज्रो वै त्रिणवो वज्रेण खलु वै क्षत्रꣳ स्पृतं तद्वज्रेणैव क्षत्रꣳ स्पृणोति ॥ १० ॥
त्रयस्त्रिꣳशन्नवममुहर्भवति । प्रतिष्ठा वै त्रयस्त्रिꣳशः प्रतिष्ठित्यै ॥ ११ ॥

---

त्रिणवमष्टममहर्भवति । वज्रो वै त्रिणवः । वज्रेण खलु वै क्षत्रं स्पृतम् । तत् वज्रेणैव क्षत्रं स्पृणोति ॥ १० ॥

त्रयस्त्रिंशं नवममहर्भवति । प्रतिष्ठा वै त्रयस्त्रिंशः । प्रतिष्ठित्यै ॥ ११ ॥

---

मनश्च ओषधिवनस्पतीनां प्रकिरन्ति । व्रीहियवानां शुष्काणां चार्द्राणां च प्रकिरति । अन्नमन्नं यवादि जुहोति पृथक् जुहोति न सह तानि सकृदेव जुहोति न त्वसार्द्रत्यर्थ । सर्वं सर्वतानीय जुहोति सर्वासां स्थावर-जङ्गमजातीनां एकैका व्यक्ति सूक्ष्माणां च धान्यानां अवदानमात्रं जुहोति । न तु सर्वा व्यक्ती अशक्यत्वात् । धन्येन जात्यात्मना सर्वा एव व्यक्तीर्जुहोति । सर्वमेधे सर्वात्मने प्रधानपुरुषहिरण्यगर्भाय जुहोति ' तदेवाग्नित-दादित्य " इत्यनेनाध्यायेन ( वा. स. ३२ ) कृत ' सर्वमेध इति समाख्यानात् तदेव सर्वमेधेऽध्याय इति । अर्थान्तराच्च सर्वस्मै होतव्य सर्वात्मने वैश्वोऽध्याय अभिद्यते न चान्यत्र क्वचिदपि विनियुक्त । एतदथ सार्व-मेधिक एव पुरोरुच पठ्यते " स्योनादाम " इत्यादय ( वा स ३३ ) वैश्वदेव्य च अत्रैव एष अध्यायो विनियुक्त । एतेन च प्रात सवने होतव्यम् हुतासु वपासु एवमेव तृतीयसवने हुतेषु पशुषु हवि ३ जुहोति ननु " यज्ञमिन " ( वा स ३४ ) इत्यध्यायेन कर्मलिङ्गाभ्यां तत्र हि बहिर्दैवत अनुक्रम्यते " य इमा विश्वा " (वा. स १७।१७) " विश्वकर्मा " ( वा स. १७।२६।१७।३२ ) " यो न पिता " (वा. स १७।२७) ' अन्नपतेऽन्नस्य नो देहि ' (वा स. ११।८३) इति सर्वामेव अन्ते विश्वकर्मा पठित । न च एष अन्यत्र श्रुत्या विनियुक्त । तस्मादेव होतव्यमिति मन्ये । कात्यायनेन न तत्सूचित कस्मादिति हेतो इति विम ॥ ९ ॥

त्रिणव सप्तविंशस्तोमकम् ॥ १० ॥

त्रयस्त्रिंश नवममहर्भवति ॥ ११ ॥

---

विश्वजित्सर्वपृष्ठोऽतिरात्रो दशममहर्भवति । सर्वं वै विश्वजित्सर्वपृष्ठोऽतिरात्रः सर्वᳪं सर्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥१२॥

( द्वयाऽअ ) अथातो दक्षिणानाम् । ( मध्य ) मध्यम्प्रति राष्ट्रस्य यदन्यद्ब्राह्मणस्य वित्तात्सभूमि सपुरुषम्प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुस्तदेव होतृकाऽअन्वाभक्ताः ॥ १३ ॥

( स्तै ) तेन हैतेन विश्वकर्मा भौवनऽईजे । तेनेष्ट्वाऽत्यतिष्ठत्सर्वाणि भूतानीदᳪं सर्वमभवदतितिष्ठति सर्वाणि भूतानीदᳪं सर्वम्भवति यऽएवंविद्वान्त्सर्वमेधेन यजते यो वैतदेवम्वेद ॥ १४ ॥

तᳪं ह कश्यपो याजयाञ्चकार । तदपि भूमिः श्लोकं जगौ न मा मर्त्यः

---

विश्वजित् सर्वपृष्ठोऽतिरात्रो दशममहर्भवति । सर्वं वै विश्वजित् सर्वपृष्ठोऽतिरात्रः । सर्वं सर्वमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ १२ ॥

अथातो दक्षिणानाम् । मध्यं प्रति राष्ट्रस्य । यदन्यद् ब्राह्मणस्य वित्तात् । सभूमि सपुरुषम् । प्राची दिग् होतुः दक्षिणा ब्रह्मणः । प्रतीच्यध्वर्योः । उदीच्युद्गातुः । तदेव होतृका अन्वाभक्ताः ॥ १३ ॥

तेन हैतेन विश्वकर्मा भौवन ईजे । तेनेष्ट्वा अत्यतिष्ठत् सर्वाणि भूतानि । इदं सर्वमभवत् । अतितिष्ठति सर्वाणि भूतानि । इदं सर्वं भवति । य एवं विद्वान् सर्वमेधेन यजते । यो वा एतदेवं वेद ॥ १४ ॥

तं ह कश्यपो याजयाञ्चकार । तदपि भूमिः श्लोकं जगौ—" न मा मर्त्यः कश्चन दातु-

---

विश्वजिन्नाम एकाहः । सर्वाणि पृष्ठसाधनानि रथन्तरादीनि यस्य सन्ति स सर्वपृष्ठः । तेषां तु पवमाने रथन्तरं कुर्वन्ति आर्भवे बृहत् मध्ये इतराणि ॥ १२ ॥

सपुरुषमिति । दासाः पुरुषाः । तेषां दानसम्भवात् ॥ १३ ॥

तेन हैतेन । विश्वकर्मा नाम्ना राजा । भुवनस्यापत्यम् । हिरण्यगर्भो वा विश्वकर्मा । भुवनेषु भूतेषु सर्वेषां स प्रागवस्थायाम् एतेन सर्वमेधेन ईजे ॥ १४ ॥

तं ह कश्यप ऋषिं याजितवान् । अस्मै च विश्वकर्मा भूमिं दातुम् इयेष । तत्र च काले भूमिरपि इम

---

१-अतिरात्रो विश्वजित् । ( का श्रौ सू २१ । १० ) स विश्वजित् सर्वपृष्ठोऽतिरात्रः ।

२-पुरुषमेधवद्दक्षिणा सभूमि । का श्रौ सू २१ । ११ । पुरुषमेधदक्षिणासूत्रम् । सपुरुषमश्वमेधवद्दक्षिणा । " सर्वस्व ब्राह्मणस्येति च । " ( का श्रौ सू २१ । १४ । १५ ) अत्र सर्वमेध तु ब्राह्मणस्वमत्र न देय, भूमिपुरुषदानं तु भवत्येव यदन्यद्ब्राह्मणस्य वित्तात्सभूमि सपुरुषमिति ( श० ब्रा १३ । ७ । १ । १३ ) श्रुतेरिति सूत्रार्थ ।

कुश्चन दातुमर्हति विश्वकर्मन्भौवन मन्द आसिथ । उपमङ्क्ष्यति स्या सलिलस्य मध्ये मृषैष ते सङ्गरः कश्यपायेति ॥ १५ ॥

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ १३-४-३ ॥ (७-१) ॥

इति सप्तमोऽध्यायः समाप्तः ॥ १३-७ ॥

कंडिकासंख्या ॥ १५ ॥

---

मर्हति विश्वकर्मन् भौवन मद आसिथ । उपमंक्ष्यति स्या सलिलस्य मध्ये मृषैष ते संगरः कश्यपाय "-इति ॥ १५ ॥

---

श्रोर गीतवती । न मा मर्त्यो मनुष्य कश्चिदपि सरला दातुमर्हति । हे विश्वकर्मन् ! भौवन ! त्व तु मद मदमति-जन आसिथ बभूविथ जात इत्यथ । अस्मभूरादश मन्तु न कृत लिट अनाद्यधातुर वाभ्रवणात् । इडाग-मस्तु आर्धधातुकत्वात् छन्दस्युभयथति । कथ स मद इत्यत आह–उपमङ्क्ष्यति स्या । उपशब्दो निशब्दस्याथ । "स्या सा त्वया दिमिताह सलिलस्य मध्ये निमग्ना भवितुमिच्छामि, तनथ ते एष सगर प्रतिज्ञा मृषा अशक्य इत्यर्थ । यथ अशक्य प्रतिजानीते स कथ न मद इत्यभिप्राय ॥ १५ ॥

इति श्रीमदाचार्यहरिस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे सप्तमऽध्याये प्रथम ब्राह्मणम् ॥ १३ ॥ ७ ॥ १ ॥

नागस्वामिसुतोऽवन्त्या पाराशर्यो वसन्हरि ।
श्रुत्यर्थं दर्शयामास शक्तित पौष्करीयक ॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपते ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूभर्त्रा विक्रमार्केण कल्पो कनकवेदिकाम् ।
दानाध्यक्षस्य कृतवान् श्रुत्यर्थविवृति हार ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिना कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे सप्तमोऽध्याय समाप्त ॥ १३-७ ॥



# अथाष्टमेऽध्याये प्रथमं ब्राह्मणम् ।

# चतुर्थप्रपाठके च चतुर्थं ब्राह्मणम् ।



अथास्मै श्मशानं कुर्वन्ति । गृहान्वा प्रज्ञानं वा यो वै कश्च म्रियते स शवस्तस्मा एतदन्नं करोति तस्माच्छवान्नꣳ शवान्नꣳ ह वै तच्छ्मशानमित्याचक्षते परोक्षꣳ श्मशा उ हैव नाम पितॄणामत्तारस्ते हामुष्मिँल्लोकेऽकृतश्मशानस्य साधुकृत्यामुपदम्भयन्ति तेभ्य एतदन्नं करोति तस्माच्छ्मशान्नꣳ श्मशान्नꣳ ह वै तच्छ्मशानमित्याचक्षते परोऽक्षम् ॥ १ ॥

---

अथ पितृमेधः ।

अथास्मै श्मशानं कुर्वंति । गृहान्वा प्रज्ञानं वा । यो वै कश्च म्रियते । स शवः । तस्मा एतदन्नं करोति । तस्मात् शवान्नम् । शवान्नं ह वै तत् श्मशानमित्याचक्षते । परो श्मशा उ हैव नाम पितॄणां अत्तारः ते ह अमुष्मिन् लोकेऽकृतश्मशानस्य साधुकृत्यामुपदंभयन्ति । तेभ्य एतदन्नं करोति । तस्मात् श्मशान्नम् । श्मशान्नं ह वै तत् श्मशानमित्याचक्षते परोऽक्षम् ॥१॥

---

अथास्मै श्मशानमिति । अथशब्द अधिकारार्थः । नानन्तर्यार्थः । कुतः ? सर्वमेधेन सह श्मशानकरणस्यानन्तर्यानुपपत्तेः । कथ ? सर्वमेधानन्तर्ये हि गृह्यमाणे अस्मै इति सर्वमेधयाजी परामृष्टव्यः । न च सर्वमेधयाजी सर्वमेधानन्तरं म्रियते । अथापि कथञ्चित् म्रियेत । तथापि “ यो वै कश्च म्रियते स शवस्तस्मा एतदन्नं करोति ” इति अविशेषवचनात् अनग्निचितोऽपि श्मशानदर्शनार्थत् । क्षत्रियस्य च सर्वमेधयाजिन एवैतत् श्मशानकरण. किं तर्हि अविशेषेण । ततश्च सर्वमेधिना सहानन्तर्यं नोपपद्यते । परिशेषात्, अधिकारार्थोऽथशब्द. । वाक्योपन्यासार्थो वा । अस्मै इति मृत प्रतिनिर्दिश्यते । न सर्वमेधयाजी । यो वैश्यादेरपि प्रकरणात् ( ? ) । श्मशान प्रसिद्धमेव । अस्थिसंरक्षणाय वाऽस्तु । तत् कुर्वंति । य तस्य प्रेतस्य सकल्पनाया ( ? ) । किमात्मक तत् कुर्यात् इत्यत आह—गृहान्वा । प्रेतस्य गृहान्वै तत्कुर्वंति, यथैवेह तनास्थीनि रक्ष्यते एवममुत्र तत्पूर्वेण प्रेतो रक्ष्यते गृहैरिवेत्यभिप्राय. । प्रज्ञान वा । अमुष्य देवदत्तादरस्यास्थीनि शुभानि इत्येतत् प्रज्ञायते येन तत् प्रज्ञान च कीर्तिवर्द्धन करणीयमित्यभिप्राय. । यो वै कश्च म्रियते इति प्रयोजनान्तरवचन च । तस्मै एतदन्न करोति । अस्मिन् कृते एतद्धेतुक तस्यान्न भवतीत्यभिप्राय । तस्माच्च शवान्नम् । तत् शवान्न च श्मशानमित्याचक्षते परोऽक्षम् । वर्णलोपागमविकारादिभिरित्यर्थं । श्मशा नाम पितॄणा दन्दशूकरूपा अनारम्भे च अकृतश्मशानस्य अमुष्मिन् लोके पुण्यकृत्या उपहिंसन्ति ॥ १ ॥

---

१—अत्र “ श्मशानम् ” इत्यस्य स्थाने “ कल्याण ” इति कासुगोरक्षमोदा पाठपठन्ति याज्ञिक गणा । तत्रोपात्तमज्ञान श्रवणे एव श्मशानशब्दो नो वाच्य इति हेतुनैव “ कल्याण ” इति पठन्ति । पर चात्र शातपथश्रुते परिवर्तने नालम् अतो मूले स्थापित “ श्मशानम् ” इत्येव वैदिक. पाठ साधीयान् । इति मन्तव्यम् ॥

(न्त) तद्वै न क्षिप्रं कुर्य्यात् । (ञ) नेन्नवमघङ्करवाणीति चिरऽएव कुर्य्यादघमेव तत्तिरः करोति यत्र समा नानु चन स्मरेयुरश्रुतिमेव तदघङ्गमयति यद्यनुस्मरेयुः ॥ २ ॥

(ड) अयुङ्गेषु सम्वत्सरेषु कुर्य्यात् । (द) अयुङ्गऽँ हि पितॄणामेकनक्षत्रऽएकनक्षत्रऽँ हि पितॄणाममावास्यायाममावास्या वाऽएकनक्षत्रमेको हि यद्वेताऽँ रात्रिऽँ सर्व्वाणि भूतानि सम्वसन्ति तेनो तङ्कामम्माप्नोति यः सर्व्वेषु नक्षत्रेषु ॥ ३ ॥

---

तत् वै न क्षिप्रं कुर्यात् । नेन्नवमघं करवाणीति । चिर एव कुर्यात् । अघमेव तत्तिरः करोति । यत्र समा नानु चन स्मरेयुः । अश्रुतिमेव तदघं गमयति । यद्यनु स्मरेयुः ॥ २ ॥

अयुंगेषु संवत्सरेषु कुर्यात् । अयुगं हि पितॄणाम् । एकनक्षत्रे । एकनक्षत्रं हि पितॄणाम् । अमावास्यायाम् । अमावास्या वा एकनक्षत्रम् । एको हि । यत् उ एतां रात्रिं सर्वाणि भूतानि संवसंति । तेन उ तं काममाप्नोति । यः सर्वेषु नक्षत्रेषु ॥ ३ ॥

---

तद्वै न क्षिप्रम् । क्षिप्रं अचिरमृते न कुर्यात् । नेन्नव प्रत्यग्रम् अघं पापं करवाणि, प्रत्यग्रे हि अघे स्मर्यमाणे महत् दुःखं भवतीत्यभिप्रायः । चिरं करोति । कालान्तरितेन । तथा च—स्मर्यमाणानामपि महत् दुःखं भवतीति । यत्र काले समाः संवत्सरान् नानुस्मरेयुः । अश्रुतिमेव तदघं गमयति । न श्रुतिं श्रुयमाणं । तत्तेन चिरकरणेन अघं पापं प्रणाशं गमयति । चिरात् श्मशानं कुर्वन् मरणजनवादो न श्रूयतेऽस्यार्थः । यद्यनुस्मरेयुरिति—यदि चिरादपि कुर्वन् स्मरेयुरेव समाः । तत ॥ २ ॥

अयुगेषु । अयुग्मेषु संवत्सरेषु । अयुगं हि । सर्वमेवोकरण इत्यादि, पितॄणाम् । ते अपि हि पितृपितामहप्रपितामहा अयुग्मा एवेति । एकनक्षत्रे । एकं च नक्षत्रं च एकनक्षत्रं, पुष्य हस्तश्चित्रा इत्यादि । यत्तु द्विवचनबहुवचनशब्दादिवाक्यप्रसिद्धं, पुनर्वसू विशाखे कृत्तिका भरण्योऽनुराधा इत्यादि तदनेकनक्षत्रम् । कथं पुनरमावास्या एकनक्षत्रं, इत्यत आह—एको हीति । मासे एका अमावास्या भवति । न यथा प्रतिपदो द्वितीयेत्याद्याः । अथवा एका हि सा, उभयोरपि चन्द्रार्कयोरायतन महायतनत्वसामान्यादेव नक्षत्रमित्युच्यते । ननु च श्रद्धानातरनिमित्ता अपि कामाः निमित्तेऽत्र कथमाप्नुयुरिति इत्यत आह—यद्वेतामिति । कथं पुनरेतां रात्रिं सर्वाणि भूतानि संवसन्ति, तत्र हेतुः अग्नीषोमात्मकं सर्वमेवेदं भूतम् । सूर्य आग्नेयः, चन्द्रमा सौम्यः सूर्याचन्द्रमसौ संवासे सर्वाणि भूतानि संवसन्तीत्युपपन्नम् ॥ ३ ॥

---

१—चिरमेव संवत्सरस्यान्ते । का श्रौ सू २१ । १२ ।

२—अयुग्मेषु वा । ( का श्रौ. सू २१ । १३ । ) संवत्सरेष्वतिक्रान्तेष्वमग्निमन्थेष्वयुग्मेषु । अत्यर्थमार्येषु यदा कदा चैते देवदक्षिणा ।

३—एकनक्षत्रे । का. श्रौ. सू २१ । १४ ।

४—अमावास्यायां वा । का. श्रौ सू. २१ । १५ ॥

शरदि कुर्य्यात् । ( त्स्व ) स्वधा वै शरत्स्वधो वै पितॄणामन्नं तदेनमन्ने स्वधायान्दधाति माघे वा मा नोऽघम्भूदिति निदाघे वा नि नोऽघं धीयाता ऽइति ॥ ४ ॥

चतुःस्रक्ति । देवाश्चासुराश्चोभये प्राजापत्या दिक्ष्वस्पर्द्धन्त ते देवाऽअसुरान्त्सपत्नान्भ्रातृव्यान्दिग्भ्योऽनुदन्त तेऽदिक्काः पराभवंस्तस्माद्या दैव्यः प्रजाश्चतुःस्रक्तीनि ताः श्मशानानि कुर्व्वतेऽथ याऽआसुर्य्यः प्राच्यास्त्वद्ये त्वत्परिमण्डलानि तेऽनुदन्त ह्येनान्दिग्भ्यऽउभे दिशावन्तरेण विदधाति प्राचीञ्च दक्षिणाञ्चैतस्याᳫं ह दिशि पितृलोकस्य द्वारं द्वारैवैनम्पितृलोकम्प्रपादयति स्रक्तिभिर्द्दिक्षु प्रतितिष्ठतीतरेणात्मनाऽवान्तरदिक्षु तदेनᳫं सर्व्वासु दिक्षु प्रतिष्ठापयति ॥ ५ ॥

---

शरदि कुर्यात् । स्वधा वै शरत् । स्वधा उ वै पितॄणामन्नम् । तदेनमन्ने स्वधायां दधाति । माघे वा । मा नोऽघं भूदिति । निदाघे वा । नि नोऽघं धीयाता इति ॥ ४ ॥

चतुःस्रक्ति । देवाश्चासुराश्च उभये प्राजापत्या दिक्ष्वस्पर्द्धंत । ते देवा असुरान् सपत्नान् भ्रातृव्यान् दिग्भ्योऽनुदंत । तेऽदिक्काः पराभवन् । तस्मात् या दैव्यः प्रजाः । चतुःस्रक्तीनि ताः श्मशानानि कुर्वते । अथ या आसुर्यः । प्राच्यास्त्वद्ये त्वत्परिमंडलानि । तेऽनुदंत ह्येनान् दिग्भ्यः । उभे दिशावंतरेण विदधाति । प्राचीं च दक्षिणां च । एतस्यां हि दिशि पितृलोकस्य द्वारम् । द्वारैवैनं पितृलोकं प्रपादयति । स्रक्तिभिर्दिक्षु प्रतितिष्ठति । इतरेणात्मनाऽवांतरदिक्षु । तदेनं सर्वासु दिक्षु प्रतिष्ठापयति ॥ ५ ॥

---

शरदि कुर्वीत । स्वधा वै शरत् । शरदेव स्वधा नाम । स्वधा ऋतु शरत् । तस्यां हि प्रायशः सर्वा ओषधयः पच्यन्ते । स्वधा च पितॄणामन्नम् । ततश्च स्वधाख्यमन्नमाप्नुयात् शरदि कुर्वन्ति । अन्ने, अन्न स्वधा मन्यमानः ( १ ) । माघे वा मा नोऽघं भूदिति माघशब्दो वैशाखेन सादृश्यमस्तीत्यभिप्रायमेतत् ( २ ) । एवमस्माकमघं वीर्येऽनिर्जीवे निदाघे तत् स्थानेन मा उद्भवेत् इत्येतत्प्रार्थयमानः ॥ ४ ॥

चतुःस्रक्ति । चतुरस्रं श्मशानं कुर्यादिति वर्तते । दिग्भ्योऽनुदन्त दिगादिभ्यो निरस्य । असुरा अदिक्काः दिगादिस्थानरहिताः पराभूताः । तस्मादद्यापि तदनुसारेण या दैव्यः प्रजा देवा मनुष्याः त्रैविद्याश्च ताः चतुःस्रक्तीनि कुर्वते । अथशब्दो विशेषणार्थः । आसुर्यः । असुरस्वभावाः वेदवेदाङ्गविद्वद्भिरविद्या पाखण्डागमहेतुवादकुशलाः । प्राच्याश्च जनपदाः ये चान्ये तदीयास्ते परिमण्डलानि श्मशानानि कुर्वते । यस्मात् देवा एनानसुरान्दिग्भ्योऽनुदन्त दिक्षु मागरहितानेव चतु

---

१-निदाघशरन्माघेषु । का. श्रौ. सू. २१ । ३६ ॥
२-निदाघेऽघं पुनरमघं सिद्धं । का. श्रौ. सू. २१ । ३८ ॥

( त्य ) अथातो भूमिजोषणस्य । ( स्यो ) उदीचीनप्रवणे करोत्युदीची वै मनुष्याणान्दिक्तदेनं मनुष्यलोकऽआभजत्येतद्ध वै पितरो मनुष्यलोकऽआभक्ता भवन्ति यदेषाम्प्रजा भवति प्रजा हास्य श्रेयसी भवति ॥ ६ ॥

दक्षिणाप्रवणे कुर्य्यादित्याहुः । ( ई ) दक्षिणाप्रवणो वै पितृलोकस्तदेनम्पितृलोकऽआभजतीति न तथा कुर्य्यादाशीवद्ध नाम तच्छ्मशानकरणं क्षिप्रे हैषामपरोऽनुप्रैति ॥ ७ ॥

दक्षिणाप्रवणस्य प्रत्यर्धे कुर्य्यादित्यु हैकऽआहुः । ( स्त ) तत्प्रत्युच्छ्रितमघम्भवतीति नोऽएव तथा कुर्य्याद्यद्वाऽउदीचीनप्रवणे करोति तदेव प्रत्युच्छ्रितमघम्भवति ॥ ८ ॥

---

अथातो भूमिजोषणस्य । उदीचीनप्रवणे करोति । उदीची वै मनुष्याणां दिक् । तदेनं मनुष्यलोक आभजति । एतद् ह वै पितरो मनुष्यलोक आभक्ता भवन्ति । यदेषां प्रजा भवति । प्रजा ह अस्य श्रेयसी भवति ॥ ६ ॥

दक्षिणाप्रवणे कुर्यादित्याहुः । दक्षिणाप्रवणो वै पितृलोकः । तदेनं पितृलोक आभजतीति । न तथा कुर्यात् । आशीवद् ह नाम तत् श्मशानकरणम् । क्षिप्रे ह एषामपरोऽनुप्रैति ॥ ७ ॥

दक्षिणाप्रवणस्य प्रत्यर्धे कुर्यादिति उ ह एके आहुः । तत् प्रत्युच्छ्रितमघं भवतीति । नो एव तथा कुर्यात् । यद्वा उदीचीनप्रवणे करोति । तदेव प्रत्युच्छ्रितमघं भवति ॥ ८ ॥

यस्यैव समस्य सतः । ( तौ ) दक्षिणतः पुरस्तादापऽएनत्य सᳫँस्थायाप्रपत्यऽएतान्दिशमभिनिष्पद्याक्षय्याऽआपोऽपिपद्येरंस्तत्कुर्यादन्नम्वाऽआपोऽन्नाद्यमेवास्माऽएतत्पुरस्तात्प्रत्यग्दधात्यमृतमु वाऽआपऽएषो ह जीवानां दिगन्तरेण सप्तर्षीणाञ्चोदयनमादित्यस्य चास्तमयनममृतमेव तज्जीवेषु दधाति तद्धेतत्प्रतिमीवन्नाम श्मशानकरणं जीवेभ्यो हितं यद्वाव जीवेभ्यो हितन्तत्पितृभ्यः ॥ ९ ॥

कम्वति कुर्यात् । (तत्क) कम्मेऽसदित्यथो शम्वति शम्मेऽसदिति नाधिपथङ्कुर्यान्नाकाशे नेदाविरघङ्करवाणीति ॥ १० ॥

---

यस्यैव समस्य सतो दक्षिणतः पुरस्तादाप एत्य । स्थाय । प्रपत्य । एता दिशमभिनिष्पद्य । अक्षय्या आपोऽपिपद्येरन् । तत् कुर्यात् । अन्नं वा आपः । अन्नाद्यमेवास्मै एतत् पुरस्तात् प्रत्यग्दधाति । अमृतम् उ वा आपः । एषा उ ह जीवाना दिगन्तरेण । सप्तर्षीणा चोदयनम् । आदित्यस्य चास्तमयनम् । अमृतमेव तज्जीवेषु दधाति । तद्धेतत् प्रतिमीवन्नाम श्मशानकरणं जीवेभ्यो हितम् । यद्वाव जीवेभ्यो हितम् तत्पितृभ्यः ॥ ९ ॥

कंवति कुर्यात् । कं मेऽसदिति । अथो शंवति । शंमेऽसदिति । नाधिपथं कुर्यात् । नाकाशे । नेदाविरघं करवाणीति ॥ १० ॥

---

यस्यैव समस्य सत । यस्य देशस्य दक्षिणपार्श्वादाद् पुरस्ताद्भागे तत्रैव संस्थाय । प्रपत्य । भूमिम् अप्रविशत्य । शनै पश्चिमोत्तरा दिश प्रतिपन्नया दिशा निष्पद्य निर्गम्य । अक्षय्या अनाहार्या । या न क्षीयन्ते आप ता आप अपिपद्येरन् प्राप्नुयु सम्बध्येयु । तत्कुर्यात् । एव कुर्वन्नन्नाद्यमेवास्मै प्रेताय तासि एतत् पुरस्तात् प्रत्यङ् प्रति सम्मोतुरभिमुख दधाति । एषा उ ह । एषा च जीवाना जीवता हि हिता दिक् पश्चिमा । ( ईश्वर तस्या हि प्रायणमथात् कायात् चिरायुप समुद्राश्च मनुष्या कृषाद्यो भवन्ति ¹ ) । तद्धेतत् प्रतिमीवन्नाम । प्रतिगत समीपभागमवपन्न तथा, आगामि प्रतिमान यस्य कार्यतया तत् प्रतिमीवत् । ईदृश च जीवेभ्यो हि हित जीवहित च पितृभ्यो हितम । जीवोऽपि जीवितात् पितृणाम् ॥ ९ ॥

कवति । कराथवति । शवति सुखवति वा । यत्र तिष्ठति सुख भवति समीवति मनुजागतानां दु पस्थान्वेति(?) नाधिपथम् । षष्ठीविभक्त्यर्थे अधिशब्द पथिशब्देन च सम्बन्ध । अव्ययीभावश्च समासो भवति । आकाशे वृक्षगुल्मादिभी रहिते । नेत् आवि सर्वलोकप्रकाश यत्र अघसु चिह्न करवाणीति ॥ १० ॥

---

१-सम वा । शवति कवति वा । का श्रौ सू ११ । ५१ ।
२-अदर्शनादप्रमाणात् । अगापथ । का. श्रौ सू २१ । ५० ।

गुहा सदवताऽपि स्यात् । ( त्त ) तद्यद्गुहा भवत्यग्रमेव तद्गुहा करो- त्यथ यदवत्ताप्यसौ वाऽआदित्यः पाप्मनोऽपहन्ता स एवास्मात्पाप्मान- मपहन्त्यथोऽआदित्यज्योतिषमेवैनङ्करोति ॥ ११ ॥

न तस्मिन्कुर्य्यात् । ( द्य ) यस्येत्थादनूकाशः स्याद्याचमानꣳ ह नाम तस्मिन्क्षिप्रे हैपाप्मपरोऽनुप्रैति ॥ १२ ॥

चित्रं पश्चात्स्यात् । (त्स) प्रजा वै चित्रं चित्रꣳ हास्य प्रजा भवति यदि चित्रन्न स्यादापः पश्चाद्वोत्तरतो वा स्युरापो ह्येव चित्रञ्चित्रꣳ हैवास्य प्रजा भवति ॥ १३ ॥

( त्यू ) ऊषरं करोति । रेतो वाऽऊषाः प्रजननन्तदेनत्प्रजननऽआभ- जत्येतद्ध वै पितरः प्रजननऽआभक्ता भवन्ति यदेषाम्प्रजा भवति प्रजा हास्य श्रेयसी भवति ॥ १४ ॥

---

गुहा सदवतापि स्यात् । तद्यत् गुहा भवति । अग्रमेव तत् गुहा करोति । अथ यद्वतापि असौ वा आदित्यः पाप्मनोऽपहंता । स एवास्मात्पाप्मानमपहंति । अथो आदित्यज्योतिष मेवैनं करोति ॥ ११ ॥

न तस्मिन् कुर्यात् । यस्येत्थाऽदनूकाशः स्यात् । याचमानं ह नाम तत् । क्षिप्रे ह ए पाप परोऽनुप्रैति ॥ १२ ॥

चित्रं पश्चात् स्यात् । प्रजा वै चित्रम् । चित्रं ह अस्य प्रजा भवति । यदि चित्रं न स्यात् आपः पश्चाद्वोत्तरतो वा स्युः । आपो ह्येव चित्रम् । चित्रं हैवास्य प्रजा भवति ॥ १३ ॥

ऊषरे करोति । रेतो वा ऊषाः प्रजननम् । तदेनं प्रजनन आभजति । एतत् ह वै पितरः प्रजनन आभक्ता भवंति । यदेषां प्रजा भवति । प्रजा ह अस्य श्रेयसी भवति ॥ १४ ॥

सुमूले । सुमूलᳪं हि पितॄणाम्वीरिणमिश्रऽएतद्धास्याः पित्र्यमनतिरिक्तमुथोऽअग्रमेव तद्बद्ध करोति ॥ १५ ॥

न भूमिपाशमभिविदध्यात् । (त्र) न शरन्नाश्मगन्धान्नाध्याण्डान्न पृश्निपर्णीन्नाश्वत्थम्यान्तिकङ्कुर्यान्न विभीतकस्य न तिल्वकस्य न स्फूर्जकस्य न हरिद्रोर्न न्यग्रोधस्य ये चान्ये पापनामानो मङ्गलोपेप्सया नाम्नामेव परिहाराय ॥ १६ ॥

( याथा ) अथातऽआवृदेव । ( वा ) अग्निविधयाऽग्निचितः श्मशानङ्करोति यद्वै यजमानोऽग्निञ्चिनुतेऽमुष्मै तल्लोकाय यज्ञेनात्मानᳪं सᳪंस्कुरुतऽएतदु ह यज्ञियङ्कर्मासᳪंस्थितमा श्मशानकरणात्तद्यदग्निविधयाऽग्निचितः श्मशानङ्करोत्यग्निचित्यामेव तत्सᳪंस्थापयति ॥ १७ ॥

---

समूले । समूलं हि पितॄणाम् । वीरिणमिश्रे । एतत् ह अस्याः पित्र्यमनतिरिक्तम् । अथो अग्रमेव तत् बद्ध करोति ॥ १५ ॥

न भूमिपाशमभिविदध्यात् । न शरत् । नाश्मगन्धान् । नाध्याण्डान् । न पृश्निपर्णीन् । नाश्वत्थम्यान्तिकं कुर्यात् । न विभीतकस्य । न तिल्वकस्य । न स्फूर्जकस्य । न हरिद्रोः । न न्यग्रोधस्य । ये चान्ये पापनामानः । मंगलोपेप्सया नाम्नामेव परिहाराय ॥ १६ ॥

अथात आवृदेव । अग्निविधयाऽग्निचितः श्मशानं करोति । यत् वै यजमानोऽग्निं चिनुते । अमुष्मै तल्लोकाय यज्ञेनात्मानं संस्कुरुते । एतत् उ ह यज्ञियं कर्म असंस्थितम् आ श्मशानकरणात् । तत् यदग्निविधयाऽग्निचितः श्मशानं करोति । अग्निचित्यामेव तत् संस्थापयति ॥ १७ ॥

---

' समूले ' सन्ति यत्रौषधीनां मूलानि तत् समूलम् । ( हि योग्यमित्याह ' ) । पित्र्य पितृदेवत्यम् । अनतिरिक्तं अन्यस्यासाधारणं, पितॄणामित्यर्थः । यद्व साधु । भूमिं वीरिणवत् यत्रातानि तद् दिश्यम वारीत्यर्थं ( ? ) ॥ १५ ॥

न भूमिपाशम् । पूर्ववत् भूमौ विशेष । तमति न विदध्यात् । तदन्ति देशे न कुर्यात् । अध्याण्डादय महाफलो गुच्छ । पापनामानः । एते श्लेष्मान्तकशोविदारादय । मङ्गलानां प्राप्तीच्छया । नामान्यपि अमङ्गलानि पापहन्तुं एतेषामन्तिके न कुर्यात् ॥ १६ ॥

अथात आवृदेव । अग्निविधयेति । अग्न्याधानवत् प्रकार तथा अग्निचित श्मशानं करोति वक्ष्यमाण

---

१ समूलाग्निशाति । का श्री सू २१ । ५७ ।

२—वदित्व । ( का श्री सू २१ । ५२ । ) त्रिरभ्य गाथा इत्या गत बहुलतृणमन्तराम्नि चितिं चिनोति । उद्धृत क्षारिणी पश्चात् । त्रिवर्णिनाराज्ञसगधाद्य शर्म्यध्याण्डस्य । का श्री सू २१ । १६५ १६७ ।

३—श्मशानाच्च न्यग्रोधहरिद्रुस्फूर्जकविभीतकानामव्यव । का श्री सू २१ । ५१ ।

स वै सम्भारान्त्सुम्भरति । स यद्वाऽएतानित्था चेत्था च सम्भरति तत्सम्भाराणाᳬं सम्भारत्वᳬं स वै यत्रयत्र यज्ञस्य न्यक्तन्तत-स्ततः । सम्भरति ॥ १ ॥

कृष्णाजिने सम्भरति । यज्ञो वै कृष्णाजिनं यज्ञऽएवैनमेतत्सम्भरति लोमतश्छन्दाᳬंसि वै लोमानि च्छन्दःस्वेवैनमेतत्सम्भरत्युत्तरतऽउदीची हि मनुष्याणान्दिक्प्राचीनग्रीवे तद्धि देवत्रा ॥ २ ॥

---

## महावीरादिप्रवर्ग्यपात्रसंभरणब्राह्मणम् ।

स वै संभारान् संभरति । स यद्वा एतानित्था चेत्था च संभरति । तत्संभाराणां संभारत्वम् । स वै यत्रयत्र यज्ञस्य न्यक्तम् । ततः संभरति ॥ १ ॥

कृष्णाजिने संभरति । यज्ञो वै कृष्णाजिनम् । यज्ञ एवैनमेतत्संभरति । लोमतः । छंदांसि वै लोमानि । छंदःस्वेवैनमेतत्संभरति । उत्तरतः । उदीची हि मनुष्याणां दिक् । प्राचीनग्रीवे । तद्धि देवत्रा ॥ २ ॥

---

इह आध्यायिक्या प्रवर्ग्यस्य विधिभिन्नत्वं मन्त्रशेषत्वम्, तद्रहितस्य च अग्निष्टोमादेः फलजननासामर्थ्यमपि उक्त्वा । तस्यावश्यानुष्ठेयस्य प्रतिपादककाण्डाध्यायेन तदनुष्ठातुश्च व्रतानि दर्शितानि प्रथमब्राह्मणे । अथ द्वितीयेन तत्कर्मनिर्वर्तकानां महावीरप्रमुखाणां पात्राणां निष्पत्तिः प्रतिपाद्यते । तत्र महावीरादीनि मृण्मयानि पात्राणि निर्मातुं मृद्वल्मीकवपाद्याः संभारा अग्रे विधास्यन्ते । प्रथमं तावत् तेषां संभारसंज्ञा निरुक्तिः—स यद्वा एतानित्था चेत्था च संभरति तत्संभाराणां संभारत्वमिति । इत उपरि वक्ष्यमाणासु सर्वासु क्रियासु आध्वर्यवसमाख्यावशेन अध्वर्युरेव सामान्यतः कर्तृतया सम्बध्यते । वचनात् तद्व्यतिरिक्तानामिति सर्वत्रानुसंधेयम् । सोऽध्वर्युः दीक्षादिवसेषु 'यद्वै' यस्मात् खलु 'एतान्' वक्ष्यमाणान् मृदादिसंभारान् 'इत्था चेत्था च' इत्थं चेत्थं च, इत्थाशब्दद्वयं वक्ष्यमाणसंभाराहरणप्रकारस्य हस्तेन अभिनयप्रदर्शनार्थम् । नानादिगवस्थितान् बहुप्रकारेण 'संभरति' एकत्र आनीय समूहीकरोति । तत्तस्मात् इतस्ततः संध्रियमाणत्वात् तेषां 'संभाराणां संभारत्वं' संभारसंज्ञा निष्पन्ना । अनेन च प्रवर्ग्यं चिकीर्षुरध्वर्युः आदौ वक्ष्यमाणान् मृदादिपञ्चसंभारान् संभरेदिति विधिरुन्नेतव्यः । कुतो देशात् संभारा आहर्तव्या इति तदाह—स वै यत्रयत्र यज्ञस्य न्यक्तं ततः संभरतीति । 'सः' खल्वध्वर्युः 'यत्रयत्र' यस्मिन् यस्मिन् देशे 'यज्ञस्य' शिरः 'न्यक्तं' सम्यक् 'ततस्ततः' तस्मात्तस्मात् देशात् 'संभरति' । यज्ञशिरःसारान् मृदादिरूपान् संभारान् एकत्र समुद्धरति । अनेन इत्था चेत्था चेति प्रागुक्तं बहुप्रकारत्वमपि उपपादितं भवति ॥ १ ॥

कस्मिन् वा अजिने तत्संभरणमिति तदाह—कृष्णाजिने संभरतीति । कृष्णे कृष्णमृगस्याजिने चर्मणि वक्ष्यमाणान् संभारान् 'संभरति' । अथैतत् प्रशंसति—यज्ञो वै कृष्णाजिनं यज्ञ एवैनमेतत्संभरतीति ।

( आऽभ्र्या ) अभ्र्या । वज्रो वाऽअभ्रिर्व्वीर्य्यं वै वज्रो वीर्य्येणैवैन-
मेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ३ ॥

---

अभ्र्या । वज्रो वा अभ्रिः । वीर्यं वै वज्रः । वीर्येणैवैनमेतत्समर्द्धयति । कृत्स्नं करोति ॥ ३ ॥

( त्यौ ) औदुम्बरी भवति । ( त्य ) ऊर्ग्वै रस उदुम्बर ऊर्जैवैनमेतद्र-
सेन समर्द्धयति कृत्स्नङ्करोति ॥ ४ ॥

(त्य) स्रुवो वैकङ्कती । प्रजापतिर्ह प्रथमामाहुतिमुज्जुहोत्स हुत्वा यत्र
न्यमृष्ट ततो विकङ्कतः समभवत्तस्मात्साऽऽहुतिर्यद्विकङ्कतो यज्ञ-
स्यैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ५ ॥

( ३ ) अथ मृत्पिण्डम्परिगृह्णाति । ( त्र ) अभ्र्या च दक्षिणतो हस्तेन च हस्तेनैवोत्तरतो देवी द्यावापृथिवी ऽइति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स ऽइमे द्यावापृथिवी ऽअगच्छद्यन्मृदियन्तद्यदापो ऽसौ तन्मृदश्चापाश्च महावीराः कृता भवन्ति तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति तस्मादाह देवी द्यावापृथिवी ऽइति मखस्य वामद्य शिरो राध्यासमिति यज्ञो वै मखो यज्ञस्य वामद्य शिरो राध्यासमित्येवैतदाह देवयजने हि पृथिव्यै सम्भरति मखाय त्वा मखस्य त्वा शीर्ष्णे ऽइति यज्ञो वै देवयजने पृथिव्या ऽइति मखो यज्ञाय त्वा यज्ञस्य त्वा शीर्ष्णे ऽइत्येवैतदाह ॥ ९ ॥

---

अथ मृत्पिण्डं परिगृह्णाति । अभ्र्या च दक्षिणतो हस्तेन च । हस्तेनैवोत्तरतः । "देवी द्यावापृथिवी इति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत् । स इमे द्यावापृथिवी अगच्छत् । यन्मृत् । इयं तत् । यदापः । असौ तत् । मृदश्चापश्च महावीराः कृता भवन्ति । तेनैवैनमेतद्रसेन समर्द्धयति । कृत्स्नं करोति । तस्मादाह—" देवी द्यावापृथिवी "—इति । " मखस्य वामद्य शिरो राध्यासम् "—इति । यज्ञो वै मखः । यज्ञस्य वामद्य शिरो राध्यासम् । इत्येवैतदाह " देवयजने पृथिव्याः "—इति । देवयजने हि पृथिव्यै संभरति । " मखाय त्वा मखस्य त्वा शीर्ष्णे "—( वा. सं. ३७ । ३ ) इति । यज्ञो वै मखः । यज्ञाय त्वा यज्ञस्य त्वा शीर्ष्णे इत्येवैतदाह ॥ ९ ॥

---

(ह्रा) अथ वल्मीकवपाम् । (न्द्रे) देव्यो वम्र्यऽइत्येता वाऽएतद-
कुर्वत यथायथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्द्धयति
कृत्स्नङ्करोति भूतस्य प्रथमजाऽइतीयम्वै पृथिवी भूतस्य प्रथमजा तद-

नयैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति मखस्य वोऽद्य शिरो राध्यासन्देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ १० ॥

(उ) अथ वराहविहतम् । (त्रि) इयत्यग्रऽआसीदितीयती ह वाऽइयमग्रे पृथिव्यास प्रादेशमात्री तामेमूषऽइति वराहऽउज्जघान सोऽस्याः पतिः प्रजापतिस्तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्द्धयति कृत्स्नङ्करोति मखस्य तेऽद्य शिरो राध्यासन्देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ ११ ॥

---

यं पृथिवी भूतस्य प्रथमजा । तदनयैवैनमेतत्समर्द्धयति । कृत्स्नं करोति । "मखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्याः, मखाय त्वा मखस्य त्वा शीर्ष्णे"–( वा सं.३७।४ ) इति । असावेव बंधुः ॥ १० ॥

अथ वराहविहतम् । "इयत्यग्र आसीत्"–इति । इयती ह वा इयमग्रे पृथिव्यास प्रादेशमात्री । ताम् एमूष इति वराह उज्जघान । सोऽस्याः पतिः प्रजापतिः । तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्द्धयति । कृत्स्नं करोति । "मखस्य तेऽद्य शिरो राध्यासं देवयजने पृथिव्याः, मखाय त्वा मखस्य त्वा शीर्ष्णे"–( वा सं. ३७।५ ) इति । असावेव बंधुः ॥ ११ ॥

( इ ) अथादाराऩ् । ( त्रि ) इन्द्रस्यौज स्थेति यत्र वाऽएनमिन्द्रऽ ओजसा पर्य्यगृह्णात्तदस्य परिगृहीतस्य रसो व्यक्षरत्स पूयन्निवाशेत सोऽब्रवीदार्द्विर्येव वत मऽएष रसोऽस्रोपीडिति तस्मादादाराऽअथ यत्पूयन्निवाशेत तस्मात्पूतीकास्तस्मादग्नावाहुतिविाभ्याहिता ज्वलन्ति तस्मादु सुरभयो यज्ञस्य हि रसात्संभूताऽअथ यदेनन्तदिन्द्रऽओजसा पर्य्यगृह्णात्तस्मादाहेन्द्रस्यौज स्थेति मखस्य वोऽद्य शिरो राध्यासन्देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसाविव वन्धुः ॥ १२ ॥

---

अथादारान्—" इंद्रस्यौजः स्थ "—इति । यत्र वा एनमिंद्र ओजसा पर्यगृह्णात् । तदस्य परिगृहीतस्य रसो व्यक्षरत् । स पूयन्निवाशेत । सोऽब्रवीत् । आर्द्विर्येव वत म एष रसोऽस्रापीडिति । तस्मादादाराः । अथ यत्पूयन्निवाशेत । तस्मात्पूतीकाः । तस्मादग्नावाहुतिविाभ्याहिता ज्वलन्ति । तस्मादु सुरभयः । यज्ञस्य हि रसात्संभूताः । अथ यदेनं तदिन्द्र ओजसा पर्यगृह्णात् । तस्मादाह । " इंद्रस्यौजः स्थ "—इति । " मखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्याः, मखाय त्वा मखस्य त्वा शीर्ष्णे "—( वा० सं० ३७।६ ) इति । असाविव बंधुः ॥ १२ ॥

---

तस्य व्याख्यान—प्रादेशमात्रीति । अयमर्थ—' अग्रे ' सृष्टेः प्राक् या उदकमध्ये मग्ना पृथिवी निमग्ना आसीत् । ' तां ' प्रजापतिः ' वराह ' भूत्वा दंष्ट्राभ्यां उद्धृतवान् । दंष्ट्रायतया । अत तस्यां अवस्थायां ' इयं ' दृश्यमाना सर्वा पृथिवी तदानींतनी इयता ह वै इयती कृत्स्नापि प्रादेशमात्रपरिमितैव आसीत् । तां तदवस्थितां पृथिवीं वराहरूपः प्रजापतिः ' उज्जघान ' उद्धृतवान् । उद्धृत्य मनुष्याणां कृतवान् । कि नवतः ? ' एमूष ' इतीति । ' एमूष ' इति ' अ ' पृथिव्याः ' मूष ' अमुष्याः स्वामी अस्या भवति इति यद्दर्शनं तत च, वराहरूपः प्रजापतिः अस्याः ' पृथिव्याः ' पतिः भर्ता । अत एव मही वराहरूपा मिथुनेन । ' एतत् ' एतर्हि एव ' प्रजनं ' प्रियेण धाम्ना ' इत्यनेन तेजसा समर्द्धयति ' । तेन च पत्न्या सह स्वगृहे सर्वत्र कृतवान् भवति । हे ' पृथिवि ! ' त्वं ' अग्रे ' वराहेण उद्धृतत्वात् ' इयती ' एतावन्मात्रा, प्रादेशमात्रपरिमितैव आसीः । अत एव विशिष्टोक्तस्य प्रतिपादकत्वात् अयं मन्त्रभागो वराहविहतत्वेन भगत स्पष्ट । मन्त्रशेषं पूर्ववत् । अस्य तात्पर्यमाह—मखस्य तेऽद्य० वधुरिति । हे पृथिवि ' ते तव सम्बन्धिना वराहविहतेनेति शेष । शिष्टं निगदम् ॥ ११ ॥

अथ सम्भरणीयस्य कर्मान्तरस्य विधत्ते—अथादारानिन्द्रस्यौजः स्थेतीति । अथ वराहविहतसम्भरणानन्तरं ' अदाराऩ् आदारसंज्ञितान् पूतीकस्तम्बाभिधेयान् सोमप्रतिनिधित्वेन चोदितान् तृणविशेषान् " इन्द्रस्यौज स्थ " इति मन्त्रेण सम्भृत्य कृष्णाजिने निदधाति । हे पूतीकाः ! ' इन्द्रस्य ' ' ओजः ' तेजः ' स्थ ' भवथेति । कथं एतेषा

---

१ इन्द्रस्यौज स्थेति पूतीका । का० श्रौ० सू० २६।१।५ ॥

( ६ ) अथाजाशीरम् । (२) यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत्ततोऽजा समभवत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ १३ ॥

---

अथाजाशीरम् । यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत् । ततोऽजा समभवत् । तयैवैनमेतच्छुचा समर्द्धयति । कृत्स्नं करोति । "मखाय त्वा मखस्य त्वा शीर्ष्णे"–( वा सं, ३७।६ ) इति । असावेव बंधुः ॥ १३ ॥

---

इन्द्रमरुद्योगेनोत्पत्ता दर्भास्तस्मात् उत्पादयितुमाह–यत्र वा एनं तदिन्द्र ओजसा० संभूता इति । 'तत्' तदानीं 'यत्र' यस्मिन् देशे यज्ञ 'एन' पलायमानं विष्ण्वात्मकं यज्ञं 'इन्द्रः ओजसा' बलेन 'पर्यगृह्णात्' परिगृहीतवान् । 'तत्' तत्र परिगृहीतस्य स्वीकृतस्य 'अस्य' यज्ञस्य 'रसः' सारः 'व्यक्षरत्' विविधक्षरणेन भूमिं प्राप्नोत् । 'स' च रसः तत्र 'द्रुभ्नित्र' रसान्तरं प्राप्त पर्युषित ओदनादिकमिव विरसो भवन् इव 'अतिष्ठत्' अतिष्ठत् । एवंभिन्ने 'न' 'इन्द्र' अन्तर्धान' । 'अन' इति वेदे । 'मे' मदीयः

( स्ता ) तान्वाऽएतान्पञ्च सम्भारान्त्सम्भरति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः सम्वत्सरस्य सम्वत्सरऽएष यऽएष तपत्येषऽ उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तान्त्सम्भृतानभिमृशति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ १४ ॥

(र)अथोत्तरतः परिश्रितम्भवति । तदभिप्रयन्तो जपन्ति प्रैतु ब्रह्मणस्पतिरित्येष वै ब्रह्मणस्पतिर्यऽएष तपत्येषऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह प्रैतु ब्रह्मणस्पतिरिति प्र देव्येतु सूनृतेति देवी ह्येषा सूनृताऽच्छा वीरन्नर्य्यं पङ्क्तिराधसमित्युपस्तौत्येवैनमेतन्महयत्येव देवा यज्ञन्नयन्तु नऽइति सर्वानेवास्माऽएतद्देवानभिगोप्तॄन्करोति ॥ १५ ॥

---

तान्वा एतान्पंच सभारान्त्सभरति । पाङ्क्तो यज्ञः । पाङ्क्तः पशुः । पचर्तवः संवत्सरस्य । संवत्सर एषः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तान्सभृतानभिमृशति–"मखाय त्वा मखस्य त्वा शीर्ष्णे"–( वा स ३७ । ६ ) इति । असावेव बंधुः ॥ १४ ॥

अथोत्तरतः परिश्रित भवति । तदभिप्रयतो जपति–" प्रैतु ब्रह्मणस्पतिः "–इति । एष वै ब्रह्मणस्पतिः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह–" प्रैतु ब्रह्मण-

---

अथ एतान् मृदादिसभारान् विहितान् महत्व स्तौति–तान्वाऽएतान्पञ्च संभारान्० प्रीणातीति । 'तान्' पूर्वोक्तान् खलु एतान्मृद्वल्मीकवपादीन्पञ्च ' सभारान् सभरति ' न तु चतुर षड् वा । कुत ? ' यज्ञ पाङ्क्तो वै ' पङ्क्तिशब्देन छन्दोवाचिना पादगता पचसंख्या लक्ष्यते । पचसंख्यासबद्ध खलु, देवयज्ञ पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति पाचविध्यदर्शनात् । यद्वा धाना करभ परिवाप पुरोडाश पयस्या चेति पच हविर्योगात् यज्ञस्य पाङ्क्तत्वम् । इष्टिपशुदर्वीहोमैराहाहीनभेदेन वा । तथा गवाद्या पशवश्च पाङ्क्ता पचसंख्यासबद्धा, पादचतुष्टयमध्यदेशभेदेन । तस्मात् सभारगता पचसंख्या यज्ञार्हपशुप्राप्तिहेतु इत्यर्थ । अपि च संवत्सरस्य द्वादशमासात्मकस्य वसन्ताद्या ' पञ्चर्तव ' हेमतशिशिरयो समासेन । स च ' संवत्सर ' ' एष ' दृश्यमान सूर्य । ' य एष ' दिवि ' तपति ' सर्वं जगत्प्रकाशयति । ' एष ' एव प्रवर्ग्य । प्रवर्ग्याख्यस्य छिन्नस्य यज्ञशिरस सूर्यात्मना परिणामस्य प्राक् दर्शितत्वात् । एव पारपर्येण तत्तस्मात् एतमेव प्रवर्ग्यं पचसंख्यया एतत् ' एतर्हि ' प्रीणाति ' । अथ एकस्मिन् कृष्णाजिने सभृतानां सभाराणा समवतमभिमर्शनं विधत्ते–तान्त्सभृतानभिमृशति० बंधुरिति । ' तान् सभृतान् ' कृष्णाजिने समाहृत्य स्थापितान् मृदादिसभारान् ' अभिमृशति ' अभित सर्वत स्पृशति मखाय त्वेति मन्त्रेण । गतमन्यत् ॥ १४ ॥

अथ महावीरादिनिर्माणाय देवयजनस्योत्तरत परिश्रित भवतीत्याह–अथोत्तरतः परिश्रितं भवतीति । अथेत्यानन्तर्ये । एव सभाराहरणानन्तर ' उत्तरत ' देवयजनस्योत्तरस्या दिशि ' परिश्रित ' कटादिभि सर्वतो

---

१–सभारानभिमर्शयति मखायेति । का श्रौ. सू २६ । १२ ॥

पुरिश्रितम्भवति । ( त्ये ) एतद्वै देवाऽअबिभयुर्यद्वै नऽइममिह रक्षा-
ᳬसि नाष्ट्रा न हन्युरिति तस्माऽएताम्पुरम्पर्य्यश्रयंस्तथैवास्माऽअयमेता-
म्पुरम्परिश्रयति ॥ १६ ॥

स्पतिः "–इति । " प्र देव्येतु सूनृता "–इति । देवी ह्येषा सूनृता । " अच्छा वीरं नर्यं पङ्क्तिराधसम् "–इति । उपस्तौत्येवैनमेतत् महयत्येव । " देवा यज्ञं नयंतु नः "– ( वा. सं. ३७ । ७ ) इति । सर्वानेवास्मा एतद्देवानभिगोप्तॄन्करोति ॥ १५ ॥

परिश्रितं भवति । एतद्वै देवा अबिभयुः । यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति । तस्मा एता पुरं पर्यश्रयन् । तथैवास्मा अयमेतां पुरं परिश्रयति ॥ १६ ॥

वेष्टित स्थान कुर्यात् । अथ त देश प्रति सभाराणां गमनक्रमानयन विधत्ते–तदभिप्रयन्तो जपन्ति प्रैतु ब्रह्मणस्पतिरिति । ' तत् ' परिश्रित स्थान सभारैः सह अभिप्रयन्तः ' अभिगच्छन्तः प्रवर्ग्यकर्तारः ' प्रैतु ब्रह्मणस्पति " इति । इम मन्त्र जपन्ति ' । तदेतत् सूत्रकारेण–' कृष्णाजिन पाणृयो- त्तरेण पारवृत गच्छन्ति प्रैतु ब्रह्मणस्पतिरिति " ( का श्रौ स २६।१२ ) । अथ एतस्य मन्त्रभागस्य तात्पर्य- माह–एष वै ब्रह्मणस्पति० तत्प्रीणातीति । ' एष वै ' इत्यमात एव सर्व मन्त्रप्रतिपाद्यो ब्रह्मणस्पति ' ब्रह्मणो वेदस्य पति इति तदुत्पत्त्युपपत्त । सूर्यस्य च त्रयीमयत्वात् तत्पतित्व प्रसिद्धम् । अन्यत् पूर्ववत् योज्यम् । एव समवेतार्थत्वात् अय मन्त्र प्रवर्ग्यप्रयोगे इति निगमयति–तस्मादाह प्रैतु ब्रह्मणस्पति- रितीति । अथ द्वितीयभागमनूद्य प्रसिद्धया व्याचष्टे–प्र देव्येतु सूनृतेति । ' एषा ' प्रसिद्धा ' सूनृता ' प्रियसत्यात्मिका वाक् ' देवी हि ' अत्र अस्मिन्मन्त्रभागे ' देवी सूनृता इति प्रतिपाद्यते । सा च सूनृता ' देवी ' ' प्रैतु ' प्रगच्छतु इति मन्त्रार्थः । अथ तृतीयभागमनूद्य व्याचष्टे अच्छा वीरन्नर्यं० तन्महयत्येवेति । अस्य भागस्यायमर्थ । ' वीर ' शूर, ' नर्यं ' नरेभ्यो हित ' पङ्क्तिराधस ' पङ्क्तिशो निविष्टमनयुक्त यज्ञम् । इत्येव गुणनिष्ठगुणकीर्तनात् अनेन भागेन ' एन ' प्रवर्ग्यं ' उपस्तौत्येव ' उपश्लोकयत्येव । ' एतत् ' एतेन च उपस्तवनेन ' त महयति ' पूजयत्येव । अथ चतुर्थभागमनूद्य व्याचष्टे–देवा यज्ञं नयंतु न इति । सर्वानेवास्मा एतद्देवानभिगोप्तॄन्करोतीति । अस्य मन्त्रभागस्यायमर्थ । अविशेषात्, सर्वे ' देवा ' पूर्वोक्तगुणविशिष्ट यज्ञावयव प्रवर्ग्य ' न ' अस्मान् ' नयतु ' प्रापयतु । इत्यनेन मन्त्रभागेन अस्मै षष्ठ्यर्थे चतुर्थी ( पा सू. २ । ३ । ६२ । वा. ) इति । अस्य प्रवर्ग्यस्य ' सर्वानेव ' एतान् ' देवान् ' ' अभि- गोप्तॄन् ' अभितो रक्षकान् ' करोति ' ॥ १५ ॥

( त्यु ) अथ खरे सादयति । मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्य-सावेव बन्धुरथ प्रयौति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुरथ मृत्पिण्डमुपादाय महावीरङ्करोति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः प्रादेशमात्रम्प्रादेशमात्रमिव हि शिरो मध्ये सङ्गृहीतं मध्ये सङ्गृहीतमिव हि शिरोऽथास्योपरिष्टात्त्र्यङ्गुलं मुखमुन्न-यति नासिकामेवास्मिन्नेतद्दधाति तन्निष्ठितमभिमृशति मखस्य शिरोऽ-सीति मखस्य ह्येतत्सौम्यस्य शिरऽएवमितरौ तूष्णीं पिन्वने तूष्णीᳬ रौहिणकपाले ॥ १७ ॥

अथ खरे सादयति-" मखाय त्वा मखस्य त्वा शीर्ष्णे "-इति । असावेव बन्धुः । अथ प्रयौति-"मखाय त्वा मखस्य त्वा शीर्ष्णे "-इति । असावेव बन्धुः । अथ मृत्पिण्डमु-पादाय महावीरं करोति-" मखाय त्वा मखस्य त्वा शीर्ष्णे "-( वा. सं. ३७ । ७ ) इति । असावेव बन्धुः । प्रादेशमात्रम् । प्रादेशमात्रमिव हि शिरः । मध्ये संगृहीतम् । मध्ये संगृहीतमिव हि शिरः । अथोपरिष्टात्त्र्यंगुलं मुखमुन्नयति । नासिकामेवास्मिन्नेतद्दधाति । तं निष्ठितमभिमृशति-" मखस्य शिरोऽसि "-( वा. सं. ३७ । ८ ) इति । मखस्य ह्येतत्सौम्यस्य शिरः । एवमि-तरौ । तूष्णीं पिन्वने । तूष्णीं रौहिणकपाले ॥ १७ ॥

भूमिं ' पर्यश्रयन् ' पर्यवेष्टयन् रक्ष प्रभृतीनां निरोधनाय । यथैव देवा अकुर्वन् ' तथैव ' ' अथ ' अद्य-तनोऽपि यजमानः अध्वर्युर्वा 'अस्मै' प्रवर्ग्याय रक्ष प्रभृतिभ्यो रक्षणार्थं 'एता पुरं परिश्रयति' परिवेष्टयति॥ १६॥

मन्त्रेण स्वीकृत सभारजात " प्रैतु ब्रह्मणस्पति " इति मन्त्रेण प्रापित तस्मिन्परिश्रिते प्रदेशे निदध्यादि-त्याह-अथ खरे सादयति० बंधुरिति । इत्थ परिश्रितदेश प्राप्य अथानतर तन्मध्यगते ' खरे ' धिष्ण्ये, तत् सभारजात ' सादयति ' निदधाति " मखाय त्वेति " अनेनैव मन्त्रेण । तदेतत् स्पष्टीकृत सूत्रकारेण- " परिश्रिते निदधाति सभारानुद्धतावोक्षिते सिकतोपकीर्णे प्राग्द्वारे मखाय त्वेति " ( का. श्रौ. सू. २६ । १४ ) गतमन्यत् । अथ तेषा कृष्णाजिनस्थानां सभाराणां संमर्जन विधत्ते-अथ प्रयौति मखाय त्वा० बंधुरिति । ' अथ ' निधानानतर ' प्रयौति ' मिश्रीकरोति मृद्वल्मीकवपावराहविहतपूतिकाजार्क्षारलक्षणान् आहृतान् संभारान् यथा परस्परसमेलनेन श्लक्ष्ण भवति तथा " मखाय त्वा " इत्यनेन मन्त्रेण ससृजतीत्यर्थः । गतम-न्यत् । अथ तया ससृष्टया मृदा महावीरनिर्माणं विधत्ते-अथ मृत्पिण्डमादाय० बंधुरिति । ' अथ ' ससर्जनानतर ससृष्ट ' मृत्पिण्ड ' ' उपादाय ' हस्ताभ्या स्वीकृत्य " मखाय त्वेति " मन्त्रेण ' महावीर ' घर्महवि सतापसाधन पात्र ' करोति ' । गतमन्यत् । अथास्य पात्रस्य लक्षण दर्शयति-प्रादेशमात्रं प्रादेश-मात्रमिव० तद्दधातीति । स महावीर ' प्रादेशमात्र ' ऊर्ध्वप्रमाणेन प्रादेशपरिमित कुर्यात् । ' हि ' यस्मात्

१-सभारे सं०सृजति मखायेति । का. श्रौ. सू. २६ । १५ ।
२-मृदमादाय मखायेति महावीर करोति । का. श्रौ. सू. २६ । १६ ।

प्रजापतिर्वा एष यज्ञो भवति । (१८) उभयम्वा एतत्प्रजापतिर्निरुक्त-श्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति यदेवास्य निरुक्तं परिमितꣳ रूपन्तदस्य तेन सꣳस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्त-मपरिमितꣳ* रूपन्तदस्यैतेन सꣳस्करोति स ह वा एतꣳ सर्व्व-

---

प्रजापतिर्वा एष यज्ञो भवति । उभयं वा एतत्प्रजापतिः । निरुक्तश्चानिरुक्तश्च । परिमितश्चा-परिमितश्च । तद्यद्यजुषा करोति । यदेवास्य निरुक्तं परिमितं रूपम् । तदस्य तेन संस्करोति । अथ यत्तूष्णीम् । यदेवास्यानिरुक्तमपरिमितं रूपम् । तदस्यैतेन संस्करोति । स ह वा एतं सर्वं कृत्स्नं

---

'शिरो' मूर्धा लोके 'प्रादेशमात्रमिव' प्रादेशपरिमितमेव दृश्यते । तस्मात् प्रादेशमात्रं महावीरं कुर्यात् । तथा त 'मध्ये' 'संगृहीतं' सन्नतं कुर्यात् । लोके हि शिरः 'मध्ये संगृहीतमिव हि' सन्नतमिव खलु दृश्यते । 'अथ' अनन्तरमेव कृत्वा अस्य महावीरस्य 'उपरिष्टात्' उपरिभागे 'त्र्यङ्गुलं' अङ्गुलत्रयपरिमितं मुख-मास्य 'उन्नयति' । ऊर्ध्वं प्रापयति । 'एतत्' एतेन मुखोन्नयनेन 'अस्मिन्' महावीरे यज्ञशिरसि 'नासिकामेव दधाति' स्थापितवान् भवति । सूत्रकारेण च एतन्महावीरलक्षणं स्पष्टीकृतम्—"प्रादेशमात्रमूर्ध्वसानिवन्नतं मेख-लावन्तं मध्यसंगृहीतमूर्ध्वं मेखलायास्त्र्यङ्गुलम्" (का. श्रौ. सू. २६।१।७) इति । एवं उक्तलक्षणमेतं महावीरं कृत्वा, अथ तस्य समन्त्रकमभिमर्शनं विधत्ते—तं निष्ठितमभिमृशति० शिरः इति । 'तं' महावीरं 'निष्ठितं' निःशेषेण स्थितं सर्वलक्षणयुक्तत्वेन निष्पन्नं "मखस्य शिरोऽसि" इति मन्त्रेण 'अभिमृशति' । सोऽयमस्य मखस्य' सोमयागस्य 'एतत्' एव महावीरः 'शिरो हि' शिरः खलु मूर्धा खलु । "महान् वत नो वीरोऽभूदिति" इति निर्वच-नस्य दर्शितत्वात् (श. प. १४।१।१।११) । अतः तदभिमर्शने "मखस्य शिरोऽसि" इति मन्त्र सार्थ इत्यर्थः । एवं प्रवर्ग्यस्य महावीरस्य निर्माणमुक्तम् । अथ अप्रवर्ग्यार्थौ द्वावन्यौ महावीरौ अपि एतदति-दिशति—एवमितरौ इति । मृत्पिण्डोपादानादिना निष्ठिताभिमर्शनान्तेन येन प्रकारेण प्रथमो महावीरः कृतः । एवमनेनैव प्रकारेण द्वितीयतृतीयावपि महावीरौ कार्यौ । अथ एतयैव मृदा प्रवर्ग्योपयुक्तान्यन्यानि पात्राण्यपि कर्तव्यानीत्याह—तूष्णीं पिन्वने तूष्णीं रौहिणकपाले इति । पिन्वति सिञ्चति अनयोरिति पिन्वने । गोपयसः अजापयसश्च दोहनपात्रे । "पिवि सेचने" — (धा. पा. भ्वा प. ५९९) इत्यस्मात् "करणाधिकरण-योश्च (पा. सू. ३।३।११७) इति ल्युट् । एते 'पिन्वने' 'तूष्णीं' मन्त्रवर्जं महावीरावशिष्टया एतयैव मृदा कर्तव्ये । तथा 'रौहिणकपाले' रौहिणौ पुरोडाशौ अपि विश्रयेते । तयोरधिश्रयणार्थे द्वे कपाले 'तूष्णीं' मन्त्रवर्जं कर्तव्ये । एतयोः पिन्वनयोः कपालयोश्च लक्षणं सूत्रकारेण एवमुक्तम्—"कुक्षुप्रपादे पिन्वने रौहिण-कपाले परिमण्डले"—(का. श्रौ. सू. २६।१।२१) इति ॥ १७ ॥

यत् एतत् समन्त्रकं महावीरनिर्माणं अमन्त्रकं पिन्वनादिनिर्माणं च उक्तम् । तदेतत् उभयं प्रशंसति— प्रजापतिर्वा एष यज्ञोऽतद्वै करोतीति । 'एषः' क्रियमाणः 'यज्ञः प्रजापतिः' प्रजापतिरूपो वा

---

* 'रूपन्तदस्य तेन' इति मुद्रिते पाठः ।

१—निष्ठितमभिमृशति मखस्य शिर इति । महत्त्वेऽपि । का. श्रौ. सू. २६।१८।१९।

२—एवमितरौ प्रतिमन्त्रम् । का. श्रौ. सू. २६।२०।

इ कृत्स्नम्प्रजापतिꣳ सꣳस्करोति य एवम्विद्वानेतदेवङ्करोत्यथोपशयायै पिण्डम्परिशिनष्टि प्रायश्चित्तिभ्यः ॥ १८ ॥

(भ्योऽथ) अथ गवेधुकाभिर्हिन्वति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत एता ओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्क-

---

प्रजापतिं संस्करोति । य एवं विद्वानेतदेवं करोति । अथोपशयायै मृत्पिण्डं परिशिनष्टि प्रायश्चित्तिभ्यः ॥ १८ ॥

अथ गवेधुकाभिर्हिन्वति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत् । तत एता ओषधयो जज्ञिरे ।

---

'भवति' ओश्रावयेत्यादिमन्त्राक्षरसमुदायात्मना प्रजापतेः यज्ञे प्रविष्टत्वात् । तथा च आश्रावयेत्यादीनि प्रकृत्य तैत्तिरीयके "एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः" ( तै. सं. १। ६। ११ ) इति । स च प्रजापतिरेतच्च वक्ष्यमाणं 'उभयं वै' उभयात्मकः । तदेव उभयविधत्वं दर्शयति—निरुक्तश्चानिरुक्तश्चेति । तस्य जगदात्मनो प्रजापतेर्यो भागः स 'निरुक्तः' आकाशवाय्वादिभूतभौतिकप्रपञ्चात्मना विशेषेण उक्तः प्रकटीकृतो भवति । यस्तु कार्यात्मकः कारणरूपो भागः स 'अनिरुक्तः' । अस्मदादिभिः दुरधिगमत्वात् निर्वचनानर्हः । तथा एतावुभौ भागौ परिच्छिन्नापरिच्छिन्नत्वात् 'परिमितश्चापरिमितश्च' भवतः । एवं प्रजापतिरुभयात्मकः । किं तत इत्याह—यद्यादिति । तत्तथा सति यत्कर्म 'यजुषा' मन्त्रेण 'करोति' । 'यदेवास्य' प्रजापतेर्निरुक्तं परिमितं रूपं प्राक् दर्शितमाकाशवाय्वादिभूतात्मकं जातम् अस्य 'प्रजापतेः' तद्रूपं 'तेन' समन्त्रकेण कर्मणा 'संस्करोति' सम्यक् सातिशयं करोति । अथेति उत्तरवाक्यार्थे । यत्कर्म तूष्णीममन्त्रकं यज्ञे क्रियते । 'अस्य' प्रजापतेः 'यदेवानिरुक्तमपरिमितं रूपं' कारणात्मकम् । 'अस्य' प्रजापतेः तद्रूपं 'तेन' अमन्त्रकेण कर्मणा 'संस्करोति' । किं अविशेषेण सर्वो यजमान इत्थं प्रजापतिं संस्करोति नेत्याह—स हेति । 'यः' यजमानः 'एवं' उक्तं ब्राह्मणार्थं 'विद्वान्' जानन् 'एतत्' यज्ञकर्म 'एवं' समन्त्रकममन्त्रकं च करोति' । 'स हैव' । स खलु 'कृत्स्नं' प्रजापतिं कृत्स्नं सम्पूर्णावयवं सर्वं सर्वात्मना निरवशेषं 'संस्करोति ।' अथ पिण्डस्य मृत्पिण्डस्य उपयोगमाह—तदाह तत्प्रसङ्गात् तद्दर्शयति—अथोपशयायै० प्रायश्चित्तिभ्य इति । उप समीपे शय्यते प्रयोजनाभावेन स्थाप्यते अनया इत्युपशया । महावीरादिभ्यो अतिरिक्ता मृत् । षष्ठ्यर्थे चतुर्थी ( पा सू. २ । ३ । ६२ वा ) । 'अथ' रौहिणकपालनिर्माणानन्तरं 'उपशयायै' अवशिष्टाया मृदः पिण्डं 'परिशिनष्टि' परिशेषयति सुगुप्तं धारयतीत्यर्थः । किमर्थं 'प्रायश्चित्तिभ्यः' प्रायश्चित्तार्थं यदि प्रवर्ग्यप्रचरणसमये महावीरादीनां मृण्मयानां अन्यतमं भिद्यते । तदा तस्य पुनर्निर्माणाय मृत् अपेक्ष्यते । तदर्थं मन्त्रसंस्कृतं मृत्पिण्डं अवशिष्टं धारयेदित्यर्थः ॥ १८ ॥

अथ यदुक्तं सूत्रकारेण—"गवेधुकाभिः श्लक्ष्णयति" ( का श्रौ सू २६ । २३ ) इति । तदेतत्

---

१—"ता वा एताः पञ्च व्याहृतयो भवन्ति आश्रावयास्तु श्रौषट् यज ये यजामहे वौषडिति, पाङ्क्तो यज्ञः, पाङ्क्तः पशुः पञ्चर्तवः संवत्सरस्य एषैव यज्ञस्य मात्रा एषा सम्पत्" । इति पञ्चिकापदमनूद्य तदग्रे कण्डिकायाम्—"तासां सप्तदशाक्षराणि, सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञ एषैव यज्ञस्य मात्रा एषा सम्पत्" । ( श प ५ । २ । १६–१७ ) इति ॥

२—गवेधुकाभिः श्लक्ष्णयति । ( का. श्रौ. सू. २६ । २३ । )

ङ्करोति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुरेवमितरौ तूष्णी-म्पिन्वने तूष्णीᳬं रौहिणकपाले ॥ १९ ॥

( ८ ) अथैनान्धूपयति । ( त्रु ) अश्वस्य त्वा वृष्णः शक्ना धूपयामीति वृषा वाऽअश्वो वीर्यम्वै वृषा वीर्येणैवैनमेतत्समर्द्धयति कृत्स्नं करोति देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्वने तूष्णीᳬं रौहिणकपाले ॥ २० ॥

---

तेनैवैनमेतद्रसेन समर्द्धयति । कृत्स्नं करोति । "मखाय त्वा मखस्य त्वा शीर्ष्णे "–( वा. सं. ३७ । ८ ) इति । असावेव बंधुः । एवमितरौ । तूष्णीं पिन्वने । तूष्णीं रौहिणकपाले ॥ १९ ॥

अथैनान् धूपयति–" अश्वस्य त्वा वृष्णः शक्ना धूपयामि "–इति । वृषा वा अश्वः । वीर्यं वै वृषा । वीर्येणैवैनमेतत्समर्द्धयति । कृत्स्नं करोति । " देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णे "–( वा स ३७ । ९ ) इति । असावेव बन्धुः । एवमितरौ । तूष्णीं पिन्वने । तूष्णीं रौहिणकपाले ॥ २० ॥

---

विधाय स्तौति–अथ गवेधुकाभिः० बंधुरेवमितरावेति । अथ ' निमार्जनानन्तरं प्रथमकृतं महावीरं ' गवेधुकाभि ' गवेधुका आरण्यगोधूमाख्या ओषधयः ताभिर्हिन्वति धूपयति । पुरा खलु छिन्नशिरस्कस्य ' यज्ञस्य रस ' सुतोऽभवत् । ततस्तस्माद्रसात् ' एता ' गवेधुकाख्या ' ओषधय उज्झिरे ' जाता । ' एतत् ' एतेन गवेधुकाभि हिन्वनेन ' तेनैव ' प्राक्सुतेन रसेन एनं ' यज्ञ ' समर्द्धयति ' । गतमन्यत् । अथ पूर्ववत् पिन्वनयो रौहिणकपालयोश्च मयवर्जं गवेधुकाभि स्पर्शनाख्यं विधत्ते–तूष्णीं पिन्वने तूष्णीᳬं रौहिणकपाले इति । सिद्धमेतत् ॥ १९ ॥

अथ एतेषां अश्वशकृता धूपनं विधत्ते–अथैनान् धूपयत्यश्वस्य त्वा वृष्णः शक्ना धूपयामीति । ' अथ ' हिन्वनानन्तरं ' एनान् ' महावीरादीन् ' धूपयति ' अग्नौ अश्वशकृत्प्रक्षिप्य तद्धूमेन वासयति । तत्र प्रथमकृतं महावीरं " अश्वस्य त्वेति " मन्त्रेण प्रथमं धूपयेत् । अस्य मन्त्रभागस्य प्रयोजनमभिप्रेत्याह–वृषा वा अश्वो वीर्यं० कृत्स्नं करोतीति । ' वृषा वै ' सेचनसमर्थ खलु ' अश्वः ' । अत ' वृष्ण ' अश्वस्येति विशेष्यते, स च ' वृषा ' ' वीर्यं वै ' वीर्यात्मकः । निर्वीर्यस्य सेचनसामर्थ्याभावात् । तथा च ' एतत् ' एतेन वृषणसमर्थाश्वशकृद्धूमेन ' वीर्येणैव ' ' एनं ' प्रवर्ग्यं ' समर्द्धयति ' । गतमन्यत् । अवशिष्टं मन्त्रभागमनूद्य तात्पर्यमाह–देवयजने पृथिव्या० बन्धुः इति । व्याख्यातमेतत् । द्वितीयतृतीययोरपि महावीरयो उक्तं धूपनं अतिदिशति–एवमितराविति । सिद्धमेतत् । तथा च सूत्रितम्– " अश्वशकृता धूपयत्यश्वस्य त्वेति प्रतिमन्त्रम् " ( का श्रौ सू २६ । २४ ) इति । अथ पिन्वनादीनां पूर्ववत् अमन्त्रकं धूपनं विधत्ते–तूष्णीं पिन्वने तूष्णीᳬं रौहिणकपाले इति । सिद्धमेतत् ॥ २० ॥

( ८ ) अथैनाञ्छ्रपयति । शृतᳬ हि देवानामिष्टकाभिः श्रपयत्येता वाऽएतदकुर्व्वत यथायथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति तदु येनैव सुशृताः स्युस्तेन श्रपयेदथ पचनमवधाय महावीरमवदधाति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्वने तूष्णीᳬ रौहिणकपाले तान्दिवैवोपवपेद्दिवोद्वपेदहर्हि देवानाम् ॥ २१ ॥

---

अथैनान् श्रपयति । शृतं हि देवानाम् इष्टकाभिः श्रपयति । एता वा एतदकुर्वत । यथायथैतद्यज्ञस्य शिरोऽच्छिद्यत । ताभिरेवैनमेतत्समर्द्धयति । कृत्स्नं करोति । तदु येनैव सुशृताः स्युः । तेन श्रपयेत् । अथ पचनमवधाय महावीरमवदधाति—" मखाय त्वा मखस्य त्वा शीर्ष्णे "—( वा. सं. ३७ । ९ ) इति । असावेव बन्धुः । एवमितरौ । तूष्णीं पिन्वने तूष्णीं रौहिणकपाले । तान्दिवैवोपवपेत् । दिवोद्वपेत् । अहर्हि देवानाम् ॥ २१ ॥

---

अथ एतेषां महावीरादीनां श्रपणं विधत्ते—अथैनाञ्छ्रपयति शृतᳬ हि देवानाम् इति । ' अथ ' धूपनानन्तरं ' एनान् ' महावीरादीन् ' श्रपयति ' दक्षिणाग्निसमीपे चतुरस्रं अवटं खात्वा तत्र निधाय आपाकं पक्वान् करोति । ' हि ' यस्मात् । ' शृतं ' पक्वं खलु ' देवानां ' योग्यम् । "यो विदग्धः स नैर्ऋतः । योऽशृतः स रौद्रो यः शृतः स देवस्तस्मादविदहता शृतकृत्यः स देवत्वाय" ( तै. सं. २।६।३ ) इति श्रुतेः । अथ एतेषां पचनद्रव्याणि विधाय स्तौति—इष्टकाभिः श्रपयत्येता वा एतदकुर्व्वत यथायथैत० कृत्स्नं करोतीति । अत्र इष्टकानां पचनसाधनत्वानुपपत्तेः, तद्व्यतिरिक्तानि इष्टकाशब्देन तत्पचनसाधनानि इषुपर्णकाषादीनि द्रव्याणि लक्ष्यन्ते । ' इष्टकाभिः ' इष्टकापचनसाधनैर्द्रव्यैः ' एनान् ' महावीरादीन् ' श्रपयति ' पचति । ' एता वै ' एताः खलु इष्टकाः ' एतदकुर्वत ' एवंविधं यज्ञं कृतवत्यः । ' यथायथा ' यन्येन प्रकारेण ' यज्ञस्य एतच्छिरः अच्छिद्यत ' छिन्नमभवत् । इष्टकापचनद्रव्यान्विता हि वम्र्यः यज्ञात्मकस्य विष्णोः ज्याभक्षणेन शिरश्चिच्छिदुः इति तदभिप्रायमिदम् । यद्वा धर्मार्थं कुशायिन्याद्या इष्टकाः ताभिः सह एनान् महावीरादीन् श्रपयतीति नियोजना द्रष्टव्या । गतमन्यत् । अन्यतोऽपि येन द्रव्येण सम्यक् पाको भवति तेनापि श्रपणं कार्यमित्याह—तदु येनैव सुशृताः स्युस्तेन श्रपयेत् इति । ' तत् उ ' तत्रापि ' येनैव ' पचनद्रव्येण ' सुशृताः ' सुपक्वाः खण्डकृष्णादिदोषरहिता लोहितवर्णाः स्युः महावीरादयो भवेयुः । ' तेन ' द्रव्येण ' श्रपयेत् ' एनान् पचेत् । अथ पचनप्रकारमाह—अथ पचनमवधाय० रौहिणकपाले इति । ' अथ ' धूपनानन्तरं पच्यते अनेनेति ' पचनं ' पाकसाधनं द्रव्यं करीषेषुपर्णादिकं तत् ' अवधाय ' अवटे प्रक्षिप्य महावीरं प्रथमकृतं ' अवदधाति ' प्रक्षिपति "मखाय त्वा" इति मन्त्रेण । अवशिष्टं सर्वं पूर्ववद्योजनीयम् । अथ एतयोः आवापोद्वपनयोः कालविशेषमाह—तान्दिवैवोपवपेद्दिवोद्वपेदहर्हि देवानाम् इति । ' तान् ' पक्तव्यान् महावीरा-

---

१—उखावदधे । का. श्रौ. सू. २६ । २४ । अग्नावादिना " ततस्त्रिभिरश्वशकृद्भिरेकैका धूपयति दक्षिणाग्न्यादीपितैरेकैकेनेति का. श्रौ. सू. १६ । १०८ ।

२—मखस्य च मखाय त्वेति प्रतिमन्त्रम् । का. श्रौ. सू. २६ । २४ ।

( १५ ) सऽउद्वपति । ( त्य ) ऋतवे त्वेत्यसौ वै लोकऽऋतुः सत्यꣳ ह्यृतुः सत्यमेष यऽएष तपत्येषऽउ प्रथमः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाहर्त्तवे त्वेति ॥ २२ ॥

साधवे त्वेति । ( त्य ) अयं वै साधुर्योऽयम्पवतऽएष हीमाँल्लोका-न्त्साधोऽनुपवतऽएषऽउ द्वितीयः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह साधवे त्वेति ॥ २३ ॥

---

स उद्वपति—"ऋतवे त्वा"—इति । असौ वै लोक ऋतुः । सत्यं हि ऋतुः । सत्यमेषः । य एष तपति । एष उ प्रथमः प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह—" ऋतवे त्वा "—इति ॥२२॥

" साधवे त्वा " इति । अयं वै साधुः । योऽयं पवते । एष हीमाँल्लोकान्त्साधोऽनुपवते । एष उ द्वितीयः प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह—" साधवे त्वा "—इति ॥ २३ ॥

सुक्षित्यै त्वेति । ( त्य ) अयम्वै लोकः सुक्षितिरस्मिन्हि लोके सर्व्वाणि भूतानि क्षियन्त्यथोऽ अग्निर्वै सुक्षितिरग्निर्ह्येवास्मिंल्लोके सर्व्वाणि भूतानि क्षियत्येषऽउ तृतीयः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सुक्षित्यै त्वेति तूष्णीम्पिन्वने तूष्णीᳬं रौहिणकपाले ॥ २४ ॥

( ऽ ) अथैनानाच्छृणत्ति । ( त्य ) अजायै पयसा मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्वने तूष्णीᳬं रौहिणकपाले २५

( ऽ ) अथैतद्वै । ( द्वाऽआ ) आयुरेतज्ज्योतिः प्रविशति यऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ २६ ॥

इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ १४।१।२ ॥ ( १-२ )

---

" सुक्षित्यै त्वा "-( वा सं. ३७।१० ) इति । अयं वै लोकः सुक्षितिः । अस्मिन् हि लोके सर्वाणि भूतानि क्षियन्ति । अथो अग्निर्वै सुक्षितिः । अग्निर्ह्येवास्मिंल्लोके सर्वाणि भूतानि क्षियति । एष उ तृतीयः प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह-" सुक्षित्यै त्वा "-इति । तूष्णीं पिन्वने । तूष्णीं रौहिणकपाले ॥ २४ ॥

अथैनानाच्छृणत्ति । अजायै पयसा-" मखाय त्वा मखस्य त्वा शीर्ष्णे "-( वा. सं ३७ । १० ) इति । असावेव बंधुः । एवमितरौ । तूष्णीं पिन्वने । तूष्णीं रौहिणकपाले ॥ २५ ॥

अथ एतद्वा आयुः एतज्ज्योतिः प्रविशति । य एतमनु वा ब्रूते । भक्षयति वा । तस्य व्रतचर्या, या सृष्टौ ॥ २६ ॥

---

अथ तृतीयस्य महावीरस्योद्वपनमाह-सुक्षित्यै त्वेतीति । अत्रापि उद्वपतीति पूर्ववत् अनुषज्यते । " सुक्षित्यै त्वेति " मन्त्रेण अध्वर्युः तृतीयं महावीरं उद्वपेत् इत्यर्थः । अथ अस्य मन्त्रस्य अनेन तृतीयेन महावीरेण सगतिमाह-अयं वै लोकः सुक्षितिः० सुक्षित्यै त्वेतीति । ' अयं ' खलु सर्वेषामाधारभूतो भूलोकः ' सुक्षितिः ' । तस्य सुक्षितित्वं उपपादयति-अस्मिन् हीति । अस्मिन् ' खलु ' लोके ' ' सर्वाणि ' भूतजातानि पशुपक्षिमृगादीनि ' क्षियन्ति ' निवसन्ति । अतो भूलोकः सुक्षियन्ति अस्मिन्निति व्युत्पत्त्या सुक्षितिः । ' अथो ' इति पक्षान्तरे अग्निः खलु सुक्षितिः । कुतः ? अग्निरेव खलु अस्मिन् भूलोके वर्तमानानि सर्वाणि भूतानि क्षियति जाठरादिरूपेणाश्रित्य वर्तते । ' एष उ ' एतदात्मक एव ' तृतीयः प्रवर्ग्यः ' । अन्यत् पूर्ववत् योज्यम् । एवमेव पिन्वनयोः कपालयोः अमन्त्रक उद्वापः कार्य इत्याह-तूष्णीं पिन्वने तूष्णीᳬं रौहिणकपाले इति ॥ २४ ॥

अथ तेषां आवापात् उद्धृतानामजाक्षीरेण आसेचनं विधत्ते अथैनानाच्छृणत्ति० कपाले इति । ' अथ ' उद्वपनानन्तर ' एनान् ' महावीरादीन् सतप्तान् पात्रविशेषान् अजायै' षष्ठ्यर्थे चतुर्थी । ( पा सू २।३।६२वा ) अजायाः 'पयसा' क्षीरेण "मखायत्वा" इति मन्त्रेण 'आ तृणत्ति' आसिक्तान् करोति । अन्यत् पूर्ववत् योज्यम् २५

[1]प्रवर्ग्यप्रदिष्टिप्रतिपादकप्रथमब्राह्मणे " न तपति प्रच्छादयेत " ( क. १३ ) इत्यादिना या व्रतचर्या उपदिष्टा

---

१-अजापयसाऽवसिंचति मखायेति प्रतिमन्त्रम् । तूष्णीं पिन्वनादीना करणाभिमर्शनक्षणनप्रपूरणादीनाद्वरणवचनानि का श्रौ सू २६ । २७ ॥

स यदेतदातिथ्येन प्रचरति । ( त्यु ) अथ प्रवर्ग्येण चरिष्यन्पुरोपसदोऽग्रेण गार्हपत्यम्प्राचः कुशान्त्सᳪंस्तीर्य्य द्वन्द्वम्पात्राण्युपसादयत्युपयमनीं महावीरम्परीशासौ पिन्वने रौहिणकपाले रौहिणहवन्यौ स्रुचौ यद्वु चान्यद्भवति तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयत्यथ यद्द्वन्द्वन्द्वन्द्वम्वै वीर्य्यं यदा वै द्वौ सᳪंरभेतेऽथ तौ वीर्य्यङ्कुरुतो द्वन्द्वम्वै मिथुनम्प्रजननम्मिथुनेनैवैनमेतत्प्रजननेन समर्द्धयति कृत्स्नङ्करोति ॥ १ ॥

घर्मसन्दीपनं ब्राह्मणम् ।

स यदेतदातिथ्येन प्रचरति । अथ प्रवर्ग्येण चरिष्यन् पुरोपसदोऽग्रेण गार्हपत्यं प्राचः कुशान्त्संस्तीर्य द्वंद्वं पात्राण्युपसादयति । उपयमनीं महावीरं परीशासौ पिन्वने रौहिणपाले रौहिणहवन्यौ स्रुचौ । यद्वु चान्यद्भवति । तद्दश । दशाक्षरा वै विराट् । विराड् वै यज्ञः । तद्विराजमेवैतद्यज्ञमभिसंपादयति । अथ यद्द्वन्द्वम् । द्वंद्वं वै वीर्यम् । यदा वै द्वौ संरभेते । अथ तौ वीर्यं कुरुतः । द्वंद्वं वै मिथुनं प्रजननम् । मिथुनेनैवैनमेतत्प्रजननेन समर्द्धयति । कृत्स्नं करोति ॥ १ ॥

सा न केवल तद्ब्राह्मणार्थस्यैव शेषभूता । किंतु [illegible] प्रवर्ग्यस्य तदनुवचनस्य च शेषभूतेति वक्तु तत्तद्ब्राह्मणावसाने पुन पुन [illegible]—अथैनं द्वे० मघवन्निति । 'मखो' इत्यादिप्रतिपादके प्रवर्ग्यब्राह्मणोत्पत्तिप्रतिपादके प्रथमब्राह्मणे 'या' [illegible] प्रतिपादिता । [illegible] द्रष्टव्या । अन्यत् प्रथमब्राह्मणवत् योज्यम् ॥ २६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्दशे काण्डे तदन्तर्भूते प्रथमे प्रवर्ग्यकाण्डे प्रथमऽध्याये द्वितीयं ब्राह्मणम् ॥ १४ ( १ )। १ । २ ॥

अथ द्वितीयेन ब्राह्मणेन प्रवर्ग्यप्रयोगा महावीरादीनां सम्भरणमुक्तम् । अथ [illegible] प्रवर्ग्यः प्रतिपाद्यते । तत्र तावत् घर्मसन्दीपन तृतीयेन ब्राह्मणेन प्रतिपाद्यते । अस्य च प्रवर्ग्यस्य अनारभ्याधीतत्वेन [illegible] वाक्यात् अनुप्रवेशमाह स यदेतदातिथ्येन० पुरोपसद इति । 'स' अध्वर्युः 'यदा' यस्मिन्काले 'एतत्' 'एतेन' 'आतिथ्येन' अतिथिभूतस्य सोमराजस्य प्रीत्यर्थं क्रियमाणेन नवकपालेन पुरोडाशेन 'चरति' यजति । तदा 'उपसदः पुरा' उपसदागस्य पुरस्तात् एतेन उत्तरावधिनिर्देशेन [illegible] तान्[illegible] कृत्वा 'प्रवर्ग्येण' वक्ष्यमाणेन प्रवर्ग्यप्रयोगेण 'चरिष्यन्' आचरिष्यन् अनुष्ठास्यन् सन् इत्युक्तं भवति । उपसदां पुरस्तात् प्रवर्ग्यं कर्तव्यं इति विधि अर्थसिद्धो भवति । तत्र तावत् असंस्कृतानां पात्राणां यागानर्हत्वात् तत्संस्काराय पात्रासादनमाह—अग्रेण गार्हपत्यं० तद्दशेति ।

१—[illegible] । [illegible] सू ० ६ । १८ ।
२—पूर्वेण गार्हपत्यं प्राचः [illegible] द्वंद्वम् । का. श्रौ. सू. २६ । १ । ३६ ।

( ११ ) अथाध्वर्युः प्रोक्षणीराद्यायोपोत्तिष्ठन्नाह ब्रह्मन्प्रचरिष्यामो होत-रभिष्टुहीति ब्रह्मा वै यज्ञस्य दक्षिणतऽआस्तेऽभिगोप्ता तमेवैतदाहाम-

अथाध्वर्युः प्रोक्षणीरादायोपोत्तिष्ठन्नाह । ब्रह्मन्प्रचरिष्यामः, होतरभिष्टुहीति । ब्रह्मा वै यज्ञस्य

' गार्हपत्यमग्रेण ' गार्हपत्यस्याग्रेण पुरस्तात् ' प्राचः ' प्रागग्रान् ' कुशान् ' संस्तीर्य तेषु पात्राणि ' द्वंद्वं ' द्विशो द्विश उपसादयति । उपयमनम् अधस्ताद्धारणं तत्तस्य महावीरस्य अधः धारणार्थो औदुंबरी दार्वमयी स्रुग् उपयमनी नाम । प्रथमत एव महावीरं एकं द्वन्द्वमासादयेत् । अथ ' पराशांसी ' अग्रवर्णार्थौ महावीरौ द्वितीयं द्वन्द्वम् । ' पिन्वने रौहिणकपाले ' । रौहिणौ पुरोडाशौ हूयेते आभ्यामिति ' रौहिणहवन्यौ ' औदुंबर्यौ अबिल ' स्रुचौ ' च । एतानि त्रीणि द्वन्द्वानि आसादनीयानि । ' यदु च ' यच्चान्यत् उक्तव्यतिरिक्तं पात्रजातं अपेक्षितं भवति । तदन्यदपि सर्वमासादनीयमित्यर्थः । तत्रावशिष्टं पात्रजातं सूत्रकारेण प्रदर्शितम्—" स्थूणां मयूखं, धृष्टी, शतमाने, मुञ्जप्रलवान् विकङ्कतशकलान् विंशतिं प्रादेशमात्रान् स्रुवं स्रुग्वेदं पवित्राणि परिधींश्च, रज्जुसंदानं आसन्दीं कृष्णाजिनं अभ्रिं सिकता खनार्थाम् अर्थवच्च "—( का श्रौ सू. २६ । ३७ ) इति । अथ ब्राह्मणोक्तानां उपयमन्यादीनां दशसंख्या विधाय स्तौति—तद्दश दशाक्षरा वै० संपादयतीति । उपयमन्यादीनि यानि आसादनीयानि प्रत्यक्षाम्नातानि पात्राणि तानि ' दश ' भवन्ति । विराट्छंदश्च ' दशाक्षरा ' त्रिंशदक्षरायाः विराजः त्रिपात्त्वेन प्रतिपादं दशाक्षरत्वात् । सैव ' विराट् यज्ञः ' अग्निष्टोमः । तस्य द्वादशस्तोत्रगत स्तोत्रियापरिगणनायां नवतिशतं स्तोत्रिया भवन्ति । तत्र दशसंख्यया विभागे सति विराट्संपत्ते यज्ञस्य विराडात्मकत्वम् । तत्तथा सति ' एतत् ' एतेन पात्रदशकासादनेन ' इमं ' यज्ञं प्रवर्ग्यानुष्ठानकाल एव विराजं ' अभिसंपादयति ' प्रापयति । अथ तेषां द्वन्द्वश आसादनं प्रशंसति—अथ यद्द्वंद्वं० करोतीति । ' अथ ' अपि च ' यत् द्वन्द्वं ' पात्राणां द्वन्द्वश आसादनं तेन प्रवर्ग्यं वीर्यवत् करोति । कुत एतत् ? ' द्वन्द्वं वै ' सर्वभावानां मध्ये यः द्वन्द्वलक्षणो धर्मः तदेव ' वीर्यं ' वीर्यात्मकम् । अथैतदुपपादयते—' यदा ' खलु ' द्वौ ' पुरुषौ ' संरभेते ' संरब्धौ संयुक्तौ भवतः । ' अथ ' अनन्तरं ' तौ ' संरब्धौ पुरुषौ ' वीर्यं ' सामर्थ्यं ' कुरुतः ' न तु असहायः कश्चित् वीर्यं कर्तुं शक्नोति । तस्मात् द्वन्द्वं वीर्यात्मकम् । तेन च पात्रमपि तेन प्रवर्ग्योऽपि वीर्यवान् भवतीत्युपपन्नम् । अपि च ' द्वन्द्वं वै ' द्वन्द्वमेव खलु ' मिथुनं ' स्त्रीपुंसात्मकं ' प्रजननं ' ' प्रजननेन ' स्त्रीपुंसात्मरूपेणैव प्रजासाधनेन ' एनं ' प्रवर्ग्यं ' समर्द्धयति ' ' कृत्स्नं ' संपूर्णावयवं च यज्ञं कृतवान् भवति ॥ १ ॥

अथ यदुक्तं कात्यायनेन—" प्रोक्षणीं संस्कृत्योद्यम्योत्थायाह ब्रह्मन्प्रचरिष्यामो होतरभिष्टुहि प्रस्तोतः सामानि

१–उपयमनं स्महावारम् । का श्रौ सू २६ । ३७ । २–पराशांसौ । का श्रौ सू २६ । ३७ । ३–पिन्वने । का श्रौ. सू २६ । ७ । ४–रौहिणकपाले । का श्रौ सू २६ । ३७ । ५–रौहिणहवन्यौ च स्रुवावनुत्कीर्णौ । का श्रौ सू २६ । ३७ । ६–स्थूणा च, मयूखश्च, इत्येकं द्वन्द्वं । गोबंधनार्था स्थूणा, स्तंभः । मावार्थो स्वदुवा स्रुग इति । मयूखः अजाबंधनार्थः स्तंभः । मावायामेध एक एव । ७–धृष्टी उपवषौ । ८–शतमाने राजते सौवर्णे च इति द्वे । ९–पवित्राणि कृष्णाजिनखंडनिर्मिता त्रयो व्यजना । परिधयश्च । १०–रज्जू च संदानं चेति इत्येकं द्वन्द्वं । रज्जु गोबंधनार्थौ अजाबंधनार्थौ चेति द्वे । संदानं दोहनकाले गोः पादबन्धनार्था रज्जुः । ११–अर्थवच्च स्रुव एक एव आसाद्यते । प्रकृतौ तस्य दृष्टत्वात् । ५ विध्यच्छेदनानि । पवित्रं । अग्निहोत्रहवणी । आज्यस्थाली । बहुलमाज्यं शूर्पम् । पात्री पिष्टम् । उपसर्जनीपात्रं उपशया । इतरो सह वीरो ह्यनूपदनम् । मौञ्जं कूर्चं, औदुंबरी समित् । इत्यर्थवत्पात्रासादनम् । १२–तत्र दशैकादशाद्वादशाक्षराणां वैराजत्रैष्टुभजागता इति संज्ञा । इति सर्वानुक्रम । ५ । १ । दशकाक्षरी विराट् । इति च । ५ । ४ । पादा इति शेष ।

मत्तऽआस्स्व यज्ञस्य शिरः प्रतिधास्यामऽइति होतरभिष्टुहीति यज्ञो वै होता तमेवैतदाह यज्ञस्य शिरः प्रतिधेहीति प्रतिपद्यते होता ॥ २ ॥

ब्रह्म जज्ञानम्प्रथमम्पुरस्तादिति । ( त्य ) असौ वाऽआदित्यो ब्रह्मा-हरहः पुरस्ताज्जायतऽएषऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह ब्रह्मजज्ञानम्प्रथमम्पुरस्तादित्यथ प्रोक्षत्यसावेव बन्धुः ॥ ३ ॥

---

दक्षिणत आस्तेऽभिगोप्ता । तमेवैतदाह । अप्रमत्त आस्स्व । यज्ञस्य शिरः प्रतिधास्याम इति । होतरभिष्टुहीति । यज्ञो वै होता । तमेवैतदाह । यज्ञस्य शिरः प्रतिधेहीति । प्रतिपद्यते होता ॥ २ ॥

“ब्रह्म जज्ञानं प्रथमं पुरस्तात”–( वा स १३ । ३ ) इति । असौ वा आदित्यो ब्रह्माहरहः पुरस्ताज्जायते । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह–“ब्रह्म जज्ञानं प्रथमं पुरस्तात”–इति । अथ प्रोक्षति । असावेव बन्धुः ॥ ३ ॥

---

गायेति” ( का श्रौ सू २६ । २८ ) इति । तत् विधत्ते–अथाध्वर्युः प्रोक्षणी० रभिष्टुहीति । प्रोक्ष्यते आभिरिति प्रोक्षण्य उत्पवनादिसंस्कृता प्रोक्षणाख्या आपः । ता सम्भृत्य ‘आदाय’ हस्ते धारयित्वा ‘उपोत्तिष्ठन्नध्वर्युः’ ‘ब्रह्मन्प्रचरिष्याम’ इति प्रैषमाह ब्रूयात् । तस्य प्रैषस्यायमर्थः । हे ब्रह्मन् ! वयं प्रवर्ग्येण ‘प्रचरिष्याम’ अस्मभ्यमनुज्ञां देहि । त्वं च सावधानो भव । ‘हे होतः !’ त्वं घर्मं ‘अभिष्टुहि’ अभि उद्दिश्य स्तोत्रं कुरु । “ब्रह्म जज्ञानम्” इत्यादिकं अभिष्टव मन्त्रजातम् । हे प्रस्तोतः ! त्वं घर्मलिङ्गकानि सामानि गायेति । तत्र ब्रह्मन्प्रचरिष्याम होतरभिष्टुहि इत्यनयोः तात्पर्यलभ्यम् अर्थमाह–ब्रह्म वै यज्ञ० धास्यामः इति । ‘ब्रह्मा’ खलु ऋत्विजां मध्ये यज्ञस्याभिगोप्ता सकलो रक्षिता सन् ‘दक्षिणतः’ दक्षिणभागे ‘आस्ते’ । अत एव अनन्तमेव ब्रह्माणमुद्दिश्य वक्ष्यमाणम् ‘आह’ प्रैषमत्र ब्रूयात् ‘हे ब्रह्मन् !’ त्वं ‘अप्रमत्तः’ प्रमादोऽनवधानता तद्रहितः सन् प्रयोगं सम्यग् अनुसन्दधानः ‘आस्स्व’ उपविश । वयं ‘यज्ञस्य’ छिन्नं ‘शिरः’ ‘प्रतिधास्यामः’ सन्धास्याम इति ‘ब्रह्मन्प्रचरिष्याम’ इति प्रैषमन्त्रार्थः । होतरभिष्टुहीति पुनरुपादानं व्याख्यानाय । यः अयं होता असौ साक्षात् यज्ञः । वषट्कर्तृत्वेन अत्यन्तम् अन्तरङ्गत्वात् । ‘तमेव’ यज्ञात्मकं होतारं एतद्वक्ष्यमाणम् ‘आह’ होतरभिष्टुहीति अनेन मन्त्रेण । एतदेवाभिप्रायमाह–हे होतः ! त्वं ‘यज्ञस्य’ छिन्नं ‘शिरः’ ‘प्रतिधेहि’ सन्धत्स्व इति । एवं अध्वर्युणा प्रार्थितस्य होतुः अभिष्टव प्रतिपदं विधत्ते–प्रतिपद्यते होता । ब्रह्म जज्ञानं प्रथमं पुरस्तादिति । अध्वर्युप्रैषानन्तरं होता ब्रह्म जज्ञानमित्यनिरुक्तवाक्यस्य ऋग्रूपस्य वक्तृप्रतिपद्यते । अथ अस्य होतुः अभिष्टवने यज्ञशिरःसन्धाने सामर्थ्यं अस्तीति दर्शयितुं अस्याः प्रतिपदः तात्पर्यगम्यम् अर्थं आह–असौ वा० दितीति । ‘असौ’ दूरेऽवस्थितः खलु ‘आदित्यः’ ‘ब्रह्म’ अस्यां ऋचि ब्रह्मशब्देन प्रतिपाद्यते । स आदित्यः ‘अहरहः’ प्रतिदिनं प्रातः ‘पुरस्तात्’ पूर्वस्यां दिशि ‘जायते’ उदेति । ‘एषः’ आदित्य एव ‘प्रवर्ग्यः’ “तानि त्वाऽसावादित्योऽभवत्” ( श प १४ । १ । १ । १० ) इति प्राक् आम्नातत्वात् । अतस्या च ‘एतमेव’ सूर्यात्मकं प्रवर्ग्यं ‘एतत्’ “ब्रह्म जज्ञानं प्रथमं पुरस्तात्”

स प्रोक्षति । यमाय त्वेत्येष वै यमो यऽएष तपत्येष हीदꣳ सर्वं यमयत्येतेनेदꣳ सर्वं यतमेषऽ उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह यमाय त्वेति ॥ ४ ॥

मखाय त्वेति । ( त्ये ) एष वै मखो यऽएष तपत्येषऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह मखाय त्वेति ॥ ५ ॥

---

स प्रोक्षति । "यमाय त्वा"-( वा. सं. ३७ । ११ ) इति । एष वै यमः । य एष तपति । एष हीदं सर्वं यमयति । एतेनेदं सर्वं यतम् । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह-"यमाय त्वा"-इति ॥ ४ ॥

"मखाय त्वा" इति । एष वै मखः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह-"मखाय त्वा"-इति ॥ ५ ॥

---

इत्यनेन 'प्रीणाति' तर्पयति । यस्मादित्थं समवेतार्थप्रकाशिका एषा । तस्मात् "ब्रह्म जज्ञानं प्रथमं पुरस्तात्" इत्येतामृचमाह-अनया प्रवर्ग्यमभिष्टौतु प्रवर्ग्ये इत्यर्थः । अथ यमायेत्यादिना पाठेन प्रोक्षणं विधत्ते-अथ प्रोक्षत्यमावेव वेधुरिति । एवं ब्रह्मणे विज्ञाय 'अथ' तदनुज्ञानन्तरं यमायेत्यादिनेति त्रयमन्त्रेण महावीरादीनि धर्मपात्राणि 'प्रोक्षति' प्रोक्षणेन संस्कुर्यात् । 'यमाय' इत्यत्र प्रोक्षणसंस्कारं वदन्नेवक प्रोक्षितानां यागार्हत्वसम्पादनेन द्विस्मृत्य यजुःशिरस्स भगवान्तु इत्यर्थः ॥ १ ॥ ३ ॥

अथ एतत् प्रोक्षणं अनूद्य मन्त्रं विधत्ते-स प्रोक्षति यमाय त्वेतीति । अयमर्थः । "यमाय त्वा १ मखाय त्वा २ सूर्यस्य त्वा तपसे ३" इति वाक्यत्रयात्मकेन मन्त्रेण 'स' अध्वर्युः प्रत्येकं महावीरान् 'प्रोक्षति' यद्वा त्रिभिर्वाक्यैः त्रीन् महावीरान् यथाक्रमं प्रोक्षति' । तथा च सूत्रितं कात्यायनेन "ब्रह्मणाऽनुज्ञातो यमाय त्वेति महावीरं प्रोक्षति । प्रतिमन्त्रं वा वाक्यभेदात्" ( का. श्रौ. सू. २६ । ३९ । ४० ) इति । तत्र प्रथममन्त्रस्य प्रवर्ग्येण सङ्गतिं दर्शयति-एष वै० प्रीणातीति । 'य एष' सूर्यः 'तपति' । 'एष' खलु 'यमः' । कुत अस्य यमशब्दाभिधेयता ? इति चेत् । 'हि' यस्मात् 'इदं सर्वं' भूतजातं 'एष' 'यमयति' स्वव्यापारेषु नियमयति । यस्माच्च एतेन' सूर्येण 'इदं सर्वं' जगत् 'यतं' सृष्ट्यादावपि परस्परकार्यभावेन व्यवस्थितं इदं कृतम् । तस्मात् असौ मन्त्रे यमशब्देन उच्यते । 'एष उ' एष एव 'प्रवर्ग्यः' । गतमन्यत् । यस्मादेव असौ मन्त्रः समवेतार्थः । तत् अनेन मन्त्रेण प्रोक्षेत् इति निगमयति-तस्मादाह यमाय त्वेतीति ॥ ४ ॥

अथ द्वितीयमहावीरस्य प्रोक्षणमन्त्रमनूद्य व्याचष्टे-मखाय त्वेति० मखाय त्वेतीति । 'एष वै' एष खलु सूर्यः 'मखः' मखशब्दाभिधेयस्य यज्ञात्मकस्य शिरस एव सूर्यत्वात् । अन्यद्गतम् ॥ ५ ॥

---

१-अत्र कर्कः प्रत्यानुज्ञ तयश्च प्रत्यक् अनन्तरं सर्वेष्वेवं स्वपक्षे समाप्य विरमति ।

२-अत्र कर्कः प्रतिमन्त्रमेव वा प्रोक्षणम् । कुत एतत् । वाक्यभेदात्, भिन्नं हि वाक्यत्रयमिति । यमाय त्वा १ मखाय त्वा २ सूर्यस्य त्वा तपसे ३ इति । न च समुच्चयो न्याय्यः । न च विकल्प एकार्थत्वात् । तस्मात् प्रतिवाक्यमेव प्रोक्षणम् । इति । तत्र वा अत्र प्राणं इति सिद्धान्तः ॥

सूर्य्यस्य त्वा तपसऽइति । ( त्ये ) एष वै सूर्य्यो यऽएष तपत्येषउऽ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सूर्य्यस्य त्वा तपसऽइति ॥ ६ ॥

पूर्व्वया द्वारा स्थूणान्निर्हृत्य । दक्षिणतो निमिन्वन्ति यथैनाᳬ होताऽभिष्टुवन्परापश्येद्यज्ञो वै होता सऽएवास्यामेतद्यज्ञम्प्रतिदधाति तथैषा घर्म्मम्पिन्वते ॥ ७ ॥ अर्द्धः प्रपाठकः ॥ कण्डिकाः ॥ ६६ ॥

( तेऽग्रे ) अग्रेणाहवनीयम् । ( एᳬ ) सम्राडासन्दीम्पर्य्याहृत्य दक्षिणतः प्राचीमासादयत्युत्तराᳬ राजासन्द्यै ॥ ८ ॥

---

" सूर्यस्य त्वा तपसे "-( वा. सं ३७।११ ) इति । एष वै सूर्यः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह-सूर्यस्य त्वा तपसे इति ॥ ६ ॥

पूर्वया द्वारा स्थूणा निर्हृत्य दक्षिणतो निमिन्वंति । यथैना होताऽभिष्टुवन्परापश्येत् । यज्ञो वै होता । स एवास्यामेतद्यज्ञं प्रतिदधाति । तथैषा घर्मं पिन्वते ॥ ७ ॥

अग्रेणाहवनीयम् । सम्राडासंदीं पर्याहृत्य दक्षिणतः प्राचीमासादयति । उत्तरा राजासंद्यै ॥ ८ ॥

---

अथ तृतीयमहावीरप्रोक्षणमन्त्रमनूद्य व्याचष्टे-सूर्यस्य त्वा० तपस इतीति । सिद्धप्रायमेतत् ॥ ६ ॥

अथ घर्मदुहो धेनोर्बन्धनाय स्थूणानिखननं विधत्ते-पूर्व्वया द्वारा० परापश्येदिति । प्राग्वंशस्य पूर्वद्वारेण ' स्थूणां ' घर्मदुहो गो बन्धनार्थं स्तम्भं ' निर्हृत्य ' निर्गमय्य ' दक्षिणतः ' प्राचीनवंशस्य दक्षिणदिग्भागे 'निमिन्वंति ' अवटं खात्वा तस्मिन्निक्षिपन्ति । ' एना ' स्थूणां ' अभिष्टुवन् ' अभिष्टवं पठन् ' होता ' ' यथा ' येन प्रकारेण ' परापश्येत् ' समीक्षेत । तथा स्थूणा निखातव्येत्यर्थः । अथ एतत् होतुर्दर्शनमुपपादयति-यज्ञो वै होता० घर्मं पिन्वत इति । वषट्कर्तृत्वेन यागे अन्तरङ्गत्वात् ' होता यज्ञो वै ' यज्ञ एव । ' स ' तथाविधं निखातां स्थूणां पश्यन्नेव ' अस्यां ' स्थूणायां ' एतत् ' एतेन ईक्षणेन ' यज्ञं प्रतिदधाति ' सन्दधाति । तथा सति ' एषा ' घर्मदुघा धेनुः ' घर्मं पिन्वते ' घर्मं हविर्भूतं पयः सिञ्चति स्रवति । " पिवि सेचने "-( धा पा भ्वा आ ५८९ ) इति धातुः ॥ ७ ॥

अथ आसादितायाः सम्राडासन्द्या देशविशेषे स्थापनं विधत्ते-अग्रेणाहवनीयं० राजासंद्यै इति । सम्राट् प्रवर्ग्यः महावीर इति पर्यायः । तस्यासन्दी आसनभूता मञ्चिका ' सम्राडासन्दी ' तां ' आहवनीयमग्रेण ' आहवनीयस्य अदूरेण प्राग्भागेन ' पर्याहृत्य ' परित आनीय आहवनीयस्य ' दक्षिणतः ' ' प्राची '

---

१-परेयम्बं च तूष्णीं । का श्रौ सू २६ । ४१ । एवमन्ये च यत् आगादिति वाचकाः तत्र तूष्णीं प्रोक्षणमस्य ।
२-पूर्वया द्वारा स्थूणामभूम निर्हृत्य दक्षिणतो निखनन्ति ..... । का श्रौ स २६ । ४२ ।
३-पूर्वेणाहवनीयं सम्राडासन्दी पर्याहृत्य दक्षिणेन प्राचीमासादयति राजासन्द्या उत्तरां । का श्रौ. सू २६ । ४४ ।

( न्याऽऔ ) औदुम्बरी भवति । ( त्यू ) ऊर्ग्वै रसऽउदुम्बरऽऊर्ज्जैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ९ ॥

( त्यर्ं ) अर्ंसदघ्ना भवति । ( त्यु ) अर्ंसयोर्व्वाऽइदर्ं शिरः प्रतिष्ठितं तदर्ंसयोरेवैतच्छिरः प्रतिष्ठापयति ॥ १० ॥

वाल्वजीभी रज्जुभिर्व्युता भवति । यत्रस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तऽएताऽओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ११ ॥

---

औदुंबरी भवति । उर्ग्वै रस उदुंबरः । ऊर्जैवैनमेतद्रसेन समर्द्धयति । कृत्स्नं करोति ॥ ९ ॥

*अंसदघ्ना भवति । अंसयोर्वा इदं शिरः प्रतिष्ठितम् । तदंसयोरेवैतच्छिरः प्रतिष्ठापयति ॥ १० ॥*

वाल्वजीभी रज्जुभिर्व्युता भवति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत् । तत एता ओषधयो जज्ञिरे । तेनैवैनमेतद्रसेन समर्द्धयति । कृत्स्नं करोति ॥ ११ ॥

---

प्रागायताम् । राजासन्दी इति सोमो यस्यामासन्द्यामास्ते सा राजासन्दी । तस्याः सकाशात् 'उत्तरा' उन्नततरां वर्षीयसीम् । यद्वा उत्तरभागावस्थिता 'आसादयति' स्थापयति ॥ ८ ॥

अथ एतस्या वृक्षविशेषं विधाय स्तौति—औदुंबरी भवति० कृत्स्नं करोति इति । सा च सम्राडासन्दी 'औदुंबरी' उदुंबरविकारा उदुंबरवृक्षजे फलके निर्मिता 'भवति' । उदुंबरवृक्षस्य ऊर्ग्रसरूपत्वं अस्या औदुंबरत्वविधायके वाक्ये ( श० प० १४ । १ । २ । ४ ) पूर्वमेव दर्शितम् । अतः तदेव सर्वं व्याख्येयम् ॥ ९ ॥

अथ एतस्याः सम्राडासन्द्याः उच्छ्रायपरिमाणं आह—अंसदघ्ना भवतीति । सा सम्राडासन्दी 'अंसदघ्ना' ऊर्ध्वपरिमाणेन अंसमात्री 'भवति' । अथ एतत् अंसदघ्नत्वं स्तौति—अंसयोर्वा० प्रतिष्ठापयतीति । 'इदं' अस्मदादीनां 'शिरः' 'अंसयोर्वै' अंसयोरुपरि खलु 'प्रतिष्ठितं' स्थितम् । तस्मात् 'एतत्' एतेन राजासन्द्या अंसदघ्नत्वकरणेन यज्ञस्य अंसयोरेव एतत् महावीराख्यं शिरः प्रतिष्ठापयति ॥ १० ॥

अथ एतस्या आवेष्टनं विदधाति—वाल्वजीभिः० भवतीति । बल्वजाः तृणविशेषाः । तन्निर्मितानि

---

१–पूर्वेण हवनीयम् । का० श्रौ० सू० २६।२।२१ । इति सूत्रं सूत्रकारेण "उत्तरा० राजासन्द्याः" इत्यत्र श्रुतिमनुसृत्य उत्तरत इति निर्दिष्टम् । उत्तरभागावस्थित्या आसादयतीति एतद्व्याख्यानं मध्ये प्रयुक्तम् । "तस्याः सकाशात् 'उन्नताम्' उन्नततरां वर्षीयसीं" इति तु अर्थकौतुकं वर्णयामः । "अथ यदुत्तरामासादयति यज्ञो वै सोमः शिरः प्रवर्ग्य उत्तरं वै शिरस्तस्मादुत्तरामासादयति अथो राजा वै सोमः सम्राट् प्रवर्ग्य उत्तरो वै राज्यात्साम्राज्यं तस्मादुत्तरामासादयति उत्तरो वै प्रजापतेस्तस्मादुत्तरामासादयति" इति अस्मिन् ब्राह्मणे द्वादश्यां कण्डिकायां वाक्यशेषः ।

२–परिश्रित्यमौदुम्बरम् । का० श्रौ० सू० २६ । ४ ।

३–"बल्वजविततमासन्द्यौदुम्बर्यं स्कन्धमात्र्या" इति । का० श्रौ० सू० २६ । २५ ।

४ 'बल्वजवितताम्' इत्युक्तं सूत्रम् । अस्मिन्नत्र सूत्रे कर्के "परिश्रित्यमौदुम्बरम्" का० श्रौ० सू० २६ । २२ । इत्युक्तं पुनरुक्तम् । अग्निमन्थनाऽऽप्रमाणार्थम् । तथा शाखान्तरे दृष्टा हि औदुम्बरी ज्योतिष्टोमे अग्निमन्थनी ( अथ श्रौ० स० १० । २१ । ७ ) इति । तथा सूत्रकारोऽपि ज्योतिष्टोमे सूत्रयामास—"औदुम्बरमासन्दीं नाभिदघ्नां परिमितां मुञ्जवितताम्" । का० श्रौ० सू० ७।६।२४। अन्यत्रापि स्पष्टं तु "मौञ्जविवृतमन्वम्" । का० श्रौ० सू० २६ । २४ । इत्याह कात्यायनः ।

( ब्रा३।४ ) अथ शाकलैर्जुहोति । प्राणा वै शाकलाः प्राणानेवास्मिन्नेतद्दधाति ॥ ३१ ॥

स्वाहा पूष्णे शरसऽ इति । (त्य) अयम्वै पूषा योऽयम्पवतऽएष हीदꣳ सर्वम्पुष्यत्येषऽउ प्राणः प्राणमेवास्मिन्नेतद्दधाति तस्मादाह स्वाहा पूष्णे शरसऽइत्यवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुर्हुत्वा मध्यमे परिधाऽउपश्रयति ॥ ३२ ॥

स्वाहा ग्रावभ्यऽइति । प्राणा वै ग्रावाणः प्राणानेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधाऽउपश्रयति ॥ ३३ ॥

---

अथ शाकलैर्जुहोति । प्राणा वै शाकलाः । प्राणानेवास्मिन्नेतद्दधाति ॥ ३१ ॥

" स्वाहा पूष्णे शरसे "–इति । अयं वै पूषा । योऽयं पवते । एष हीदं सर्वं पुष्यति । एष उ प्राणः । प्राणमेवास्मिन्नेतद्दधाति । तस्मादाह–" स्वाहा पूष्णे शरसे "–इति । अवरं स्वाहाकारं करोति परा देवताम् । असावेव बंधुः । हुत्वा मध्यमे परिधा उपश्रयति ॥ ३२ ॥

" स्वाहा ग्रावभ्यः "–इति । प्राणा वै ग्रावाणः । प्राणानेवास्मिन्नेतद्दधाति । हुत्वा मध्यमे परिधा उपश्रयति ॥ ३३ ॥

---

अथ कात्यायनेन यदुक्तं " विकङ्कतशकलैर्जुहोति घर्मे न्यज्य न्यज्य स्वाहा पूष्णे शरस इति प्रतिमन्त्रम् । हुत्वा हुत्वा प्रथमपरिधावुपश्रयति " ( का श्रौ सू. २६।९९।१०० ) इति च । तदाह–अथ शाकलैर्जुहोतीति । ' अथ ' खरे सादनानन्तरं ' शाकलैः ' शाकलहोमसाधनैर्मन्त्रैः ' स्वाहा पूष्णे शरसे " इत्यादिभिः सप्तभिः शाकलैर्जुहोति । तदेतत्स्तौति–प्राणा वै शाकलाः० तद्दधातीति । ' शाकला ' शाकलहोमार्था मन्त्राः ' प्राणा वै ' प्राणप्रतिपादकत्वात् तदात्मका खलु । तस्मात् हुतेऽस्मिन् घर्मे ' एतत् ' एतेन शाकलहोमेन ' प्राणान् ' शीर्षण्यान् सप्त प्राणान् चक्षुःश्रोत्रप्रमुखानेव ' दधाति ' स्थापयति ॥ ३१ ॥

तदेतत्प्रतिमन्त्रं दर्शयितुकाम तावत् प्रथममन्त्रं दर्शयति–स्वाहा पूष्णे शरसे० तद्दधातीति । ' योऽयं ' वायुः पवते ' ' अयं ' खलु वृष्ट्यादिना जगत्पोषकत्वात् ' पूषा ' ' एष उ ' एष एव ' प्राण ' । " यो वायुः स प्राण " इति श्रुतेः । अत ' एतत् ' एतेन पूषदेवताकेन मन्त्रेण ' अस्मिन् ' घर्मे ' प्राणमेव ' ' दधाति ' स्थापयति । उक्तमर्थं हेतूकृत्य मन्त्रपाठं निगमयति–तस्य पुरस्तात्स्वाहाकारं च पूर्ववत्स्तौति तस्मादाह स्वाहा पूष्णे शरसे० असावेव बंधुरिति । गतमेतत् । अथ पूर्वोक्तं लेपनिर्मार्जनं विधत्ते–हुत्वा मध्यमे परिधा उपश्रयतीति । " स्वाहा पूष्णे " इति मन्त्रेण घर्मरसे अभ्यक्तं शकलं हुत्वा अग्नौ प्रक्षिप्य हस्तगतं लेपं ' परिधौ उपश्रयति ' निर्मार्ष्टि ॥ ३२ ॥

अथ द्वितीयमन्त्रस्य प्राणरूपत्वं दर्शयन् तत्रापि लेपनिर्मार्जनं विधत्ते–स्वाहा ग्रावभ्य० उपश्रयतीति । " स्वाहा ग्रावभ्य " इति द्वितीयः शकलहोममन्त्रः । शब्दकरस्वभावत्वात् ' प्राणा ' एव खलु ' ग्रावाण ' अस्मिन्मन्त्रे ग्रावशब्दाभिधेयाः । शिष्टं पूर्वेण समानम् ॥ ३३ ॥

स्वाहा प्रतिरवेभ्यऽइति । प्राणा वै प्रतिरवाः प्राणान्हीदꣳ सर्वं प्रतिरतं प्राणानेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधाऽउपश्रयति ॥ ३४ ॥

स्वाहा पितृभ्यऽऊर्ध्वबर्हिर्भ्यो घर्म्मपावभ्यऽइति । ( त्यु ) अहुत्वैवोदङ्ङीक्षमाणो दक्षिणार्द्धे बर्हिषऽउपगूहति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स पितॄनगच्छत्त्रया वै पितरस्तानेवैतत्प्रीणात्यथ यन्न प्रेक्षते सकृदु ह्येव पराञ्चः पितरः ॥ ३५ ॥

स्वाहा द्यावापृथिवीभ्यामिति । प्राणोदानौ वै द्यावापृथिवी प्राणोदानावेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधाऽउपश्रयति ॥ ३६ ॥

---

" स्वाहा प्रतिरवेभ्यः "–इति । प्राणा वै प्रतिरवाः । प्राणान् हीदं सर्वं प्रति रतम् । प्राणानेवास्मिन्नेतद्दधाति । हुत्वा मध्यमे परिधा उपश्रयति ॥ ३४ ॥

" स्वाहा पितृभ्य ऊर्ध्वबर्हिर्भ्यो घर्मपावभ्यः "–इति । अहुत्वैव उदङ्ङीक्षमाणो दक्षिणार्द्धे बर्हिष उपगूहति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत् । स पितॄनगच्छत् । त्रया वै पितरः । तानेवैतत्प्रीणाति । अथ यन्न प्रेक्षते । सकृदु ह्येव पराञ्चः पितरः ॥ ३५ ॥

" स्वाहा द्यावापृथिवीभ्याम् "–इति । प्राणोदानौ वै द्यावापृथिवी । प्राणोदानावेवास्मिन्नेतद्दधाति । हुत्वा मध्यमे परिधा उपश्रयति ॥ ३६ ॥

---

अथ तृतीयस्य शकलहोममन्त्रस्य प्रागपरत्व*होमानन्तर* स्थाननिर्माणं च दर्शयति–स्वाहा प्रतिरवेभ्य इति॰ उपश्रयतीति । " स्वाहा प्रतिरवेभ्य " इति तृतीय शकलहोममन्त्र । तत्र देवतात्वेन निर्दिष्टा 'प्रतिरवाः' 'प्राणा वै' प्रतिरवशब्देन प्राणा एवोच्यन्ते इत्यर्थ । 'हि' यस्मात् 'इद सर्वं' जगत् 'प्राणान् प्रति रत' प्राणेषु रममाण सत् दृश्यते । तस्मात् प्रतिरवशब्देन प्राणा अभिधेया । अन्यत्पूर्ववत् ॥ ३४ ॥

अथ यदुक्त कात्यायनेन–" चतुर्थमहुत्वोदङ्ङीक्षमाणो दक्षिणतो बर्हिष्युपगूहति " ( का. श्रौ. सू. १६। १०१ ) इति । अयमर्थ –चतुर्थशकल धर्म अग्नावहुत्वैव सन् यथास्तीर्णे बर्हिषि दक्षिणभागे स्वयमुदीचीं दिशमीक्षमाण 'उपगूहति' संवृणोति । यथा शकलो न दृश्यते तथा बर्हिषि अवस्थाप्य निदध्यादित्यर्थ । तदेतत् विधिमुत्पाह–स्वाहा पितृभ्य॰प्रीणातीति । " स्वाहा पितृभ्य " इत्यनेन मन्त्रेण चतुर्थशकल अग्नौ 'अहुत्वा' अप्रक्षिप्यैव स्वयमुदङ्मुख 'ईक्षमाण' शकलमादायन् 'बर्हिष' वेद्यामास्तीर्णस्य दर्भपुञ्जे 'दक्षिणार्द्धे उपगूहति' अदृश्य करोति । गतमन्यत् । अथ शकलस्य प्रेक्षणमनूद्य स्तौति–अथ यत् प्रेक्षते॰पितर इति । 'अथ' च 'न प्रेक्षते' शकलस्य प्रेक्षण न कुर्यादिति 'यत्' यदुक्त, तदेतु– 'पराञ्च' स्वत पराङ्मुखत्वेन अभिमुख पितर "सकृदु हि" सकृदेव सदृ । एकवारकरणमेव तेषां प्रिय तच्छकलस्य पुन पुन प्रेक्षणे क्रियमाणे तत् व्याहन्यतेति । तस्मादादानसमये शकल प्रेक्ष्य पश्चात् उद्गूहनसमये पुनर्न प्रेक्षेतेत्यर्थ ॥ ३५ ॥

अथ पञ्चमशकलहोममन्त्रमनूद्य व्याचष्टे–स्वाहा द्यावापृथिवी॰ दधातीति । " स्वाहा द्यावापृथिवीभ्या "

स्वाहा विश्वेभ्यो देवेभ्यऽइति । प्राणा वै विश्वे देवाः प्राणानेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधाऽवुपश्रयति ॥ ३७ ॥

स्वाहा रुद्राय रुद्रहूतयऽइति । ( त्सु ) अहुत्वैव दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति तᳪं सऽउत्तरतः शालायाऽउदञ्चन्निरस्यत्येषा ह्येतस्य देवस्य दिक्स्वायामेवैनमेतद्दिशि प्रीणात्यथ यन्न प्रेक्षते नेन्मा रुद्रो हिनसदिति ॥ ३८ ॥

---

" स्वाहा विश्वेभ्यो देवेभ्यः "–( वा. सं. ३८।१९ ) इति । प्राणा वै विश्वे देवाः । प्राणानेवास्मिन्नेतद्दधाति । हुत्वा मध्यमे परिधा उपश्रयति ॥ ३७ ॥

" स्वाहा रुद्राय रुद्रहूतये "–इति । अहुत्वैव दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति । तं स उत्तरतः शालाया उदंचं निरस्यति । एषा ह्येतस्य देवस्य दिक् । स्वायामेवैनमेतद्दिशि प्रीणाति । अथ यन्न प्रेक्षते । नेन्मा रुद्रो हिनसदिति ॥ ३८ ॥

---

इत्यस्मिन्मन्त्रे द्यावापृथिवीशब्देन शरीरस्थौ प्राणोदानवायू उच्येते । हृदि वर्तमानः प्राणवायुरेव पृथिवी । कण्ठे वर्तमान उदानवायुरेव द्यौः । उभयोरप्यूर्ध्वसाम्यात् द्यावापृथिव्यात्मकत्वम् । तयोरेव च अनयोः अवरोत्तरभावेन अवस्थानमुक्तमभिज्ञैः । " हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः " इति । तथा च अनेन मन्त्रेण ' अस्मिन् ' घर्मे ' प्राणोदानावेव ' वायू ' दधाति ' स्थापयति । अथ पूर्ववल्लेपस्य निर्मार्जनं विधत्ते–हुत्वा मध्यमे परिधाऽउपश्रयतीति ॥ ३६ ॥

अथ षष्ठमन्त्रस्य शकलहोमार्थस्य प्राणपरत्वं दर्शयन् पूर्ववल्लेपनिमार्जनं विधत्ते–स्वाहा विश्वेभ्यो देवेभ्य इति०उपश्रयतीति । अत्र ' विश्वे देवाः ' ' प्राणा वै ' देवनशीलत्वात् विषयाभिद्योतीनि चक्षुरादीनीन्द्रियाणि विश्वेदेवशब्दवाच्यानि । तथा च " प्राणानेव " इत्यादि पूर्ववत् ॥ ३७ ॥

अथ सप्तमस्य शकलस्य होमं निषिध्य निरसनं विधित्सुराह–स्वाहा रुद्राय रुद्र०निरस्यतीति । " स्वाहा रुद्राय " इति मन्त्रं पठन् सर्वेषु लेपेषु अतः सप्तमं शकलं अग्नौ ' अहुत्वैव ' दक्षिणां दिशमीक्षमाणः स्वयं शकलमपश्यन् अध्वर्युः ' प्रतिप्रस्थात्रे ' ' प्रयच्छति ' । स च प्रतिप्रस्थाता ' तं ' शकलं शालायाः ' उत्तरतः ' प्राग्वंशगृहस्योत्तरभागे ' उदञ्चं ' उदगग्रं ' निरस्यति ' क्षिपेत् । पुनः उदीच्यामेव दिशि निरसनं, कस्माच्च शकलस्य न प्रेक्षणम् । इति एतदुभयमुपपादयति–एषा ह्येतस्य देव० हिनसदितीति । ' एषा ' यद् उदीची ' एतस्य ' रुद्रस्य ' देवस्य दिक् ' । उत्तरपूर्वोर्दयोः दिशोः रुद्रेण पाल्यमानत्वात् उत्तराऽपि दिक् तत्सवर्णिनी इत्यभिप्रायः । ' अथ ' रुद्रार्थं निरस्यमानं शकलमध्वर्युः ' न प्रेक्षते ' इति ' यत् ' तत् ' मा ' मामध्वर्युं ' रुद्रः ' रोदनकारी उग्रो देवः ' नेत् ' नैव ' हिनसत् ' हिंस्यात् इत्यनेनाभिप्रायेण ॥ ३८ ॥

---

१–अथैनं सर्वलेपस्य दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति । का. श्रौ. सू. २६ । १०२ ।

२–तं स उत्तरतः शालायाः उदञ्चं निरस्यति । का. श्रौ. सू २६ । १०३ ।

सप्तैताऽआहुतयो भवन्ति । सप्त वाऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति ॥ ३९ ॥

( त्र्य ) अथ महावीरादुपयमन्यां प्रत्यानयति । स्वाहा सं ज्योतिषा ज्योतिरिति ज्योतिर्वाऽ इतरस्मिन्पयो भवति ज्योतिरितरस्यां तद्धैतदुभे ज्योतिषी संगच्छेते ऽअवरं स्वाहाकारं करोति परां देवतामसावेव बन्धुः ॥ ४० ॥

( उ ) अथ रौहिणौ जुहोति । ( त्र्य ) अहः केतुना जुषतां सुज्योतिर्ज्योतिषा स्वाहेत्यसावेव बन्धू रात्रिः केतुना जुषतां सुज्योतिर्ज्योतिषा स्वाहेत्यसावेव बन्धुः ॥ ४१ ॥

---

सप्तैता आहुतयो भवन्ति । सप्त वा इमे शीर्षन्प्राणाः । तानेवास्मिन्नेतद्दधाति ॥ ३९ ॥

अथ महावीरादुपयमन्यां प्रत्यानयति–" स्वाहा सं ज्योतिषा ज्योतिः "–( वा. सं. ३८ । १६ ) इति । ज्योतिर्वा इतरस्मिन्पयो भवति । ज्योतिरितरस्याम् । ते ह्येतदुभे संगच्छेते । अवरं स्वाहाकारं करोति । परां देवताम् । असावेव बन्धुः ॥ ४० ॥

अथ रौहिणौ जुहोति–" अहः केतुना जुषतां सुज्योतिर्ज्योतिषा स्वाहा "–इति । असावेव बंधुः । " रात्रिः केतुना जुषतां सुज्योतिर्ज्योतिषा स्वाहा "–( वा. सं. ३८।१६ ) इति । असावेव बंधुः ॥ ४१ ॥

---

अथैतान् सहत्य स्तौति–सप्तैताऽ आहुतयो० दधातीति । ' एता ' " स्वाहा पूष्णे शरसे " इत्यादिमन्त्रसाध्या शकलद्रव्यका ' आहुतय ' सप्तसंख्या खलु भवन्ति । ' इमे शीर्षन् ' शीर्षणि चक्षुरादिषु शकलगतेषु सप्तसु अवच्छेदकेषु वर्तमाना प्राणाः । गतमन्यत् ॥ ३९ ॥

अथ महावीरे वर्तमानस्य शिष्टस्य हविष उपयमन्यामासेचनं विधत्ते–अथ महावीरादुपयमन्यां० ज्योतिरितीति । " स्वाहा सञ्ज्योतिषा " इत्यनेन मन्त्रेण महावीरसकाशादुच्छिष्टं घर्मरसम् ' उपयमन्यां ' स्रुचि ' प्रत्यानयति आसिञ्चति । अथैतत् मन्त्राभिप्रायकथनेन स्तौति ज्योतिर्वाऽ इतर० बन्धुरिति । ' इतरस्मिन् ' अन्यतरस्मिन् महावीरे ज्योतिर्स्वरूपं खलु ' पयो भवति ' । ' इतरस्याम् ' उपयमन्याम् आज्यलक्षणं ज्योतिर्भवति । ' एतत् ' एतेनासेचनेन ' ते ' एव ' ज्योतिषी ' ' संगच्छेते ' परस्परं संयुज्येते । तथा च ' ज्योतिषा ' उक्तलक्षणेन महावीरस्थेन ज्योतिरुपयमनीस्थं संगच्छते इति मन्त्रो व्याख्यातो भवति । अन्यत् पूर्ववत् ॥ ४० ॥

अथ सायम्प्रातःकालयोः प्रवर्ग्यहोमानन्तरं विहितौ रौहिणपुरोडाशौ, तौ अस्मिन् काले होतव्यौ

---

१ स्वाहा सञ्ज्योतिषेत्युपयमन्यां महावीरेषु [illegible] । का० श्रौ० सू० २६ । १०४ ।

(२) अथ यजमानाय घर्मोच्छिष्टम्प्रयच्छति । स ऽउपहवमिष्ट्वा भक्षयति मधु हुतमिन्द्रतमेऽअग्नाविति मधु हुतमिन्द्रियवत्तमेऽग्नावित्येवै-तदाहाश्याम ते देव घर्म नमस्तेऽअस्तु मा मा हिᳫंसीरित्याशिषमे-वैतदाशास्ते ॥ ४२ ॥

(स्तेऽथ) अथ दक्षिणतः सिकताऽउपकीर्णा भवन्ति । तन्मार्जयन्ते स ऽएव मार्जालीये बन्धुः सोऽत्रानुप्रहरति शाकलानुथोपसदा चरन्त्ये-तद्वै यज्ञस्य शिरः संस्कृतं यथायथैनत्तदश्विनौ प्रत्यधत्ताम् ॥ ४३ ॥

---

अथ यजमानाय घर्मोच्छिष्टं प्रयच्छति । स उपहवमिष्ट्वा भक्षयति–" मधु हुतमिन्द्रतमे अग्नौ "–इति । मधु हुतमिन्द्रियवत्तमेऽग्नौ, इत्येवैतदाह । "अश्याम ते देव घर्म नमस्ते अस्तु मा मा हिंसीः "–( वा. सं. ३८ । १६ ) इति, आशिषमेवैतदाशास्ते ॥ ४२ ॥

अथ दक्षिणतः सिकता उपकीर्णा भवंति, तन्मार्जयन्ते । य एव मार्जालीये बंधुः । सोऽत्र ।

---

इत्येवमभिप्रेत्य आह–अथ रौहिणा जुहोति॰ बंधुरिति । 'अथ' प्रत्यानयनानंतरं सायंप्रातःकालीनयोः प्रवर्ग्ययोः उत्तरौ रौहिणपुरोडाशौ तयोरेकं घर्मदुहो दोहनात्प्राक्काले हुतं । अपरस्त्वस्मिन् काले होतव्य इति तयोः सायंप्रातःकालभेदेन यौ मंत्रौ विहितौ । तावत्रानूद्य पुनः स्तुवन्–य अत्र "अहः केतुना" इति मंत्रः 'असावेव' खलु 'बधु' छिन्नस्य यज्ञशिरसो बंधकः । एवमुत्तरमंत्रस्यापि तात्पर्यं प्रति-पादनीयम् ॥ ४१ ॥

अथोपयमन्यामानीतस्यावशिष्टस्य घर्मस्य यजमानेन सह भक्षणं विधत्ते–अथ यजमानाय घर्मोच्छिष्टं॰ अग्नावितीति । अथोत्तररौहिणहोमानंतरं 'यजमानाय' यजमानार्थं 'घर्मोच्छिष्टं' होमातिरिक्तं घर्मं 'प्रयच्छति' अध्वर्युः प्रदद्यात् । 'स' यजमानः 'उपहवमिष्ट्वा' "अध्वर्य उपह्वयस्व" इत्यादिना उपहवयाचनं कृत्वा "मधु हुतम्" इति मंत्रेण तं 'भक्षयति' । अथास्य मंत्रस्य विवक्षितमर्थमाह–मधु हुत॰ तदाहेति । "इन्द्रतमे अग्नौ" इति कोऽर्थः । 'इन्द्रतमे' इन्द्रियवत्तमे 'अग्नौ' तदर्थे जाठरे तेजसि 'मधु' मधुरं 'हुतं' शिष्टं हविर्हुतमस्तु इत्येवार्थं एतन्मंत्रवाक्यमाह । अवशिष्टं मंत्रमनूद्य तस्य आशीरादाः सत्परत्वं आह–अश्याम ते॰ तदाशास्ते इति । 'हे घर्म!' 'ते' तुभ्यं 'नमः अस्तु' 'मा' मां मा 'हिंसीः' इति अहिंसाप्रतिपादनपरेण एतद्वाक्येन आशिषं अभीप्सितफलमेव आशास्ते ॥ ४२ ॥

अथ प्राग्वंशस्य दक्षिणदिग्भागे प्रवर्ग्यकर्तॄणां मार्जनं विधत्ते–अथ दक्षिणतः सिकता॰ बंधुः सोऽत्रेति ।

---

१–"रौहिणं जुहोति । का. श्रौ. सू. २६ । १०५ । मन्त्रक्रमेणपरं" रात्रिरिति शाखम् । का. श्रौ. सू. २६ । ७३ । इति यत्पगुक्तं तस्यायं मन्त्रपाठक्रमपरो होमकालः । अतः "अहः केतुना" इति द्वितीयं रौहिणं प्रातर्जुहोति । "रात्रि केतुना" इति सायं जुहोतीति सूत्रार्थः ।

२–"अग्निहोत्रहवणीं हुत्वा, व्याजिनवद्भक्षयन्ति, मधु हुतमिति । का. श्रौ. सू. २६ । १००। म्नुपस्तोपदेशात् घर्मविदः । वाजिनवदिति च समुपहवं भक्षणमिति कर्कः ।

३–"मार्जालीये पात्रमार्जनम्" का. श्रौ. सू. ५ । ११ ।

(न्त) तन्न प्रथमयज्ञे प्रवृञ्ज्यात् । (दे) एतस्य ह्येव हि तद्यो नेन्मऽ इन्द्रः शिरश्छिनददिति द्वितीये वैव तृतीये वाऽपशीर्ष्णा ह्येवाग्रे यज्ञेन

अनुप्रहरति शाकलान् । अथोपसदा चरति । एतद् उ यज्ञस्य शिरः संस्कुर्वन् । यथायथैनमदश्विनौ प्रत्यधत्ताम् ॥ ४३ ॥

तं न प्रथमयज्ञे प्रवृञ्ज्यात् । एतस्य हि तत् । अथो नेन्म इन्द्रः शिरश्छिनददिति । द्वितीये

'अथ' यजमानस्य घर्मभक्षानन्तरं 'दक्षिणतः' दक्षिणभागे 'शिक्याः' वालुकाः 'शकलानि' शिक्याकारेण क्षिप्ताः 'भवन्ति' 'तत्' तत्र शिक्याभिर्निर्मिते शिक्ये सर्वे प्रवर्ग्यकर्तारः 'मार्जयन्ते' । सौत्रे अहनि 'मार्जालीये' एतस्मिन् मण्डितान् सोमयागात् प्रशस्तस्थाने 'स एव भक्षः' भक्षणमर्थ, 'स अत्र' अस्मिन् शिक्योत्कर्षे स्थाने द्रष्टव्यः । यथा सोमयागे गृहस्थसादीनि पात्राणि मार्जालीये प्रक्षाल्यन्ते, एव उपसन्त्यादि धर्मार्थं पात्र अत्र प्रक्षाल्यन्ते इत्यभिप्रायः । अथ वरिष्ठान्ते वैकङ्कत शकलानां प्रहरणं विधत्ते—अनुप्रहरति शाकलानिति । पूर्वं "स्वाहा त्वा" इत्यादिमन्त्रैर्हुतः शकलाः तत्सदृशाः सन्ते 'शाकलाः' परिधयस्तान् । तानग्नौ प्रक्षिपेदित्यर्थः । इत्थं सोमयागे प्रवर्ग्याख्यं कर्म निरूप्य तदनन्तरं तत्स दाक्ष्ये कर्म कर्तव्यं विधत्ते—अथोपसदा चरतीति । 'अथ' प्रवर्ग्यानुष्ठानानन्तरमेव 'उपसदा' उपसदाख्येन कर्मणा 'चरति' अध्वर्युप्रभृतय ऋत्विजः । एवं प्रवर्ग्ये अनुष्ठिते सति छिन्नं यज्ञस्य शिरः पुनः संहितं भवतीति अनुवादं उपसंहरति—एतद्वु यज्ञस्य० प्रत्यधत्तामिति । तदेतद्यज्ञस्य 'शिरः' 'यथायथा' येन येन प्रकारेण पुराऽश्विनौ 'प्रत्यधत्तां' प्रतिहितवन्तौ संयोजितवन्तौ । तेनैव प्रकारेणानुष्ठितं कर्म 'यज्ञस्य शिरः संस्कृतं' संस्कारेण संयोजितं भवति ॥ ४३ ॥

इत्थं प्रवर्ग्याख्यं कर्म सानुक्रमम् । तत्र "पुरस्तादुपसदां प्रवृणक्ति" इति वचनात् सर्वेषु सोमयागेषु उपसत्पूर्वं अनुष्ठेयमिति चोदितम् । अथ तस्य क कालं कचित् विशेषतो निषेधति—तन्न प्रथमयज्ञे प्रवृञ्ज्यादिति । "यज्ञं सम्यक् ज्योतिष्टोमस्य प्रथमकर्तव्यो योऽग्निष्टोमस्तस्मिन् यज्ञे तस्मिन् 'तं'

१-"अश्विनौ च प्राहुः" । का० श्रौ० सू० २६ । १-६ ।

२-उपसदां प्रवर्ग्योपक्रमम् । का० श्रौ० सू० २६ । १११ ।

३-एतस्य अस्त्येव वाक् "स यदि तस्य ह्येव प्रवर्ग्ये । अथ प्रवर्ग्येण ..." (श० प० १४ । १ । ३ । १) इति । "स प्रगृह्णस्य वैश्वे" इति च । (श० प० १४ । १ । ३ । १०)

४-"अनुस्मारय" इत्यादि सूत्रकारः ... "एव प्रथमं ..." । "..." इति च १ । १० । १ । २१ । २७ । "एव यत्र प्रथमे यज्ञानां ..." (ऐ० ब्रा० १६ । १२) इति ... प्रथमः कर्म इति । २५ । ... इति । ... । ४ । ... । ७ । ... । ... इति ... । ... ।

५-"प्रथमकर्तव्यः" इति । ... ।

देवाऽअर्चन्तः श्राम्यन्तश्चेरुस्तस्माद्द्वितीये वैव तृतीये वाऽथो तप्तो वाऽ एष शुशुचानो भवति ॥ ४४ ॥

तं प्रथमयज्ञे प्रवृञ्ज्यात् । ( ३ ) एषोऽस्य तप्तः शुशुचानः प्रजाश्च पशूँश्च प्रदहेदथोऽआहुः प्रमायुको यजमानः स्यात्तस्माद्द्वितीये वैव तृतीये वा ॥ ४५ ॥

---

वैव तृतीये वा । अपशीर्ष्णा ह्येवाग्रे यज्ञेन देवा अर्चंतः श्राम्यंतश्चेरुः । तस्मात् द्वितीये वैव तृतीये वा । अथो तप्तो वा एष शुशुचानो भवति ॥ ४४ ॥

तं यत्प्रथमयज्ञे प्रवृञ्ज्यात् । एषोऽस्य तप्तः शुशुचानः प्रजा च पशूँश्च प्रदहेत् । अथो आहुः । प्रमायुको यजमानः स्यात् । तस्मात् द्वितीये वैव तृतीये वा ॥ ४५ ॥

---

प्रवर्ग्यं ' न प्रवृञ्ज्यात् ' प्रवृजनं न कुर्यात् । अग्निष्टोममध्ये तु प्रथमयज्ञे अयं प्रतिषेधो न भवति । " अग्निष्टोमे प्रवृणक्ति " इति वाक्यान्तरेण प्रवृजनस्य कठोक्तत्वात् इति मीमांसकानां मतम् । प्रथमयज्ञे प्रवृजने को दोष इत्यत आह–एतस्य हि तदृ०च्छिनदिति । तत्प्रवर्ग्यानुष्ठानं ' एतस्य हि ' पापाद्धं पापावहं खलु आथर्वणेन दधीचा अत्यन्तं गुप्तत्वात् इतः पूर्वं केनचिदपि यज्ञेन असंस्कृतस्य यजमानस्य प्रथममनुष्ठीयमाने यज्ञे प्रवर्ग्यानर्हत्वात् तस्य करणं पापहेतुर्भवतीत्यर्थः । 'अथो' अपि च ' मे ' मम अध्वर्यो 'मैत्' नैव ' शिरश्छिनदत् ' छिन्द्यात् इति भयेनापि ' प्रथमयज्ञे न प्रवृञ्ज्यात् ' । आथर्वणं दध्यञ्चं प्रति पुरा एवं खलु इन्द्रेणोक्तं यदि इमां प्रवर्ग्यविद्यां अन्यस्मै उपदिशसि अथवा तत्प्रतिपाद्यं प्रवर्ग्याख्यं कर्म अन्यस्य यजमानस्य करोषि । तर्हि अहमागत्य तव शिरः छिन्द्यामिति । एवं सुगुप्तकर्म यदि अध्वर्युः अन्यदीये प्रथमयज्ञे प्रकटयति । तदा हि इन्द्र आगत्य तच्छिरः छिन्द्यात् । तस्मात् एतद्भयेनापि प्रथमयज्ञे न कुर्यादित्यर्थः । नन्वेवं सर्वथैव प्रवर्ग्यं न कार्यं ' नेत्याह–द्वितीये वैव तृतीये वा इति । द्वितीय एव वा तृतीय एव वा यज्ञे प्रवृञ्ज्यात् । प्रथमं सोमयागमनुष्ठाय पुनः क्रियमाणे मध्यन्तरे द्वितीये सोमयागे तृतीये वा प्रवृजनं कार्यमित्यर्थः । अथैतदुपपादते– ' अग्रे ' पुरा खलु ' देवा ' ' अपशीर्ष्णा ' अपगतशिरस्केन खलु ' यज्ञेन ' 'अर्चन्त ' पूजयन्तः ' श्राम्यन्तः ' श्रान्ताश्च सन्तः प्रथमं चेरुश्चरितवन्तः । पश्चात्प्रवर्ग्यलक्षणशिरसा युक्तेनायजन् । तत्साम्यात् अस्मिन् कालेऽपि प्रथमयज्ञमप्रवर्ग्यं कृत्वा द्वितीय एव वा तृतीय एव वा यज्ञे प्रवर्ग्यं कुर्यात् । अथ विपक्षे बाधमुक्त्वा एतदेवोपसंहरति–तस्माद्द्वितीये वैव तृतीये वा इति । ' एष ' घर्मस्तप्तः अग्निज्वालया सन्तप्तः ' शुशुचानः ' शोचनशीलो भवति ॥ ४४ ॥

यद्यदि ' तं ' तथाविधं घर्मं ' प्रथमयज्ञे ' प्रवृञ्ज्यात् ' एष तप्तः ' शोचनशीलो घर्मः तर्हि अस्य यजमा-

---

१ इति ध्यामाप्रष्टव्या मतमिति । तथा चाग्र शाङ्खायनका ( अ ३ पा ३ अ १२ सू १२ । ३ । ) ' तस्मात्प्रयोगो प्रथमयज्ञे न प्रवृञ्ज्यादिति ', यत्तु " अग्निष्टोमे प्रवृणक्ति " इति वाक्यान्तरं तत्तु अग्निष्टोमविषयं, मैत्रावरुणमनयोरेकवाक्यत्वेन प्रतिषेधस्य नियमः । तेनाग्निष्टोमप्रथमप्रयोगे विकल्पः । स च व्यवस्थितः । वचनान्तरवशात् । तथाहि श्रुयते–काम तु योऽनूचानः स्यात् तस्य प्रथमयज्ञे इति । तत्राग्निष्टोमप्रथमप्रयोगे अनूचानस्य नित्यं प्रयोगः । अन्यथा नियमप्रयोग । अतिरात्रे प्रथमाहरहर्गु-

तन्न सुर्व्वस्माऽइव प्प्रुवृञ्ज्यात् । (त्सु) सुर्व्वम्वै प्प्रवर्ग्यो नेत्सुर्व्व-स्माऽइव सुर्व्वङ्करुवाणीति य्योऽन्वेवु ज्ञातस्तुस्मै प्प्रुवृञ्ज्याद्यो वाऽस्य प्रियः स्याद्यो वाऽनूचानोऽनूक्तेनैनम्प्राप्नुयात् ॥ ४६ ॥

(त्स) सहुस्रे प्प्रुवृञ्ज्यात् । (त्सु) सुर्व्वम्वै सहुस्रᳪं सुर्व्वमेपु सर्व्व-

---

तं न सर्वस्मा इव प्रवृञ्ज्यात् । सर्वं वै प्रवर्ग्यः । नेत्सर्वस्मा इव सर्वं करवाणीति । योऽन्वेव ज्ञातः । तस्मै प्रवृञ्ज्यात् । यो वाऽस्य प्रियः स्यात् । यो वाऽनूचानः अनूक्तेन प्राप्नुयात् ॥ ४६ ॥

सहस्रे प्रवृञ्ज्यात् । सर्वं वै सहस्रम् । सर्वमपः । सर्वमिदं प्रवृञ्ज्यात् । सर्वं च सर्ववेदसम् ।

---

नस्य पुत्रादिरूपां प्रजां च ' गवाश्वादिरूपान्पशूंश्च ' प्रदहेत् ' प्रदग्धुं शक्नुयात् । ' अग्नौ ' अपि च अभिज्ञा ब्रह्मवादिन ' आहुः ' कथयन्ति । यजमान ' स ' प्रमायुक ' मरणशील ' स्यात् ' इति । यस्मात् प्रथमयज्ञ यजमानस्य एव दोषजातमस्ति । तस्मात् द्वितीय एव वा तृतीय एव वा सोमयागे प्रवर्ग्यं कुर्यात् ॥ ४५ ॥

वेदसे प्प्रव्व्रज्यात्सुर्व्वम्वै सर्व्ववेदसꣳ सुर्व्वमेधु व्विश्वजिति सुर्व्वपृष्ठे प्प्रव्व्रज्यात्सुर्व्वम्वै व्विश्वजित्सुर्व्वपृष्ठः सुर्व्वमेधु व्वाजपेये राजसूये प्प्रव्व्रज्यात्सुर्व्वꣳ हि तुत्सत्रे प्प्रव्व्रज्यात्सुर्व्वम्वै सत्रꣳ सुर्व्वमेधुऽ एतान्यस्य प्प्रवुर्जनान्यतो नान्यत्र ॥ ४७ ॥

---

सर्वमेधः । विश्वजिति सर्वपृष्ठे प्रव्रज्यात् । सर्वं वै विश्वजित्सर्वपृष्ठः । सर्वमेधः । वाजपेये राजसूये प्रव्रज्यात् । सर्वं हि तत् । सत्रे प्रव्रज्यात् । सर्वं वै सत्रम् । सर्वमेधः । एतान्यस्य प्रवर्जनानि । अतो नान्यत्र ॥ ४७ ॥

---

कर्म 'सर्वं वै' सर्वात्मकं बहुदक्षिणाकत्वात्, 'सर्वं' सर्वजगदात्मकः । अत उभयो साम्येन सत्रयोगित्वात् सहस्रे प्रव्रजनं युक्तमित्यर्थः । एवमुत्तरेष्वपि वाक्यविशेषेषु योजना । वेद इति धननाम । सर्वं यजमानधनं यस्मिन् क्रतौ दक्षिणात्वेन विधीयते तस्मिन् सर्ववेदसे क्रतावपि प्रव्रजनं कार्यम् । सर्ववेदसं सर्वस्वदक्षिणं कर्म 'सर्वं वै' सर्वात्मकं खलु । अपरिमितधनयुक्तत्वात् । तथा 'सर्वपृष्ठे' रथन्तर-बृहत्-वैरूप-वैराज-शाक्वर-रैवतानि पृष्ठसामानि यस्मिन् सहन्यन्ते तादृशे 'विश्वजिति' एतत्संज्ञके एकाहे प्रव्रजनं कुर्यात् । सर्वपृष्ठो विश्वजित् पृष्ठसामबाहुल्यात् 'सर्वं' सर्वात्मकः खलु । तथा वाजपेयराजसूययो क्रत्वो प्रव्रजनं कुर्यात् । 'क्रतुद्वय' 'सर्वं' सर्वात्मकं खलु । आग्नेयाग्निष्टोमादिसवनीयपशुभिः सर्वात्मकप्रजापतिदैवत्यैः पशुभिश्च यागात् वाजपेयस्य सर्वत्वम् । राजसूयस्य च इष्टिपशुदर्वीहोमसोमसमुदायरूपत्वात् सर्वेषां कर्मभेदानामन्तर्भावात् सर्वत्वम् । तथा 'सत्रे' बहुयजमानकर्तृके सत्रयागे प्रव्रजनं कुर्यात् । 'सत्र' सत्रयागः बहुकर्तृकत्वात् 'सर्वं' सर्वात्मकं खलु । 'एतानि' सहस्रादीनि स्थानानि 'अस्य' प्रवार्यस्य नित्यप्रव्रजनस्थानानि । 'अत' एभ्यः 'अन्यत्र' न नित्यं प्रव्रजनमित्यर्थः ॥ ४७ ॥

---

१-एकः सर्ववेदसः क्रतुर्ब्राह्मणकर्तृकः पुरुषमेधः । "पुरुषमेधस्त्रयोविंशत्यहः सोऽतिष्ठाकामस्य" । "ब्राह्मणराजन्ययोः" । "सर्वस्वं ब्राह्मणस्य" । का. श्रौ. सू. २१ । १ । १ । २ । १५ इति ब्राह्मणकर्तृके पुरुषमेधे सर्वस्वं दक्षिणात्वेन देयमिति विधिः । तथा अपरः सर्ववेदसः क्रतुः सर्वमेधः । "सर्वमेधः सर्वकामस्य" । "पुरुषमेधवद्दक्षिणा सभूमि" इति च । का. श्रौ. सू. २१ । २ । १-१२ ॥

२-बृहत् रथन्तर वैरूप वैराज शाक्वर रैवत इति षट् सामानि पृष्ठशब्दानूच्यमानानि । ताण्ड्यब्राह्म. १७ । ६ । ७ । तै. ब्रा. १ । २ । २ । ३ । छन्दोगानां निदानसूत्रं च-"बृहद्रथन्तरवैराजशाक्वरवैरूपरैवतानि वेषभितानि पृष्ठानि"।

३-"अतिरात्रपशूनुपाकरोति वशां पृश्निं मरुद्भ्य उत्सेदाय" । का. श्रौ. सू. १४ । २ । ११ । "तदभावेऽग्निः" का. श्रौ. सू. १४ । २ । १२ । "प्राजापत्यांश्च सप्तदश श्यामतूपरान् वाजान्" । का. श्रौ. सू. १४ । २ । ११ । अतिरिक्तास्तावत् कात्यायनेनोक्ता । ते च "आग्नेयोऽग्निष्टोमे सवनीयः पशुः" । "ऐन्द्राग्नश्चोक्थ्ये द्वितीयः" । "ऐन्द्रो वृष्णिः षोडशिनि तृतीयः" । "सारस्वती चतुर्थोऽतिरात्रे मेषी वा" । का. श्रौ. सू. ९ । ८ । २ । ३ । ४ । ५ ।

४-"इष्टिपशुसोमदर्वीहोमानन्त्वा कल्पभेदात्" । का. श्रौ. सू. १५ । १ । २ । "चातुर्मास्यप्रयोगः फाल्गुन्याम्" का. श्रौ. सू. । १५ । १ । १५ । एतत्सूत्रालेखस्तु चातुर्मास्यान्तर्भूतदर्वीहोमप्रदर्शको ज्ञेयः ।

५-"यजमानाः सर्वे सत्रेषु" का. श्रौ. सू. १२ । १ । ७ ॥

तदाहुः । ( ऽर्थं । यदुपशिराऽअग्रवर्ग्योऽथ केनास्याग्निहोत्रꣳ शीर्षण्‌वद्भवतीत्याहवनीयेनेति ब्रूयात्कथं दर्शपूर्णमासावित्याज्येन च पुरोडाशेन चेति ब्रूयात्कथञ्चातुर्म्मास्यानीति पयस्ययेति ब्रूयात्कथम्पशुबन्धऽइति पशुना च पुरोडाशेन चेति ब्रूयात्कथꣳ सौम्योऽध्वरऽइति हविर्द्धानेनेति ब्रूयात् ॥ ४८ ॥

---

तदाहुः—यदुपशिरा अग्रवर्ग्यः । अथ केनास्याग्निहोत्रं शीर्षण्वद्भवतीति ?, आहवनीयेनेति ब्रूयात् । कथं दर्शपूर्णमासाविति ?, आज्येन च पुरोडाशेन चेति ब्रूयात् । कथं चातुर्मास्यानीति ?, पयस्ययेति ब्रूयात् । कथं पशुबंध इति ?, पशुना च पुरोडाशेन चेति ब्रूयात् । कथं सौम्योऽध्वर इति ?, हविर्द्धानेनेति ब्रूयात् ॥ ४८ ॥

( उ ) अथोऽआहुः । ( र्ग्य ) यज्ञस्य शीर्षच्छिन्नस्य शिरऽएतद्देवाः प्रत्यदधुर्यदातिथ्यन्न ह वाऽअस्यापशीर्ष्णा केनचन यज्ञेनेष्टम्भवति यऽएवमेतद्वेद ॥ ४९ ॥

तदाहुः । (र्ग्य) यत्प्रणीताः प्रणयन्ति यज्ञेऽथ कस्मादत्र न प्रणयन्तीति शिरो वाऽ एतद्यज्ञस्य यत्प्रणीताः शिरः प्रवर्ग्यो नेच्छिरसा शिरोऽभ्यारोहयाणीति ॥ ५० ॥

---

अथो आहुः । यज्ञस्य शीर्षच्छिन्नस्य शिर एतद्देवाः प्रत्यदधुः, यदातिथ्यम् । न ह वा अस्यापशीर्ष्णा केनचन यज्ञेनेष्टं भवति । य एवमेतद्वेद ॥ ४९ ॥

तदाहुः—यत्प्रणीताः प्रणयन्ति यज्ञे । अथ कस्मादत्र न प्रणयन्तीति । शिरो वा एतद्यज्ञस्य । यत्प्रणीताः । शिरः प्रवर्ग्यः । नेच्छिरसा शिरोऽभ्यारोहयाणीति ॥ ५० ॥

---

अथ प्रकारान्तरेण सशिरस्कत्वमाह—अथो आहुर्यज्ञस्य० यदातिथ्यमिति । अथोशब्द: पक्षान्तरपरः । 'आहु' रभिज्ञा ब्रह्मवादिनः कथयन्ति । किमिति चेत्, उच्यते—'शीर्षच्छिन्नस्य' छिन्नशिरस्कस्य 'यज्ञस्य' एतदेव 'शिरः' पुरा 'देवाः' 'प्रत्यदधुः' संदधुः । 'यत्' आतिथ्याख्यं हविः क्रियते, एतदेव यज्ञस्य शिरः । तत् देवैः पुरा प्रतिनिर्मितमित्यर्थः । अत एव तैत्तिरीयकम्—"शिरो वा एतद्यज्ञस्य यदातिथ्यं नवकपालः पुरोडाशो भवति तस्मान्नवधा शिरो विष्यूतम् ( तै स ६।२।१ )" इति । अत एतद्वेदनस्तुतिमाह—न ह वाऽ अस्या० मेतद्वेदेति । 'यः' यजमान 'एवं' उक्तप्रकारेण 'एतत्' अग्निहोत्रादीनां सशिरस्कत्वं 'वेद' जानाति । 'अस्य' यजमानस्य 'अपशीर्ष्णा' अपगतशिरस्केन 'केनचन' केनापि 'यज्ञेन' 'इष्टं' यजनं 'न ह वै' खलु 'भवति' । अग्निहोत्रादिकम् एव यज्ञः सशिरस्कमेव कृतवान् भवतीत्यर्थः ॥ ४९ ॥

सोमयागाङ्गभूतेषु दीक्षणीयादिषु कर्मसु प्रणीता आपः प्रणीयन्ते । तथा च तदङ्गभूते प्रवर्ग्येऽपि तासामपां प्रणयनेन भवितव्यमित्याशङ्क्याह—तदाहुर्यत्प्रणीता० रोहयाणीनीति । तत्र प्रवर्ग्ये 'आहुः' कथयन्ति ब्रह्मवादिनः । 'यज्ञे' दर्शपूर्णमासादौ दीक्षणीयादौ च यस्मात् 'प्रणीताः' अपः 'प्रणयन्ति' यद्दर्शपूर्णमासादौ प्रणीतापः प्रणयनं कार्यम् । 'अथ' च कस्मादत्र कारणात् 'अत्र' प्रवर्ग्ये कर्मणि अध्वर्युस्ता 'न प्रणयतीति' प्रश्नः । तस्योत्तरमेतत् "शिरो वा" इत्यादिकम् । प्रणीता आपः इति यत् 'एतद्यज्ञस्य' 'शिरो वै' प्रवर्ग्यश्च यज्ञस्य शिरः । न खलु शिरसः उपरि अन्यच्छिरो भवति । एवं च

---

१—"शिरो वै यज्ञस्य [illegible] । [illegible] । [illegible] शिरो [illegible] भवति । [illegible] ॥ एत [illegible] भवति । [illegible]" । श० प० ३ । २ । ३ । १० । इति शतपथश्रुतिः [illegible] ।

२ 'यद्युत्तम [illegible] । [illegible] हैवैतद् [illegible] । न [illegible] इति" । (तै० ब्रा० [illegible]) इति [illegible] ।

३—"शिरो ह वाऽ एतद्यज्ञस्य यत्प्रव[illegible] । [illegible] भवति । शिर एवैतद्यज्ञस्य [illegible] । [illegible] शिरऽ एव [illegible] [illegible] इति" । (श० प० ११ । २ । ६ । १ ) इति [illegible] ।

तदाहुः । ( स्थं ) यत्प्रयाजानुयाजा अन्यत्र भवन्त्यथ कस्मादत्र न भवन्तीति प्राणा वै प्रयाजानुयाजाः प्राणा अवकाशाः प्राणाः शाकला नेत्प्राणैः प्राणानभ्यारोहयाणीति ॥ ९१ ॥

तदाहुः । ( स्थं ) यदाज्यभागावन्यत्र जुह्वत्यथ कस्मादत्र न जुहोतीति चक्षुषी वा एते यज्ञस्य यदाज्यभागौ चक्षुषी रौहिणौ नेच्चक्षुषा चक्षुरभ्यारोहयाणीति ॥ ९२ ॥

तदाहुः । ( ध्रुं ) यद्वानस्पत्यैर्देवेभ्यो जुह्वत्यथ कस्मादेतन्मृण्मयेनैव जुहोतीति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स इमे द्यावापृथिवीऽ अगच्छद्यन्मृदियन्तद्यदापोऽसौ तन्मृदश्चापश्च महावीराः कृता भवन्ति तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ९३ ॥

स यद्वानस्पत्यः स्यात् । ( स्प्र ) प्रदह्येत यद्धिरण्मयः स्यात्प्रलीयेत यल्लोहमयः स्यात्प्रसिच्येत यदयस्मयः स्यात्प्रदहेत्परीशासावथैषऽएवैतस्माऽअतिष्ठत तस्मादेतन्मृण्मयेनैव जुहोति ॥ ९४ ॥

---

तदाहुः–यद्वानस्पत्यैर्देवेभ्यो जुह्वति । अथ कस्मादेतन्मृण्मयेनैव जुहोतीति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत् । स इमे द्यावापृथिवी अगच्छत् । यन्मृत् । इयं तत् । यदापः । असौ तत् । मृदश्चापश्च महावीराः कृता भवन्ति । तेनैवैनमेतद्रसेन समर्द्धयति । कृत्स्नं करोति ॥ ९३ ॥

स यद्वानस्पत्यः स्यात्, प्रदह्येत । यद्धिरण्मयः स्यात्, प्रलीयेत । यल्लोहमयः स्यात्, प्रसिच्येत । यदयस्मयः स्यात्, प्रदहेत् परीशासौ । अथैष एवैतस्मा अतिष्ठत । तस्मादेतन्मृण्मयेनैव जुहोति ॥ ९४ ॥

---

पुनश्चक्षुरुत्तरमीक्षिनम् । अतो नैव 'चक्षुषा' चक्षुरतर 'अभ्यारोहयाणि' अभ्यारूढ करवाणि इत्यनेनाभिप्रायेण आज्यभागयागावधि प्रवर्ग्ये न क्रियेत इत्यर्थः ॥ ९२ ॥

अथ मृण्मयपात्रस्य होमानर्हतामाशङ्क्य घर्महोमे तदेव योग्यमित्युपपादयति–तदाहुर्यद्वानस्पत्यै० कृत्स्नं करोतीति । 'तत्' तत्र प्रवर्ग्यविषये 'आहुः' पुनरन्यच्चोदयन्ति । यद्यस्मात् 'देवेभ्यः' देवानामर्थं 'वानस्पत्यैः' वनस्पतिविकारैः दारुमयैः पात्रैः 'जुह्वति' । 'अथ कस्मात्' कारणात् अत्र 'एतत्' घर्मलक्षणं हविः 'मृण्मयेन' मृद्विकारेणैव महावीरादिना पात्रेण 'जुहोति' । न च एतत् युक्तम् । "न हि मृन्मयमाहुतिमानशे" (तै० सं० २।१।४) इति श्रुत्यन्तरे मृण्मयस्य आहुत्यनर्हताया ज्ञापितत्वादिति शङ्का । तस्योत्तरम्–'यज्ञस्य शीर्षच्छिन्नस्य' इत्यादिकम् । एतच्च प्रथमाध्यायस्य द्वितीयब्राह्मणे मृदाहरणप्रस्तावे व्याख्यातम् ॥९३॥

अथ विपक्षे बाधमुक्त्वा मृण्मयेनैव होतव्यमित्युपसंहरति–स यद्वानस्पत्य० जुहोतीति । 'सः' होमसाधनभूतो महावीरः यदि 'वानस्पत्यः' वनस्पतिविकारो दारुमयः 'स्यात्' तदा तस्य तापने सति 'प्रदह्येत' प्रदग्धो भवेत् । यदि 'हिरण्मयः' सुवर्णनिर्मितो महावीरः 'स्यात्' तदा तापात् 'प्रलीयेत' घृतवत् विलीनो भवेत् । यदि 'लोहमयः' कांस्यादिनिर्मितः 'स्यात्' तदा 'प्रसिच्येत' प्रकर्षेण सिक्तो द्रुतो भवेत् । यदि च 'अयस्मयः' अयसा निर्मितः 'स्यात्' तदा 'परीशासौ' महावीरपरिग्रहार्थौ सन्दंशौ प्रदहेत् प्रदग्धौ कुर्यात् । अथ 'यस्मात्' कारणात् 'एषः' मृण्मय एव महावीरः 'एतस्मै' धर्माय 'अतिष्ठत' नाशादिक्षमत्वेन स्थितः अभूत् । 'तस्मात्' कारणात् 'एतत्' घर्माख्यं हविः 'मृण्मयेन' मृद्विकारेण पात्रेण महावीराख्येनैव 'जुहोति' ॥ ९४ ॥

( त्यु ) अथैतद्वै । ( द्वाऽअ्रा ) आयुरेतज्ज्याति' प्रविशाति यऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ ५८ ॥

इति द्वितीयप्रपाठके प्रथम ब्राह्मणम् ॥ १४।२।१ ॥ ( २-२ ) ॥

इति द्वितीयोऽध्याय समाप्त ॥ १४-२ ॥

कण्डिकासंख्या ॥ ७७ ॥

---

अथ एतद्वा आयु एतज्ज्याति प्रविशाति । य एतमनु वा ब्रूते भक्षयति वा । तस्य व्रतचर्या या सृष्टौ ॥ ५८ ॥

( न्त्यु ) अथाग्नीध्रः । ( ऽ ) आहवनीये त्रीञ्छालाकानुपकल्पयते तेषामेकमुज्ज्वलय्य मुखदघ्ने धारयमाणो जुहोति यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत्सेमांल्लोकानाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ २ ॥

( त्यु ) अथ यन्मुखदघ्ने । ( म्रुऽउ ) उपरीव वै तद्यन्मुखदघ्नमुपरीव तद्यदसौ लोकस्तद्याऽमुं लोकꣳ शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ३ ॥

या ते घर्म दिव्या शुगिति । येव दिव्या शुग्या गायत्र्याꣳ हविर्द्धानऽ

---

अथाग्नीध्रः आहवनीये त्रीञ्छालाकानुपकल्पयते । तेषामेकमुज्ज्वलय्य मुखदघ्ने धारयमाणो जुहोति । यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत् । सेमाल्लोकानाविशत् । तयैवैनमेतच्छुचा समर्द्धयति । कृत्स्नं करोति ॥ २ ॥

अथ यन्मुखदघ्ने । उपरीव वै तत् । यन्मुखदघ्नम् । उपरीव तत् । यदसौ लोकः । तयाऽमुं लोकं शुगाविशत् । तयैवैनमेतच्छुचा समर्द्धयति । कृत्स्नं करोति ॥ ३ ॥

" या ते घर्म दिव्या शुक् "-इति । येव दिव्या शुक् । " या गायत्र्यां हविर्द्धाने "-

इति यैव गायत्र्याऽँ हविर्द्धाने सा तऽआप्यायतान्निष्ट्यायतान्तस्यै ते स्वाहेति नात्र तिरोहितमिवास्ति ॥ ४ ॥

( स्तम्बयजुः ) अथ द्वितीयमुज्ज्वलनम्य । नाभिदघ्ने धारयमाणो जुहोति मध्यमिव वै तद्यन्नाभिदघ्नम्मध्यमिवान्तरिक्षलोकस्तयाऽन्तरिक्षलोकऽँ शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ५ ॥

या ते घर्मान्तरिक्षे शुगिति । यैवान्तरिक्षे शुग्या त्रिष्टुभ्याग्नीध्रऽइति यैव त्रिष्टुभ्याग्नीध्रे सा तऽआप्यायतान्निष्ट्यायतान्तस्यै ते स्वाहेति नात्र तिरोहितमिवास्ति ॥ ६ ॥

---

इति । यैव गायत्र्या हविर्द्धाने । " सा त आप्यायतां निष्ट्यायतां तस्यै ते स्वाहा "- इति । नात्र तिरोहितमिवास्ति ॥ ४ ॥

अथ द्वितीयमुज्ज्वलनस्य नाभिदघ्ने धारयमाणो जुहोति । मध्यमिव वै तत् । यन्नाभिदघ्नम् । मध्यमिवान्तरिक्षलोकः । तयाऽन्तरिक्षलोकं शुगाविशत् । तयैवैनमेतच्छुचा समर्द्धयति । कृत्स्नं करोति ॥ ५ ॥

" या ते घर्मान्तरिक्षे शुक् "-इति । यैवान्तरिक्षे शुक् । " या त्रिष्टुभ्याग्नीध्रे "-इति । यैव त्रिष्टुभ्याग्नीध्रे । " सा त आप्यायतां निष्ट्यायतां तस्यै ते स्वाहा "-इति । नात्र तिरोहितमिवास्ति ॥ ६ ॥

( स्तयु ) अथ तृतीयमभ्याधाय । तस्मिन्नासीनो जुहोत्यधऽइव वै तद्यदासीनोऽधऽइव तद्यदयं लोकस्तद्येमं लोकꣳ शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ७ ॥

या ते घर्म्म पृथिव्याꣳ शुगिति । येव पृथिव्याꣳ शुग्या जगत्याꣳ सदस्येति येव जगत्याꣳ सदस्या सा तऽआप्यायतान्निष्ट्यायतान्तस्यै त स्वाहेति नात्र तिरोहितमिवास्ति ॥ ८ ॥

( स्तयु ) अथोपनिष्क्रामति । क्षत्त्रस्य त्वा परस्पायेत्येतद्वै दैवं क्षत्त्रं यऽएष तपत्यस्य त्वा मानुषस्य क्षत्त्रस्य परस्पायत्वायेत्येवैतदाह ब्रह्मणस्तन्वम्पाहीति ब्रह्मणऽआत्मानङ्गोपायेत्येवैतदाह विशस्त्वा

---

अथ तृतीयमभ्याधाय तस्मिन्नासीनो जुहोति । अध इव वै तत् । यदासीनः । अध इव तत् । यदयं लोकः । तयेमं लोकं शुगाविशत् । तयैवैनमेतच्छुचा समर्द्धयति । कृत्स्नं करोति ॥ ७ ॥

" या ते घर्म पृथिव्यां शुक् "–इति । येव पृथिव्यां शुक् । " या जगत्यां सदस्या "–इति । येव जगत्यां सदस्या । " सा त आप्यायतां निष्ट्यायतां तस्यै ते स्वाहा "–(वा. सं. ३८ । १८ ) इति । नात्र तिरोहितमिवास्ति ॥ ८ ॥

अथोपनिष्क्रामति । " क्षत्रस्य त्वा परस्पाय "–इति । एतद्वै दैवं क्षत्रम् । य एष तपति । अस्य त्वा मानुषस्य क्षत्रस्य परस्पायत्वाय इत्येवैतदाह । " ब्रह्मणस्तन्वं पाहि "–

( न्ताऽऽग्ने ) आग्नेय्युाङ्गायति । ( त्य ) अग्निर्हि रक्षसामपहन्ताऽतिच्छन्दसि गायत्येषा वै सर्वाणि च्छुन्दाᳪसि यदुतिच्छन्दास्तुस्मादुतिच्छन्दसि गायति ॥ ११ ॥

स गायति । ( त्य ) अग्निष्टपति प्रतिदहत्यहावोऽहावऽइति तन्नाष्ट्राऽएवैतद्रक्षाᳪस्यतोऽपहन्ति ॥ १२ ॥

---

आग्नेय्या गायति । अग्निर्हि रक्षसामपहंता । अतिच्छन्दसि गायति । एषा वै सर्वाणि च्छन्दांसि । यदतिच्छन्दाः । तस्मादतिच्छन्दसि गायति ॥ ११ ॥

स गायति-" अग्निष्टपति प्रतिदहत्यहावोऽहावः "-इति । तन्नाष्ट्रा एवैतद्रक्षांस्यतोऽपहंति ॥ १२ ॥

---

वा प्रैषं ब्रूयात् । तुशब्दः पक्षव्यावृत्त्यर्थः । साम गायेत्येव ब्रूयात् । न ब्रूहीति । कुतः 'हि' यस्मात् 'साम गायन्ति' गानेनोच्चरन्ति । न तु केवलं ऋगादिवत् पठन्ति । तस्मात् साम्नो गीत्यात्मकत्वात् 'साम गाय' इत्येव प्रेषयेदित्यर्थः । अथ सामगानस्य प्रयोजनमाह—तद्यत्साम गायति० रक्षसामपहंत्येति । 'तत्' तत्र गानकाले 'यत्साम गायति' । तत् किमर्थमिति चेत् उच्यते—'शरीरात्' शरीरभूतात् यज्ञात् 'बहिर्धा' बाह्यदेशे नाष्ट्रा नाशकारिणः राक्षसस्य प्रजा अन्यानि च 'रक्षांसि' 'न हिनसन्' न हिंस्युः इत्येवमर्थम् । ननु—अन्येष्वपि मन्त्रेषु सत्सु किमिति साम्नो गानमिति चेत् उच्यते 'साम' खलु तेजोरूपत्वात् 'नाष्ट्राणां रक्षसामपहन्ता' विनाशकम् । तस्य च तेजोरूपत्वं तैत्तिरीयैः स्पष्टमाम्नायते—"सर्वं तेजः सामरूप्यं ह शश्वत्" ( तै० का० प्र० ३ अनु० अन्त्य ) इति । अयमर्थः—सूर्यस्य यत्तेजोमण्डलं तत्सर्वं सामात्मकमेवेति ॥ १० ॥

अथ विहितस्य साम्नः आधारभूतामृचं तद्धारणादि स्तोत्रविशेषं चाह—आग्नेय्या गायति०मपहंतेति । आग्नेय्यामग्निदेवतायां 'अग्निं होतारं मन्ये' इत्यस्यामृचि तत्साम गायन्ति । 'अग्निः' खलु 'रक्षसां' राक्षसानाम् 'अपहन्ता' विनाशकः । अथ तस्या अतिच्छन्दस्त्वं स्तौति—अतिच्छ० गायतीति । 'अतिच्छन्दसि' छन्दःपरिमाणमतीत्य वर्तमानं छन्दो यस्याः सा अतिच्छन्दाः तस्यामृचि एतत्साम गायति । 'एषा वै' एषा खलु अतिच्छन्दाः सर्वाणि छन्दांसि सर्वच्छन्दोरूपा यदि सामान्यतः तदन्तर्भावात् । 'यत्' या अतिच्छन्दाः । अथ छन्दस्कायामृचि गानं तु अस्मात् अतिच्छन्दसामनन्तर्भावात् सर्वेषां छन्दसां परिग्रहो न सिध्यत् । यस्मादेवं 'तस्मात्' 'अतिच्छन्दसि' 'अग्निं होतारं' इत्यस्यामेव अतिच्छन्दस्कायामृचि तत्साम गायेत् ॥ ११ ॥

तऽउदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्रेणाग्नीध्रमेषा हि यज्ञस्य द्वाः स यस्यान्ततो दिश्यापो भवन्ति तद्यन्ति ॥ १३ ॥

तम्वै परिप्यन्दऽउत्सादयेत् । ( त ) ततो वाऽएष शुशुचानो भवति तं यदस्यामुत्सादयेदिमामस्य शुगृच्छेद्यदप्सूत्सादयेदपोऽस्य शुगृच्छेदथ यत्परिप्यन्दऽउत्सादयति तथो ह नैनापो हिनस्ति नेमां यद्वहाप्सु न यास्यति नेनापो न हिनस्त्यथ यत्समन्तमापः परियन्ति शान्तिर्वाऽआपस्तेनोऽइमाञ्च हिनस्ति तस्मात्परिप्यन्दऽउत्सादयेत् ॥ १४ ॥

---

न उदञ्चो निष्क्रामन्ति । जघनेन चात्वालम् । अग्रेणाग्नीध्रम् । एषा हि यज्ञस्य द्वाः । स यस्यां ततो दिश्यापो भवंति । तद्यंति ॥ १३ ॥

तं वै परिष्यन्द उत्सादयेत् । ततो वा एष शुशुचानो भवति । तं यदस्यामुत्सादयेत् । इमा-

( दु ) उत्तरवेद्यां त्वेवोत्सादयेत् । ( द्य ) यज्ञो वाऽउत्तरवेदिः शिरः प्रवर्ग्यो यज्ञऽएवैतच्छिरः प्रतिदधाति ॥ १५ ॥

( त्यु ) उत्तरनाभ्या सुᳪस्पृष्टम्प्रथमं प्रवर्ग्यमुत्सादयति । व्वाग्वाऽउत्तरनाभिः शिरः प्रवर्ग्यः शीर्षंस्तद्वाचन्दधाति ॥ १६ ॥

---

मस्य शुगृच्छेत् । यदप्सूत्सादयेत् । अपोऽस्य शुगृच्छेत् । अथ यत्परिष्यदऽउत्सादयति । तथा उ ह नैवापो हिनस्ति, नेमाम् । यद्दाप्सु न मास्यति । तेनापो न हिनस्ति । अथ यत्समन्तमापः परियन्ति । शान्तिर्वा आपः । तेन उ न इमान् हिनस्ति । तस्मात्परिष्यद उत्सादयेत् ॥ १४ ॥

उत्तरवेद्यां त्वेवोत्सादयेत् । यज्ञो वा उत्तरवेदिः । शिरः प्रवर्ग्यः । यज्ञ एवैतच्छिरः प्रतिदधाति ॥ १५ ॥

उत्तरनाभ्या संस्पृष्टं प्रथमं प्रवर्ग्यमुत्सादयति । वाग्वा उत्तरनाभिः । शिरः प्रवर्ग्यः । शीर्षंस्तद्वाच दधाति ॥ १६ ॥

---

द्वीप । तस्मिन् 'तं' प्रवर्ग्यं उत्सादयेत् उत्सादनं उद्वासनं कुर्यात् । अथ पारिष्यद-व्यतिरिक्तभूभाग एव कस्मादसौ नोद्वास्यते कस्मात् उदकेषु च नोद्वासनम् ? इति चेत् अत्र उच्यते अग्निना सतप्त 'एष' घर्म 'शुशुचान' शोचनशीलः दाहशीलः दग्धुं समर्थो भवति । 'तं' तथाविधं प्रवर्ग्यं यद्यदि 'अस्यां' पृथिव्यां उत्सादयेत्' तर्हि 'इमां' पृथिवीं अस्य' घर्मस्य 'शुक्' शोकी दाहः ऋच्छेत्प्राप्नुयात् । तथा यदि अप्सु' उदकेषु उत्सादयेत्' तदा 'अस्य शुक्' शोकः 'अपः' उदकानि 'ऋच्छेत्' गच्छेत् । यद्वा अनयोरन्यतरतोऽपि ऋच्छतिरत्र हिंसार्थः । आर्ति प्राप्नुयात् । 'अथ' एवं सति यद्यस्मात् 'परिष्यदे' परिष्यदनयुक्ते द्वीपे 'उत्सादयति' तं प्रवर्ग्यं उद्वासयति । 'तथा उ ह' तस्मादेव अपोऽपि 'नैव हिनस्ति' 'इमां' पृथिवीमपि 'नैव हिनस्ति' । एतदेव विविच्यते- यदह' यस्मादेव अप्सूदकेषु प्रवर्ग्यं 'न प्रास्यति' न प्रक्षिपति । 'तेन' कारणेन 'अपः' उदकानि 'न हिनस्ति' अपां प्रवर्ग्यसम्बन्धाभावात् । 'अथ' यद्यपि पृथिव्यां प्रास्यति तथापि 'समन्तम्' अभितः 'आपः' परियन्ति' परितस्तं गच्छन्तीति यत् 'तेन' तेनैव कारणेन 'इमां' पृथिवीं 'न हिनस्ति' न बाधते । कुतः ? 'शान्तिर्वा आपः' यतः तास्वेव शमनहेतुत्वेन आपः प्रसिद्धाः । तस्मात् पृथिव्या घर्मसंसर्गकृतस्तापः अग्निनो तमानोऽदके परिहियते इत्यर्थः । यस्मादेवं तस्मात्तेन कारणेन 'परिष्यन्दे' परिष्यन्द एव 'उत्सादयेत्' ॥ १४ ॥

इत्थं नदीद्वीपे उत्सादनमुक्त्वा पक्षान्तरमाह-उत्तरवेद्यां त्वेवोत्सादयेदिति । तुशब्दः पक्षव्यावृत्त्यर्थः । उत्तरवेद्यामेवोत्सादयेत् । न तु परिष्यदे इत्यर्थः । अथैतदुपपादयति-यज्ञो वा उत्तरवेदि० दधातीति । या इयमुत्तरवेदिः महावेदेः पूर्वभागे वर्तते । एषा यज्ञ एव सर्वक्रत्वाधारत्वात् यज्ञात्मकत्वम् । 'प्रवर्ग्य' अस्य यज्ञस्य 'शिरः' तथा च उत्तरवेद्यां उद्वासनेन 'यज्ञ एव' एतत्प्रवर्ग्याख्यं 'शिरः' 'प्रतिदधाति' संदधाति ॥ १५ ॥

अथ प्रथमस्य महावीरस्य उद्वासनप्रकारमाह-उत्तरनाभ्या संस्पृष्ट० मुत्सादयतीति । महावीरादिभि

---

१ उत्सादनदेशं गच्छन्त्युत्तरवेदिम् । का० श्रौ० सू० २६ । १२२ ।

२-नाभिस्पृष्टं मध्यमनाय निदधाति चतुःसन्धिरोत । का० श्रौ० सू० २६ । १२५ ।

चतुःस्रक्तिरिति । ( त्ये ) एष वै चतुःस्रक्तिर्य्यऽएष तपति दिशो ह्येतस्य स्रक्तयस्तस्मादाह चतुःस्रक्तिरिति ॥ १७ ॥

नाभिर्ऋतस्य सप्रथाऽइति । सत्यम्वाऽऋतꣳ सत्यस्य नाभिः सप्रथाऽइत्येवैतदाह स नो विश्वायुः सप्रथाऽइति स नः सर्वायुः सप्रथाऽइत्ये-वैतदाह ॥ १८ ॥

---

" चतुःस्रक्तिः "–इति । एष वै चतुःस्रक्तिः । य एष तपति । दिशो ह्येतस्य स्रक्तयः । तस्मादाह–" चतुःस्रक्तिः "–इति ॥ १७ ॥

" नाभिर्ऋतस्य सप्रथाः "–इति । सत्यं वा ऋतम् । सत्यस्य नाभिः सप्रथाः इत्येवै-तदाह । " स नो विश्वायुः सप्रथाः "–इति । स नः सर्वायुः सप्रथाः इत्येवैतदाह ॥ १८ ॥

---

प्रसार्य हस्तं उत्तरवेदिं प्राप्य तदङ्गान्तरं कार्यं द्युक्तम् । तत्र 'प्रथम' प्रवर्ग्यप्रवृञ्जनसाधनं महा-वीरं 'उत्तरनाभ्या' उत्तरवेद्या मध्ये प्रादेशमात्रेण कृता चतुरस्रभूमिः उत्तरनाभिरित्युच्यते । तया 'सम्पृच' सयद 'उ सादयति' उत्सादयति निदधातीत्यर्थः । तदेतत् स्तौति–वाग्वा उत्तर॰ दधातीति । या 'वाक्' उत्तरनाभिः' सा वाग्वै पुरुषावयवस्य नाभिस्थानस्य शब्दोत्पत्तिस्थानत्वात् तत्सामान्येन उत्तरनाभेरपि तदुत्पत्ति-स्थानत्वेन वागात्मकत्वम् । प्रवर्ग्यश्च यज्ञशिरः । तत् तया च उत्तरवेद्या प्रवर्ग्यसंस्पर्शने सति 'शीर्षन्' यज्ञस्य शिरसि शिरस्येव 'वाचं दधाति' वागिन्द्रियं तद्व्यवहार्यं शब्दं वा, तया च धावित-वान् भवति ॥ १६ ॥

अथैतन्महावीरोत्सादनमन्त्रं पदशः कृत्वा व्याचष्टे–चतुःस्रक्तिरित्येष इति । " चतुःस्रक्तिर्नाभिः " इत्यनेन मन्त्रेण प्रथमस्य महावीरस्य उत्सादनं कुर्यात् । तत्र चतुःस्रक्तिरिति कोऽर्थः इत्याशङ्क्य व्याचष्टे–एष वा इति । 'य एष' सूर्यस्तपति 'एष' खलु 'चतुःस्रक्तिः' । चतस्रः स्रक्तयः अश्रयः यस्य स तथोक्तः । का पुनरस्य स्रक्तय इति तदुच्यते–'एतस्य' सूर्यस्य प्रत्यासन्नत्वात् महादिशः खलु स्रक्तय एव । सूर्ये सर्वासामर्थेन तदात्मके महावीरे सर्वासां योगः । यस्मादेवं 'तस्मात्' " चतुःस्रक्तिः " इति मन्त्रभागं 'आह' अध्वर्युः । अथवा मन्त्र एव चतुःस्रक्तिरिति अनेन पदेन इममर्थं 'आह' प्रतिपादयति ॥ १७ ॥

" नाभिर्ऋतस्य " इति द्वितीयभागे ऋतशब्दस्य तावत् पदार्थमाह–सत्यं वा इति । सत्यमृतं सूर्यस्य ... अत्र 'ऋत' ऋतशब्दवाच्यम् । अथ वाक्यार्थमाह–'सत्यस्य' 'नाभिः' बन्धकः 'सप्रथाः' सर्वतः पृथुः' इति 'इम' वा ... एतन्मन्त्रवाक्यमाह । अथ " स नो विश्वायु " इति तृतीयभागे विश्वायुरिति शब्दस्य ... वाक्यार्थमाह–विश्वायुः सर्वायुरिति । अयमर्थः–'स' सूर्यात्मको घर्मः 'सर्वायुः' 'नः' अस्मदर्थं सम्यगायुःप्रदः । 'सप्रथा' सर्वतः प्रथनेन सह इत्येतदर्थं एतन्मन्त्रवाक्यमाहेति ॥ १८ ॥

(ह्वा) अप द्वेषोऽअप ह्वरऽइति । नात्र तिरोहितमिवास्त्यन्यव्रतस्य सश्चिमेत्यन्यद्वाऽएतस्य व्रतमन्यन्मनुष्याणां तस्मादाहान्यव्रतस्य सश्चिमेत्येवमितरौ प्राञ्चौ तत्त्रिवृत्त्रिवृद्धीदं शिरः ॥ १९ ॥

पुरस्तादुपशयां मृदम् । (मांसं) मांसमेवास्मिन्नेतद्दधाति तदभितः परीशासौ बाहूऽएवास्मिन्नेतद्दधात्यभितः पुरे रौहिणहवन्यौ स्रुचौ हस्तावेवास्मिन्नेतद्दधाति ॥ २० ॥

---

" अप द्वेषो अप ह्वरः "-इति । नात्र तिरोहितमिवास्ति । " अन्यव्रतस्य सश्चिम "-(वा. सं. ३८ । २०) इति । अन्यद्वा एतस्य व्रतम् । अन्यन्मनुष्याणाम् । तस्मादाह-"अन्यव्रतस्य सश्चिम "-इति । एवमितरौ प्राञ्चौ । तत्त्रिवृत् । त्रिवृद्धीदं शिरः ॥ १९ ॥

पुरस्तादुपशयां मृदम् । मांसमेवास्मिन्नेतद्दधाति । तदभितः परीशासौ । बाहू एवास्मिन्नेतद्दधाति । अभितः परे रौहिणहवन्यौ स्रुचौ । हस्तावेवास्मिन्नेतद्दधाति ॥ २० ॥

---

चतुर्थभाग अनूद्य स्पष्टार्थतामाह-' द्वेषः ' द्वेष्टॄन् ' ह्वरः ' कुटिलान् ' अपजहि ' इत्यभ्यायस्य स्पष्टत्वात् । अत्रास्मिन्मन्त्रभागे तिरोहितमन्तर्हितमिव किमपि व्याख्यानापेक्षं नास्तीत्यर्थः । " अन्यव्रतस्य " इति मन्त्रभागस्य कोऽर्थः इति चेत्, उच्यते-' एतस्य ' सूर्यात्मकस्य घर्मस्य ' व्रतं ' कर्म अतोऽन्यत् । अन्यत् व्रतं यस्य असावन्यव्रतः इति पदार्थः । कर्मणि षष्ठी । अन्यव्रतं सूर्यात्मकं घर्मं वयं ' सश्चिम ' सभजेमहि इत्ययमर्थः सिद्धो भवति । यस्मादेवं ' तस्मात् ' " अन्यव्रतस्य " इति मन्त्रभागमाह । एवमुत्तरयोरपि महावीरयोरुत्सादनं कार्यं इति विधाय सहत्य स्तौति-एवमितरौ० द० शिर इति । एवमनेनैव प्रकारेण ' इतरौ ' द्वितीयतृतीयावपि महावीरौ ' प्राञ्चौ ' प्राङ्मुखौ ' उद्वासयति ' । तन्महावीरत्रितयं मिलित्वा ' त्रिवृत् ' त्रिगुणितं भवति । ' हि ' यस्मात् ' इदं ' मनुष्यादिसंबन्धि ' शिरः ' ' त्रिवृत् ' त्रिगुणितं लोमास्थित्वचां समुदायात्मकम् । तथा च तैत्तिरीयके श्रूयते-" त्रेधाविहितं हि शिरः । लोम त्वगस्थि " इति । तस्मादनेन महावीरत्रितयेनोद्वासितेन त्रिवृच्छिर एव यज्ञस्य संपादितं भवति ॥ १९ ॥

या पूर्वं महावीरादिनिर्माणकाले अवशिष्टा मृत् निहिता तस्या अपि अत्र नियोगं विधाय स्तौति-पुरस्तादुपशयां मृदं मांसमेवास्मिन्नेतद्दधातीति । प्रयोजनाभावेन उपशेते इत्युपशया । महावीरादिनिर्माणावशिष्टामेतामुपशयां ' मृदं ' महावीराणां पुरस्तात्पूर्वभागे उत्सादयतीति वर्तते स्थापयतीत्यर्थः । ' एतत् ' एतेन अस्मिन्महावीरलक्षणे यज्ञशिरसि ' मांसमेव ' ' दधाति ' स्थापितवान् भवति । सा मृत् शिरसोऽन्तर्वर्तमानमांसस्थानीयेत्यर्थः । अथान्यैरपि प्रवर्ग्यसाधनैः शिरोऽवयवनिरूपणेन संपादयन् परीशासयोः स्थापनं विधाय तन्निष्पाद्यमवयवमपि दर्शयति-तदभितः परीशासौ० दधातीति । तस्मात्मृदः उपशयायाः अभितः उभयोः पार्श्वयोः ' परीशासौ ' स्थापयति ' निदधाति ' अस्मिन्प्रवर्ग्ये ' बाहू ' एतेन ' दधाति ' धारितवान् भवति । अथ रौहिणपुरोडाशहोमार्थयोः स्रुचोरुद्वासनं ताभ्यां संपादितं अवयवं च दर्शयति-

---

१-प्राञ्चावितरौ । २-अन्यया च तूष्णीम् । ३-परीशासावभितः । ४-रौहिणहवन्यौ च वहते वर्षे । (का. श्रौ. सू. २६ । ११६-१२५) ।

(त्यु) उत्तरतोऽग्निम् । (न्त) तद्धि तुस्याऽआयुतनं दृक्षिणतुः सम्राडा-सन्दीन्तद्धि तुस्याऽआयुतनमुत्तरतः कृष्णाजिनन्तद्धि तुस्यायतनꣳ सर्व्वतो पवित्राणि प्राणा वै पवित्राणि प्राणानेवास्मिन्नेतुद्दधाति त्रीणि भवन्ति त्रयो वै प्राणाः प्राणऽउदानो व्व्यानस्तानेवास्मिन्नेतुद्दधाति॥२१॥

( त्यु ) अथैतुद्रज्जुसन्दानम् । ( मु ) उपयमन्यामाधाय पश्चात्प्राचीमासादयत्युदरमेवास्मिन्नेतुद्दधाति तुदभितः पिन्वनेऽआण्डावेवास्मिन्ने-

उत्तरतोऽग्निम् । तद्धि तस्या आयतनम् । दक्षिणतः संम्राडासंदीम् । तद्धि तस्या आयतनम् । उत्तरतः कृष्णाजिनम् । तद्धि तस्या यतनम् । सर्वतो पवित्राणि । प्राणा वै पवित्राणि । प्राणानेवास्मिन्नेतद्दधाति । त्रीणि भवन्ति । त्रयो वै प्राणाः । प्राण उदानो व्यानः । तानेवास्मिन्नेतद्दधाति ॥ २१ ॥

अथैतद्रज्जुसंदानम् उपयमन्यामाधाय पश्चात्प्राचीमासादयति । उदरमेवास्मिन्नेतद्दधाति । तदभितः पिन्वने । आण्डावेवास्मिन्नेतद्दधाति । आण्डाभ्यां हि वृषा पिन्वते । पश्चात्स्थूणामयूखम् ।

अभितः परे रौहिणहवनी० तद्दधातीति । 'अभित' पार्श्वद्वये 'रौहिणहवन्यौ' रौहिणपुरोडाशहोमार्थौ 'स्रुचौ' 'परे' शम्यो पाश्चात्ये 'निदधाति' । अस्मिन् प्रवर्ग्ये हस्तावेव दधाति' । अङ्गुलिभिर्युक्त-अरत्निर्हस्त । तत ऊर्ध्वभागो बाहुरिति तयोर्विवेक ॥ २० ॥

अथाग्न्युद्वासनं विधत्ते—उत्तरतोऽग्नि० आयतनमिति । 'उत्तरत' महावीरस्योत्तरभागे 'अग्निं' मृत्खननार्थमानीता काष्ठमयीं 'निदधाति' । 'तद्धि' तत् खलु 'तस्या' अभ्रे 'आयतन' स्थानम् । खाताया मृद उत्तरस्यां दिशि अवस्थानात् तस्यास्तत्स्थानम् अपि अभ्रे तदायतनत्वम् । अथ सम्राडासन्द्या उद्वासनं विधत्ते दक्षिणतः संम्राडा० आयतनमिति । 'दक्षिणत' महावीरस्य दक्षिणभागे 'सम्राडासन्दीं' निदधाति । 'तद्धि' तत्खलु 'तस्या' सम्राडासन्द्या 'आयतन' स्थानम् । आहवनीयस्य दक्षिणत दक्षिणभागे हि पूर्वं स्थापिता । अत दक्षिणा दिक् तस्याः स्थानमित्यर्थः । अथ कृष्णाजिनस्योद्वासनं विधत्ते—उत्तरत कृष्णाजिन० स्यायतनमिति 'उत्तरत' उत्तरभागे, 'कृष्णाजिन' सम्राडासन्द्या उपरि स्थापयितुमानीतं कृष्णमृगस्याजिनं निदधाति । 'तद्धि' तत्खलु 'तस्य' कृष्णाजिनस्य 'आयतन' स्थानम् । हविर्वहन-नादिषु उत्तरत कृष्णाजिनस्य स्तीर्यमाणत्वात् उत्तरदिक् तस्य तदायतनत्वम् । अथ पवित्राणामुद्वासनं विधत्ते—सर्वतो पवित्राणि० तद्दधातीति । 'पवित्राणि' घर्मसमिन्धनार्थानि व्यजनानि कृष्णाजिननिर्मितानि 'सर्वत' सर्वमहावीरपात्रसमुदायस्य उपरि निदध्यात् । तानि 'पवित्राणि' 'प्राणा वै' वायुजनकत्वात् प्राणवाय्वात्मकानि । तथा च अस्मिन् प्रवर्ग्ये सर्वत्र प्राणानेव धारितवान् भवति ॥ २१ ॥

अथ उपयमन्या सार्द्धं गवादिबन्धनार्थाया रज्जोरुद्वासनं विधत्ते—अथैतद्रज्जुसंदानं० तद्दधातीति ।

१—अग्निमुत्तरत । २—आसन्दी दक्षिणत । ३—कृष्णाजिनमुत्तरत । ४ सर्वतो पवित्राणि । परेति ॥ ५ श्री सू २६ । ११० ॥ ५—रज्जुसंदानं वेदमुपयमन्यामाधाय पश्चात् । का श्री सू २६ । ११० ।

तुदधात्याण्डाभ्याᳪं हि वृषा पिन्वते पश्चात्स्थूणामयूखमूरूऽएवास्मिन्नेतुदधाति पश्चाद्रौहिणकपाले जानुनीऽएवास्मिन्नेतुदधाति ते यदेककपाले भवतऽएककपालेऽइव हीमे जानुनी पश्चाद्धृष्टी पादावेवास्मिन्नेतुदधाति पादाभ्याᳪं हि धृष्टम्प्रहरत्युत्तरतः खरौ प्रचरणीयौ तद्धि तयोरायतनन्दक्षिणतो मार्जालीयन्तद्धि तस्यायतनम् ॥ २२ ॥

---

ऊरू एवास्मिन्नेतद्दधाति । पश्चाद्रौहिणकपाले । जानुनी एवास्मिन्नेतद्दधाति । ते यदेककपाले भवतः । एककपाले इव हीमे जानुनी । पश्चाद्धृष्टी । पादावेवास्मिन्नेतद्दधाति । पादाभ्या हि धृष्टं प्रहराति । उत्तरतः खरौ प्रचरणीयौ । तद्धि तयोरायतनम् । दक्षिणतो मार्जालीयम् । तद्धि तस्यायतनम् ॥ २२ ॥

---

अथानन्तरं रज्जुश्च सदानानि च रज्जुसदानं एतत्सर्वं घर्मोपयुक्तं गृहीत्वा 'उपयमन्या' शुचि' आसाद्य' प्रक्षिप्य 'पश्चात्' महावीरस्य पश्चाद्भागे 'प्राची' प्रागग्रा ता 'आसादयति' निदधाति । 'एतत्' एतेन आर्द्रेर्युक्तमुदरमेव अस्मिन्प्रवर्ग्ये धारितवान् भवति । अथ दोहनार्थयो पात्रयोरासादनं विधत्ते—तदभितः पिन्वने० वृषा पिन्वते इति । 'तदभित' तस्योदरस्य पार्श्वयोः 'पिन्वने' दोहनसाधने मृण्मयपात्रे 'निदधाति' स्थापयति । ताभ्यां पात्राभ्यां 'अस्मिन्' प्रवर्ग्ये पुंसि 'आण्डौ' मुष्कावेव धारितवान् भवति । कुतः? 'हि' यस्मात् 'वृषा' सेचनसमर्थो युवा 'आण्डाभ्यां' 'पिन्वते' रेत सिंचति । तस्मात्पिन्वनसाधनत्वसाम्यात्पिन्वने पात्रे आण्डस्थानीये इत्यर्थः । अथ गवादिबन्धनार्थानां स्थूणार्धमात्रासादनं विधाय तन्निर्वर्त्यावयवसंपादनमाह—पश्चात्स्थूणामयूखं० तद्दधातीति । पिन्वनयोः पश्चात्पश्चिमभागे गोबन्धनार्थां स्थूणा वत्सादिबन्धनार्था मयूखशब्दाभिधेया शङ्कवः तान् 'स्थूणामयूख' तन्निदधाति । तथा च 'ऊरू एव' 'अस्मिन्' प्रवर्ग्ये धारितवान् भवति । अथ रौहिणकपालयोरासादनं विधाय अवयवोक्तिमाह पश्चाद्रौहिणकपाले० दधातीति । स्थूणामयूखानां 'पश्चात्' पश्चिमभागे रौहिणपुरोडाशाधिश्रयणार्थे 'कपाले' 'निदधाति' । एतेनास्मिन्प्रवर्ग्ये 'जानुनी एव' स्थापितवान् भवति । रौहिणकपालयोर्जान्वोश्च साम्यं दर्शयन् उक्तमर्थं उपपादयति—ते यदेककपाले० जानुनी इति । 'ते' रौहिणकपाले यदस्मात् 'एककपाले' एकैककपालात्मके भवत । तस्मादेव खलु 'इमे जानुनी' 'एककपाले इव' दृश्येते । अथ धृष्ट्योरासादनं विधत्ते—पश्चाद्धृष्टी पादावे० प्रहरतीति । 'पश्चात्' रौहिणकपालयोः पश्चिमभागे अङ्गारविहरणार्थे 'धृष्टी' निदधाति । 'एतत्' एतेन 'अस्मिन्' प्रवर्ग्ये जान्वोरधस्तनौ 'पादावेव' स्थापितवान् भवति । धृष्ट्योः पादयोश्च कथं साम्यं इति तदुच्यते—'धृष्ट' प्रगल्भं 'पादाभ्या' खलु 'प्रहरति' । अतः धृष्ट्योः पादयोश्च कर्षणसाधनत्वसाम्यात् धृष्टी पादस्थाने

---

1-पश्चादिन्वन चाभितो दक्षम् । दक्ष दक्षाद्दक्षन् । का श्रौ. सू २६ । १३१ ।
2-स्थूणामयूखम् । का. श्रौ सू. २६ । १३२ ।
3-पश्चान् रौहिणकपाले । का. श्रौ. सू २६ । १३३ ।
4-धृष्टी च । मध्येऽन्यत् । का श्रौ सू २६ । १३४ । १३५ ।



११२

( मु ) अथास्मिन्पयऽआनयति । घर्मैतत्ते पुरीषमित्यन्नं वै पुरीषमन्नमेवास्मिन्नेतद्दधाति तेन वर्द्धस्व चा च प्यायस्वेति नात्र तिरोहितमिवास्ति वर्द्धिषीमहि च वयमा च प्यासिषीमहीत्याशिषमेवैतदाशास्ते ॥ २३ ॥

स वै न सर्वमिवानयेत् । (ने) नेद्यजमानात्पुराऽन्नमसदित्यर्द्धं वा भूयो वा परिशिनष्टि तस्मिन्नपराह्णे यजमानाय व्रतमभ्युत्सिच्य प्रयच्छति तद्यजमानऽएवैतदन्नाद्यन्दधाति तथो ह यजमानान्न पुरान्नम्भवति ॥२४॥

---

अथास्मिन्पय आनयति " घर्मैतत्ते पुरीषम् "-इति । अन्नं वै पुरीषम् । अन्नमेवास्मिन्नेतद्दधाति । " तेन वर्धस्व चा च प्यायस्व "-इति । नात्र तिरोहितमिवास्ति । " वर्द्धिषीमहि च वयमा च प्यासिषीमहि "-( वा. सं. ३८।२१ ) इति । आशिषमेवैतदाशास्ते॥२३॥

स वै न सर्वमिवानयेत् । नेद्यजमानात्पुराऽन्नमसदिति । अर्द्धं वा भूयो वा परिशिनष्टि ।

---

इत्यर्थः । अथ पात्रयस्थापि उद्वासन विधत्ते-उत्तरतः खरौ प्र० यतनमिति । ' उत्तरत ' महावीरस्योत्तरदेशे प्रवर्ग्यार्थौ ' प्रवर्ग्यप्रचरणोपयुक्तौ ' खरौ ' निदधाति । यौ पूर्वं गार्हपत्याहवनीययोरुत्तरतो निर्मितौ तावपि उद्धृत्य आनीय महावीरोत्तरभागे निदध्यादित्यर्थः । ' तत् ' खलु ' तयो ' खरयो ' आयतनं ' स्थानं प्रवर्ग्यप्रचरणसमये गार्हपत्याहवनीययो उत्तरत तयोर्निर्मितत्वात् । योऽयं उच्छिष्टखरोऽस्ति तं ' मार्जालीय ' तद्दक्षिणत मार्जालीयस्य दक्षिणभागे निदध्यात् । तत्खलु तस्योच्छिष्टखरस्यायतनम् । आहवनीयस्य दक्षिणभागे । तस्य पुराऽवस्थितत्वात् । इत्थं घर्मोपयुक्तानां पात्राणामुद्वासनं तेषां पुरस्तादवस्थानं च प्रतिपादितम् । २२ ॥

अथ प्रवर्ग्यार्थे महावीरे पयस आसेचनं विधत्ते-अथास्मिन् पय आनयति० तद्दधातीति । ' अथ ' एव सर्वपात्रोद्वासनानन्तरं अग्निप्रचरणीये प्रथम महावीरे " घर्मतत्ते " इति मन्त्रेण ' पय ' क्षीरं ' आनयति ' आसिञ्चति । अथास्य मन्त्रभागं पुरीषशब्दस्यार्थं ब्रुवन् स्तौति-अन्नं वै पुरीष० तद्दधातीति । ' अन्नं ' अदनीयं वस्तु हि शरीरस्य पूरकत्वात् पुरीषमित्युच्यते । अत एतेन मन्त्रभागेन अस्मिन्महावीरे अन्नमेव निदधाति । अथ द्वितीयमन्त्रभागस्य स्पष्टार्थमाह-तेन वर्द्धस्व० मिवास्तीति । गतमेतत् । अथ तृतीयं भागमनूद्य तत्प्रतिपाद्यमनेन विधत्ते इत्याह-वर्द्धिषीमहि० तदाशास्ते इति । ' वर्द्धिषीमहि ' एव वृद्धा भूयास्मेति एतादृशीमाशिषमत्र ' एतत् ' एतेन मन्त्रभागेन ' आशास्ते ' ॥ २३ ॥

अथानीयमानस्य पयस परिमाणमाह-स वै न सर्व० परिशिनष्टीति । ' स वै ' स खलु अध्वर्युः ।

( त्यु ) अथैनमद्भिः परिषिञ्चति शान्तिर्वाऽआपः शमयत्येवैनमेतत्सर्वतः परिषिञ्चति सर्वतऽएवैनमेतच्छमयति त्रिष्कृत्वः परिषिञ्चति त्रिवृद्धि यज्ञः ॥ २५ ॥

( त्रोऽथा ) अथाह वार्षाहरꣳ साम गायेति । ( त्ये ) एष वै वृषा

---

तस्मिन्नपराह्णे यजमानाय व्रतमभ्युत्सिच्य प्रयच्छन्ति । तद्यजमान एवैतदन्नाद्यं दधाति । तथा उ ह यजमानान्न परागन्नं भवति ॥ २४ ॥

अथैनमद्भिः परिषिञ्चति । शान्तिर्वा आपः । शमयन्त्येवैनमेतत् । सर्वतः परिषिञ्चति । सर्वत एवैनमेतच्छमयन्ति । त्रिष्कृत्वः परिषिञ्चति । त्रिवृद्धि यज्ञः ॥ २५ ॥

अथाह वार्षाहरं साम गायेति । एष वै वृषा हरिः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह—वार्षाहरं साम गायेति ॥ २६ ॥

हारिर्ह्येषऽएष तपत्येषऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाहाध्वर्यो वार्षाहरथं साम गायेति ॥ २६ ॥

( त्यु ) अथ चात्वाले मार्जयन्ते। सुमित्रिया नऽआपऽओषधयः सन्त्वित्यञ्जलिनाऽपऽउपाचति वज्रो वा आपो वज्रेणैवैतन्मित्रधेयङ्कुरुते दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मऽइति यामस्य दिशन्द्वेष्यः स्यात्तान्दिशम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ २७ ॥

(त्यु)अथ प्राङ्विवोदङ्ङुत्क्रामति। (त्यु)उद्वयन्तमसस्परीति पाप्मा वै तमः पाप्मानमेव तमोऽपहते स्वः पश्यन्तऽउत्तरमित्ययम्वै लोकोऽस्यऽउत्तरो-

---

अथ चात्वाले मार्जयंते-" सुमित्रिया न आप ओषधयः संतु "-इति अंजलिनाऽप उपाचति। वज्रो वा आपः। वज्रेणैवैतन्मित्रधेयं कुरुते। " दुर्मित्रियास्तस्मै सतु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः "-( वा स ३८। २३ ) इति। यामस्य दिशं द्वेष्यः स्यात्। तां दिशं परासिंचेत्। तेनैव तं पराभावयति ॥ २७ ॥

अथ प्राङिवोदङ्ङुत्क्रामति-" उद्वयं तमसस्परि "-इति। पाप्मा वै तमः। पाप्मानमेव

---

गायेतीति। वार्षाहराख्य 'साम' ह प्रस्तोत 'गाय' इति अध्वर्युर्ब्रूयात्। तत्र "अविक्रदद्वृषा हरि" इत्यस्यां गीयते तदनत् स्तौति-एष वै वृषा० गायतीति। 'एष वै' एष खलु सूर्ये मते वृषा हरिरित्युच्यते। वर्षणात्, रसहरणाच 'एष' एव सूर्य प्रवर्ग। गतमन्यत्। यस्मादेव " अविक्रदद्वृषा हरि " इति मन्त्र समवनार्थ। 'तस्मात्' "वार्षाहरं साम गाय" इति अध्वर्युर्ब्रूयात् ॥ २६ ॥

अथ चात्वाले प्रवर्ग्यकर्तृणां मार्जन विधत्ते-अथ चात्वाले मार्जयन्ते०सन्त्विति। अथानन्तर चात्वाल नामके अवटे अप उपस्पृशन्ति अद्भिर्मार्जयन्ते इत्यर्थ।" सुमित्रिया न " इति तत्र मन्त्र। (तदेतत्कैनेति-'यावत्' यावत् काल 'एतेन' प्रवर्ग्येण प्रचरति तावत्पर्यंत अस्मात् स्थानात् आपश्च ओषधयश्च अपक्रम्य निर्गम्येव तिष्ठन्ति। 'तद्' तत्तापामुपस्पर्शनेन अपगतानिमानापि 'मित्रधेय' मैत्री 'कुरुते' कृतवान् भवति।) अथ मार्जनशेषस्योदकस्य सेचन विधत्ते-दुर्मित्रिया०तं पराभावयतीति। 'अस्य' यजमानस्य 'द्वेष्य' शत्रु 'या दिशं' प्राप्त 'स्यात्'। तां दिशं परासिंचेत्' तस्यां दिशि मार्जनशिष्टमुदक " दुर्मित्रिया " इत्यनेन मन्त्रेण पराचीन निनयेत्। 'तेन' परासेचनेन तमेव शत्रु 'पराभावयति' पराभूत कृतवान् भवति ॥ २७ ॥

अथ मार्जनदेशान्निर्गमन विधत्ते-अथ प्राङिवोदङ्ङुत्क्रामतीति। 'प्राङिव' प्राङ्मुख इव 'उदङ्' उदङ्

---

१-चात्वाल मार्जयन्त सपत्नीका सुमित्रिया न इति। का श्री सू २६। १४२।

२-नदन्त मेनाद्य कस्य कृत्य व्याख्यातमत काण्वश्रुतिमनुसृत्य भाष्य कृतम्। काण्वपाठश्च-' यावद्वाऽ एतेन प्रचरन्त्यापश्च वा अस्मात्तावदोषधयश्चापक्रम्येव तिष्ठन्ति तदु ताभिर्मित्रधेयं कुरुते " इति।

ऽस्मिन्नेव लोके प्रतितिष्ठति देवन्देवत्रा सूर्य्यमगन्म ज्योतिरुत्तममिति स्वर्गो वै लोकः सूर्य्यो ज्योतिरुत्तमꣳ स्वर्गऽएव लोकेऽन्ततः प्रतितिष्ठत्यनपेक्षमेत्याहवनीये समिधमभ्यादधाति समिदसि तेजोऽसि तेजो मयि धेहीत्याशिषमेवैतदाशास्ते ॥ २८ ॥

( स्तुऽय ) अथ प्रसुते दधिघर्म्मेण प्रचरन्ति। यज्ञो वै सोमः शिरः प्रवर्ग्यो यज्ञऽएवैतच्छिरः प्रतिदधाति माध्यन्दिने सवनऽएतद्वाऽइन्द्रस्य

---

तमोऽपहते। " स्वः पश्यन्त उत्तरम् "-इति। अयं वै लोकोऽस्य उत्तरः। अस्मिन्नेव लोके प्रतितिष्ठति। "देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् "-( वा. सं. ३८।२४ ) इति। स्वर्गो वै लोकः सूर्यो ज्योतिरुत्तमम्। स्वर्ग एव लोकेऽन्ततः प्रतितिष्ठति। अनपेक्षमेत्य आहवनीये समिधमभ्यादधाति-" समिदसि तेजोऽसि तेजो मयि धेहि "-( वा. सं. ३८।२५ ) इति। आशिषमेवैतदाशास्ते ॥ २८ ॥

अथ प्रवर्ग्यशेषो दधिघर्मः।

अथ प्रसुते दधिघर्मेण प्रचरंति। यज्ञो वै सोमः। शिरः प्रवर्ग्यः। यज्ञ एवैतच्छिरः प्रतिदधाति।

---

मुखः उत्तरपूर्वदिगभिमुखः "उद्वयमिति" मन्त्रेण 'उत्क्रामन्ति' उत्प्लुत्य गच्छन्ति। सर्वे प्रवर्ग्यकर्तारोऽनेन मन्त्रेणोत्क्रामेयुरित्यर्थः। अथास्य मन्त्रभागस्य तात्पर्यम्-पाप्मा वै तमः पाप्मानमेव तमोऽपहते इति। मालिन्यहेतुत्वात् पाप्मैवात्र तमःशब्देनोच्यते। 'वयं तमसः उपरि उत्क्रान्ताः स्मः' इति तद्वाक्यस्यार्थः। अतः 'पाप्मानं' पापरूपमेव 'तम अपहते' विनाशयति। अथ द्वितीयपादमनूद्य व्याचष्टे-स्वः पश्यन्तऽउत्तर०प्रतितिष्ठतीति। 'अयं वै' अयं खलु भूलोकः 'अस्य' मासुरीभ्यः सकाशात् 'उत्तरः' उपरिदेशस्थः। तस्मादुत्तरशब्देनायमेव लोकः प्रतिपाद्यत इति यो 'अस्मिन्नेव लोके प्रतितिष्ठति' प्रतिष्ठितो भवति। अथोत्तरार्धमनूद्य व्याचष्टे-देवन्देवत्रा०प्रतितिष्ठतीति। अस्मिन् मन्त्रे प्राप्य येन निर्दिष्टः सूर्यात्मकमुत्तमं 'ज्योतिः' असावेव स्वर्गो लोकः। तथा च भाष्येऽस्मिन् स्वर्गरूपे स्वर्गलोक एव 'प्रतितिष्ठति' प्रतिष्ठितो भवति। अनेनैव मन्त्रेण चात्वालदेशादुत्क्रान्ताः समिधं गृहीत्वा विहरन्ते-अनपेक्षमेत्याहव० समिधमिति। 'अनपेक्षं' अपेक्षा पृष्ठभागस्यावेक्षणमकृत्वा एत्य हवनीयदेशं प्राप्य तस्मिन्नाहवनीये एकां 'समिधं' "समिदसि" इत्यनेन मन्त्रेणाभ्यादधाति। एतया समिधा अग्निरेव समिद्धो भवति। स च समिद्धोऽग्निः एनं यजमानं तेजसा दीप्त्या समिद्धं प्रकाशयति, यजमानस्य तेजस्वी भवतीत्यर्थः ॥ २८ ॥

इथ प्रवर्ग्योद्वासने उक्ते, अथ सौम्ये अहनि कर्तव्यं दधिघर्माख्यं यागं विधत्ते-अथ प्रसुते दधिघर्मेण

---

१-२-३-" सर्वे प्रवर्ग्यकर्तारोऽनेन मन्त्रेणोत्क्रामेयुरित्यर्थः" इति, वयं तमस उपरि उत्क्रान्ता अभूमेति, अनेन मन्त्रेण चात्वालदेशादुत्क्रान्तानाम् " इमामित्यस्य श्रुतिसूत्रयोरिव दृष्टेन "उत्क्रामन्ति अभ्यादधाति" इत्यनेन बहुवचनेन निर्देशात्। तथा च कात्यायनसूत्र-" उद्वयमित्युत्क्रामयुत्तरपूर्वार्द्धम्। अनवेक्षमाणा एत्य समिधमाहवनीयेऽभ्यादधाति समिदसीति। पत्नी च गार्हपत्ये तूष्णीम् " इति। का श्रौ. सू. २६।७।४९। एवं उद्वयमिति मन्त्रान्ते उत्क्रान्त इति बहुवचनेन निर्देशात्। तथापि मन्त्रलिङ्गात्तु दीक्षितस्यैव यजमानस्यैकस्यैव समिदाधानं [illegible] न सर्वेषाम्। इति ॥

निष्केवल्यᳪं सवनं यन्माध्यन्दिनᳪं सवनᳪं स्वऽएवैनमेतद्भागे प्रीणाति स्तुते माध्यन्दिने पवमाने प्राणो वै माध्यन्दिनः पवमानः प्राणमेवास्मिन्नेतद्दधात्यग्निहोत्रहवण्या मुखम्वाऽएतद्यज्ञानां यदग्निहोत्रᳪं शीर्षस्तन्मुखन्दधाति ॥ २९ ॥

---

माध्यंदिन सवने । एतद्वा इन्द्रस्य निष्केवल्य सवनम् । यन्माध्यंदिन सवनम् । स्व एवैनमेतद्भागे प्रीणाति । स्तुते माध्यंदिन पवमाने । प्राणो वै माध्यंदिनः पवमानः । प्राणमेवास्मिन्नेतद्दधाति । अग्निहोत्रहवण्या । मुखं वा एतद्यज्ञानाम् । यदग्निहोत्रम् । शीर्षस्तन्मुखं दधाति ॥ २९ ॥

---

सऽआनीयमानऽआह । होतर्वदस्व यत्ते वाद्यमिति वदते ह्यत्र होताऽथोपोत्तिष्ठन्नाह श्रातꣳ हविरिति श्रातꣳ हि भवत्यतिक्रम्याश्राव्याह दधिघर्म्मस्य यजेति वषट्कृते जुहोत्यनुवषट्कृतऽआहरति भक्षं तं यजमानाय प्रयच्छति ॥ ३० ॥

सऽउपहवमिष्ट्वा भक्षयति । मयि त्यदिन्द्रियम्बृहदित्येतद्वाऽइन्द्रिय-

---

स आनीयमान आह–" होतर्वदस्व यत्ते वाद्यम् "–इति । वदते ह्यत्र होता । अथोपोत्तिष्ठन्नाह–" श्रातं हविः "–इति । श्रातं हि भवति । अतिक्रम्याश्राव्याह । दधिघर्मस्य यजेति । वषट्कृते जुहोति । अनुवषट्कृते आहरति भक्षम् । तं यजमानाय प्रयच्छति ॥ ३० ॥

स उपहवमिष्ट्वा भक्षयति–" मयि त्यदिन्द्रियं बृहत् "–इति । एतद्वा इन्द्रियं बृहत् । य एष

---

इथ दधिघर्मस्याग्न्य काले साधन चोक्तम् । अथ तस्य याग भक्षण विधित्सुराह–स आनीयमान० यजमानाय प्रयच्छतीति । सोऽध्वर्यु आनीयमाने दधिघर्मे स्रुचा गृह्यमाने " होतर्वदस्व यत्ते वाद्यम् " इति ब्रूयात् । अस्यायमर्थः–हे होतः ! वदस्व इति । ' ते ' तव दधिघर्मग्रहणसमये ' यत् ' ' वाद्य ' वक्तव्य अस्तीति । प्रैषान्तरवत् ब्रूहीति चोदना पारम्पर्ये किं कारणं वदस्वेति चोदने ? इत्याशङ्क्याह–अत्रास्मिन् समये ' होता वदते हि ' केवल सूक्तमेव कथयति हि । न तु अनुवक्ति यजति वा । तथाहि–" होतर्वदस्व " इत्युक्त होता " उत्तिष्ठ नयस्पते " इत्यादिसूक्त ब्रूते । तस्याध्यायस्य–हे अध्वर्युप्रभृतय ' उत्तिष्ठत ' उत्थिता भवत । ततश्च अवपश्यत ' अभितप्त दधिघर्मम् अवाङ्मुखा अवेक्षध्वम् । यदि असौ श्रातः पक्व तदा जुहुत । यदि अश्रात अपक्व । तदा सुखेन तूष्णीमुपविशतेति । तथा चाभिवदनमात्रस्य होत्रा क्रियमाणत्वात् " होतर्वदस्व " इत्येव प्रैषं ब्रूयात् । अथानन्तरम् अध्वर्यु ' उपोत्तिष्ठन् ' आसनादूर्ध्वं तिष्ठन् " श्रातं हविः " इति होतारं प्रत्याह । हे होत ! श्रातं पक्व हविरस्ति हि तस्यार्थः । ' हि ' यस्मात्, दधिघर्मसाध्य हविः ' श्रात ' परिपक्व ' भवति ' । ' तस्मात् ' श्रातं हविरस्ति होत्रे निवेदयेदित्यर्थः । एवमुक्त्वा दक्षिणा ' अतिक्रम्य ' आश्राव्याश्रावणं कृत्वा प्रत्याश्राविते सति " दधिघर्मस्य यज " इति इम प्रैषमाह ब्रूयात् । ततो याज्यान्ते ' वषट्कृते ' सति अग्निहोत्रहवण्या तद्धविः ' जुहोति ' । एवं वषट्कारानुवषट्कारयोः किञ्चित्किञ्चिद्धुत्वा शिष्टं ' भक्षं ' भक्षणार्थमाहरति । यजमानसमीपं गमयति । आहृत्य च ' तं ' भक्षं ' यजमानाय प्रयच्छति ' ददाति ॥ ३० ॥

' स ' यजमान अध्वर्योरुपहवमिष्ट्वा " अध्वर्यो उपह्वयस्व " इत्येवमुपहवं याचनां कृत्वा " मयि त्यदि-

---

१–होतर्वदस्व यत्ते वाद्यमित्याह वषाते श्रातꣳहविरित्युत्तिष्ठन्नाह । दधिघर्मस्य यजेति । का० श्रौ० सू० १० । २० ।

२–शेषं भक्षमिश्रं दाक्षिणाय प्रयच्छति । प्रत्न चे केवलम् । का० श्रौ० सू० २६ । १३८ । १३९ ।

३–हुतशेषं घर्मे ऋत्विज उपयजमाना समुपहूय भक्षयन्ति यथेत्सम् । का० श्रौ० सू० १० । २३ । मयि त्यदिति भक्षणम् । विधि सर्वाणि महावीरीये । का० श्रौ० सू० २६ । १५२ । १५३ । प्राणभक्ष वा अदीक्षित । का० श्रौ० सू० १० । २३ । अदीक्षितानां यक्षभक्षः प्राणभक्षो वेति विकल्पः । दीक्षितानां तु मत्यक्षभक्ष एव न प्राणभक्ष इत्यर्थः ।

स्वहृद्यऽएष तपति मयि दक्षो मयि क्रतुरिति क्रतूदक्षावेवात्मन्धत्ते घर्मस्त्रिशुग्विराजतीति घर्मो ह्येष त्रिशुग्विराजति विराजा ज्योतिषा सहेति विराजा ह्येष ज्योतिषा सह ब्रह्मणा तेजसा सहेति ब्रह्मणा ह्येष तेजसा सह पयसो रेतऽआभृतमिति पयसो ह्येतद्रेतऽआभृतन्तस्य दोहमशीमह्युत्तरामुत्तराँ समामित्याशिषमेवैतदाशास्तेऽथ चात्वाले मार्जयन्तेऽसावेव बन्धुः ॥ ३१ ॥

---

तपति । "मयि दक्षो मयि क्रतुः"-इति । क्रतूदक्षावेवात्मन्धत्ते । "घर्मस्त्रिशुग्विराजति"-इति । घर्मो ह्येष त्रिशुग्विराजति । "विराजा ज्योतिषा सह"-इति । विराजा ह्येष ज्योतिषा सह । "ब्रह्मणा तेजसा सह"-( वा. सं. ३८ । २७ ) इति । ब्रह्मणा ह्येष तेजसा सह । "पयसो रेत आभृतम्"-इति । पयसो ह्येतद्रेत आभृतम् । "तस्य दोहमशीमह्युत्तरामुत्तरा समाम्"-( वा. सं. ३८ । २८ ) इति । आशिषमेवैतदाशास्ते । अथ चात्वाले मार्जयन्ते । असावेव बन्धुः ॥ ३१ ॥

---

न्द्रिय" इति मन्त्रेण मन्त्रयति' । अथैतन्मन्त्रवाक्यमनुवदति—एतद्वाऽइंद्रियं० [illegible] इति । 'य एष' सूर्यस्तपति एतत्खलु 'क्रतुं' धारयत् 'इन्द्रियं' वीर्यं सत्त्वम् । अत 'इन्द्रियं वीर्यं' 'मयि' भवतु इति प्रथमवाक्यस्यार्थः । "प्राणो वै यज्ञोऽपानः क्रतुः" इति (तै. स. २।५।२) तैत्तिरीयश्रुतेः 'क्रतूदक्षौ' प्राणापानौ । अतः "मयि दक्षो मयि क्रतुः" इति मन्त्रपाठेन तावात्मनि अस्मिन् यजमानः 'धत्ते' धारयति । 'एष' खलु घर्मः 'त्रिशुक्' त्रिविधशोचमानः [illegible] त्रिधा दीप्यमानो 'विराजति' । अतस्त्रिशुग्विराजतीति वाक्यं [illegible] । [illegible] विराट् खलु ज्योतिः तेजोरूपा । "अग्निर्देवानां ज्योतिर्विराट्छन्दसां ज्योतिः" ( तै. स. ७।१।१ ) इति तैत्तिरीयश्रुतेः । अत 'विराजा' विराड्रूपेण 'ज्योतिषा' [illegible] घर्मो विराजति । तस्मात् 'विराजा ज्योतिषा सह' इति वाक्यमपि समञ्जसार्थम् । यद्वा 'विराजा' विराजमानेन 'ज्योतिषा' सूर्यात्मना [illegible] । तथा 'ब्रह्मणा' ब्रह्मरूपया त्रय्या वा 'तेजसा सह' एष सूर्यात्मको घर्मो विराजति । सूर्यस्य च त्रयीरूपत्वं तैत्तिरीयकः समाम्नायते—"ऋग्भिः पूर्वाह्णे दिवि देव ईयते, यजुर्वेदे तिष्ठति मध्ये अह्नः, सामवेदेनास्तमये महीयते" ( तै. ब्रा. ३ [illegible] अनु. [illegible] ) इत्यादि । तथा 'पयसः' क्षीरस्वरूपात् खलु 'एतत्' [illegible] हविः 'आभृतं' सम्पादितम् । अत "पयसो रेत आभृतम्" इति एतमर्थं प्रतिपादयति । 'तस्य' [illegible] 'दोहं' दोहनात् [illegible] 'अशीमहि' प्राप्नवाम । 'उत्तरामुत्तरां समाम्' एतस्मिन् संवत्सरे [illegible] आगामिन्यपि सर्वस्मिन् संवत्सरे तत्प्राप्नुयामेति

---

१—"[illegible] मण्डलमवद्‌र्चो [illegible] युजुर्षि [illegible]" । ( श. प. । १० । ५ । १ । ५ । ) तथा "य एतन्मण्डलं तपति [illegible] वेदैकोऽथ [illegible] [illegible] स यजुषां लोक [illegible] ऋग्वेद [illegible] विद्या तपति [illegible] विद्या तपति" । ( श. प. । १० । २ । ६ । १ । १ )

( र ) अथातो दक्षिणानाम् । ( नाथ्ँ ) सुवर्णथ्ँ हिरण्यथ्ँ शतमानम्ब्रह्मणे ददात्यासीनो वै ब्रह्मा यशः शयानथ्ँ हिरण्यन्तस्मात्सुवर्णथ्ँ हिरण्यथ्ँ शतमानम्ब्रह्मणे ददाति ॥ ३२ ॥

( स्यु ) अथ यैषा घर्म्मदुघा । तामध्वर्य्यवे ददाति तप्तऽइव वै घर्म्मस्तप्तमिवाध्वर्य्युर्निष्क्रामति तस्मात्तामध्वर्य्यवे ददाति ॥ ३३ ॥

---

अथ प्रवर्ग्याङ्गभूतं दक्षिणाद्रव्यदानम् ।

अथातो दक्षिणानाम् । सुवर्णं हिरण्यं शतमानं ब्रह्मणे ददाति । आसीनो वै ब्रह्मा । यशः शयानं हिरण्यम् । तस्मात्सुवर्णं हिरण्यं शतमानं ब्रह्मणे ददाति ॥ ३२ ॥

अथ यैषा घर्मदुघा । तामध्वर्यवे ददाति । तप्त इव वै घर्मः । तप्तमिवाध्वर्युर्निष्क्रामति । तस्मात्तामध्वर्यवे ददाति ॥ ३३ ॥

---

( त्य ) अथ यैषा यजमानस्य व्रतदुघा । ताᳬं होत्रे ददाति यज्ञो वै होता यज्ञो यजमानस्तस्मात्ताᳬं होत्रे ददाति ॥ ३४ ॥

( त्य ) अथ यैषा पत्न्यै व्रतदुघा । तामुद्गातृभ्यो ददाति पत्नीकर्म्मेव वाऽएतेऽत्र कुर्व्वन्ति यदुद्गातारस्तस्मात्तामुद्गातृभ्यो ददाति ॥ ३५ ॥

( त्य ) अथैतद्वै । ( द्वाऽआ ) आयुरेतज्ज्योतिः प्रविशति यऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टिः ॥ ३६ ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ १४।२।२ ॥ ( ३-१ ) ॥

---

अथ यैषा यजमानस्य व्रतदुघा । ता होत्रे ददाति । यज्ञो वै होता । यज्ञो यजमानः । तस्मात्तां होत्रे ददाति ॥ ३४ ॥

अथ यैषा पत्न्यै व्रतदुघा । तामुद्गातृभ्यो ददाति । पत्नीकर्मैव वा एतेऽत्र कुर्वंति—यदुद्गातारः । तस्मात्तामुद्गातृभ्यो ददाति ॥ ३५ ॥

अथैतद्वा आयुः, एतज्ज्योतिः प्रविशति । य एतमनु वा ब्रूते । भक्षयति वा । तस्य व्रतचर्या—या सृष्टी ॥ ३६ ॥

---

अथ होत्रे देया दक्षिणामाह—अथ यैषा यजमान० होत्रे ददातीति । 'अथ' अध्वर्यवे दानानन्तर 'या एषा यजमानस्य व्रतदुघा' व्रतार्थस्य पयसो दोग्ध्री धेनु 'ता होत्रे' दद्यात् । अथैतयोः सामर्थ्यमभिधाय, उक्तमर्थं निगमयति—यज्ञो वै होता० होत्रे ददातीति । वषट्कारेण हि सर्वाणि हवींषि हूयन्ते । अतस्तस्य प्राधान्येन तत्कर्तुरपि प्राधान्यात् 'होता यज्ञो वै' यज्ञात्मक एव । यजमानोऽपि फलस्य स्वामित्वात् यज्ञात्मकः । अतो यजमानार्थो गौरपि यज्ञात्मिका । तस्या उभयोरैक्यात्मकत्वसाम्यात् । गतमन्यत् ॥ ३४ ॥

अथोद्गातृणां दक्षिणादानं विधाय तद्गुणवाद निगमयति—अथ यैषा पत्न्यै व्रतदुघा० ददातीति । 'अथ' होत्रे दानानन्तर 'पत्न्यै' पत्न्यर्थं 'व्रतदुघा' व्रतार्थस्य पयसः दोग्ध्री 'या एषा' गौः 'तामुद्गातृभ्य' प्रस्तोतृप्रमुखेभ्यः सामगेभ्यो दद्यात् । 'यत्' य 'उद्गातारः' अत्राग्निमन्थनकर्मणि 'पत्नीकर्मैव' खलु स्वरीय कर्माचरन्ति । यद्वा सुत्येष्ट्यादिकं पत्नीसंबद्धं कर्म 'एते कुर्वन्ति' अत पत्नीसंगतगौः तेषां योग्या । 'तस्मात्' प्रतिग्राह्यप्रतिग्रहीत्रोः पत्नीसंबन्धसाम्यात् 'ता' गां 'उद्गातृभ्य' दद्यात् ॥ ३५ ॥

ब्राह्मणान्तरवत् एतद्ब्राह्मणाध्ययनतदर्थानुष्ठानयोरन्येन पूर्वोक्तं व्रतचर्याफलप्राप्तिं दर्शयति—अथैतद्वाऽ आ० व्रतचर्या या सृष्टाविति । सिद्धमेतत् ॥ ३६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्दशे काण्डे तदन्तर्भूते प्रथमे प्रवर्ग्यकाण्डे तृतीयेऽध्याये प्रथमं ब्राह्मणम् ॥ १४ ( १ ) । ३ । १ ॥

---

१—यजमानव्रतदुघात् होत्रे । का. श्रौ सू. २६ । १४३ । गार्हमिति शेष ।
२—पत्न्यदुघा उद्गात्रे । का. श्रौ सू २६ । १४३ । " " मा । श्रौ सू २६ । १४३ ।

पूर्णाहुतिञ्जुहोति । सर्व्वं वै पूर्णꣳ सर्व्वेणैवैतद्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ २ ॥

स्वाहा प्राणेभ्यः साधिपतिकेभ्य इति । मनो वै प्राणानामधिपतिर्म्मनसि हि सर्व्वे प्राणाः प्रतिष्ठितास्तन्मनसैवैतद्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ३ ॥

पृथिव्यै स्वाहेति । पृथिवी वै सर्व्वेषान्देवानामायतनन्तत्सर्व्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ४ ॥

---

पूर्णाहुतिं जुहोति । सर्वं वै पूर्णम् । सर्वेणैवैतद्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ २ ॥

" स्वाहा प्राणेभ्यः साधिपतिकेभ्यः "–इति । मनो वै प्राणानामधिपतिः । मनसि हि सर्वे प्राणाः प्रतिष्ठिताः । तन्मनसैवैतद् भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ ३ ॥

" पृथिव्यै स्वाहा "–इति । पृथिवी वै सर्वेषां देवानामायतनम् । तद् सर्वाभिरेवैतद्देवताभिर्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ ४ ॥

---

भेदनप्रायश्चित्तार्थं " स्वाहा प्राणेभ्य " इत्यादिभिः द्वादशसंख्याका आहुतीर्जुहोति । तासामाद्यन्तयोश्च " मनसः काममाकूतिम् " इति मन्त्राभ्यां, आज्यपूर्णया स्रुचा पूर्णाहुतिं जुहोतीति ॥ १ ॥

तत्राद्यां पूर्णाहुतिं विधाय स्तौति–**पूर्णाहुतिं जुहोति० यज्ञस्येति** । अस्याः पूर्णाहुतेः अत्र मन्त्रं दर्शयिष्यते । तेन मन्त्रेण आज्यपूर्णया स्रुचा ' पूर्णाहुतिं ' जुहोति । ' पूर्णं ' परिपूर्णं यच्च तत्सर्वं वै सर्वजगदात्मकम् । अतः पूर्णत्वगुणविशिष्टया आहुत्या प्रायश्चित्तं कुर्वन्, यज्ञस्य यत् किंचित् अङ्गजातं ' विवृढं ' विकलं भग्नं जातम् । ' एतत् सर्वेणैव ' वस्तुनानेन ' भिषज्यति ' चिकित्सति । " भिषज् चिकित्सायाम् "–( धा० पा० कण्ड्वा० २४ ) इति धातुः ॥ २ ॥

अस्याः पूर्णाहुत्या अनन्तरं " त्रयोदशैता आहुतीर्जुहोति "–इति कात्यायनः ( अ २ । ४ । १५ ) इति वाक्येन त्रयोदशाहुतयो होतव्या इति विज्ञायते । तासामाद्या पूर्णाहुतिरनुदर्शिता । प्रथमं त्वत्र मन्त्रगणं महावीरभेदने तस्यैकत्वसमाधानक्षमं सामर्थ्यमस्तीति दर्शयितुं तान् क्रमेणानूद्य व्याचष्टे–तत्र प्रथमं मन्त्रं पूर्णाहुतौ करणभूतमनूद्य तेन भैषज्यप्रकारमाह–**स्वाहा प्राणेभ्यः साधिपतिके० यज्ञस्येति** । अधिपतिसहितेभ्य ' प्राणेभ्य ' इदं हविः त्यजामि इति मन्त्रार्थः । तत्र कोऽसौ प्राणानामधिपतिरिति चेत् उच्यते– ' मनो वै ' सुखाद्युपलब्धिसाधनम् अन्तर इन्द्रियं मनः ' प्राणानां ' चक्षुरादीनामधिपतिः ईशिता । तेषामन्वयव्यतिरेकाभ्यां मनःसाहित्येनैव विषयप्रकाशनसामर्थ्यदर्शनात् । तस्मात् मनसि अधिष्ठितत्वेन मनसो निर्दिष्टत्वात् ' मनसैव ' साधनेन । शिष्टं पूर्वेण समानम् ॥ ३ ॥

अथ द्वितीयमन्त्रमनूद्य व्याचष्टे–**पृथिव्यै स्वाहेति० यज्ञस्येति** । " पृथिव्यै स्वाहा " इति द्वितीयो मन्त्रः । तत्र निर्दिष्टा ' पृथिवी ' । सा तु ' सर्वेषां देवानामायतनं ' निवासस्थानम् इति निर्धारणाय देवानां सर्वदा अवस्थानात् पृथिव्याः सर्वदेवायतनत्वम् । तत्तस्मात् पृथिव्यै स्वाहा इति मन्त्रेण सर्वाभिरेव देवताभिर्भिषज्यतीति गतम् ॥ ४ ॥

( स्या ) अग्नये स्वाहेति । ( त्य ) अग्निर्वै सर्व्वेषान्देवानामात्मा तत्स-र्व्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ५ ॥

( स्या ) अन्तरिक्षाय स्वाहेति । ( त्य ) अन्तरिक्षम्वै सर्व्वेषान्देवाना-मायतनन्तत्सर्व्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य॥६॥

व्वायवे स्वाहेति । व्वायुर्व्वै सर्व्वेषान्देवानामात्मा तत्सर्व्वाभिरेवैतद्देव-ताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ७ ॥

दिवे स्वाहेति । द्यौर्व्वै सर्व्वेषान्देवानामायतनन्तत्सर्व्वाभिरेवैतद्देवता-भिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ८ ॥

सूर्य्याय स्वाहेति । सूर्य्यो वै सर्व्वेषान्देवानामात्मा तत्सर्व्वाभिरेवैत-द्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ९ ॥

---

" अग्नये स्वाहा "–इति । अग्निर्वै सर्वेषां देवानामात्मा । तत् सर्वाभिरेवैतद्देवताभिर्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ ५ ॥

" अंतरिक्षाय स्वाहा "–इति । अंतरिक्षं वै सर्वेषां देवानामायतनम् । तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ ६ ॥

" वायवे स्वाहा "–इति । वायुर्वै सर्वेषां देवानामात्मा । तत् सर्वाभिरेवैतद्देवताभिर्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ ७ ॥

" दिवे स्वाहा "–इति । द्यौर्वै सर्वेषां देवानामायतनम् । तत् सर्वाभिरेवैतत् देवताभिर्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ ८ ॥

" सूर्याय स्वाहा "–( वा. सं. ३९।१ ) इति । सूर्यो वै सर्वेषां देवानामात्मा । तत् सर्वाभिरेवैतत् देवताभिर्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ ९ ॥

---

अथ तृतीय मन्त्रमनूद्य व्याचष्टे–अग्नये स्वाहेति० यज्ञस्येति । 'अग्नि' खलु 'सर्वेषां देवानामात्मा' स्वरूपभूतः । तथा च तैत्तिरीयके–" ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निः सर्वा देवता इति । ( तै. स. ६ । २ । २ ) तत्तथा च " अग्नये स्वाहा " इति मन्त्रेण सर्वाभिरेव देवताभिरित्यादि गतम् ॥ ५ ॥

अथ चतुर्थं मन्त्रमनूद्य व्याचष्टे–अंतरिक्षाय स्वा० यज्ञस्येति ॥ ६ ॥

अथ पञ्चम मन्त्रमनूद्य व्याचष्टे–वायवे स्वा० यज्ञस्येति । 'वायुः' खलु 'सर्वेषां' देवानामात्मा स्वरूपम् । तस्य सर्वदा तदावासहेतुत्वात् ॥ ७ ॥

अथ षष्ठ मन्त्रमनूद्य व्याचष्टे–दिवे स्वाहे० यज्ञस्येति । तत्तथा च " दिवे स्वाहा " इति मन्त्रेणेत्यादि पूर्ववत् ॥ ८ ॥

अथ सप्तम मन्त्रमनूद्य व्याचष्टे–सूर्याय स्वाहे० यज्ञस्येति । 'सूर्यो वै' प्रेरक आदित्यः खलु 'सर्वेषां

दिग्भ्यः स्वाहेति । दिशो वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतु देवताभिर्भिभपज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १० ॥

चन्द्राय स्वाहेति । चन्द्रो वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिभपज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ११ ॥

नक्षत्रेभ्यः स्वाहेति । नक्षत्राणि वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिभपज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १२ ॥

( स्वा ) अद्भ्यः स्वाहेति । ( त्वा ) आपो वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिभपज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १३ ॥

---

" दिग्भ्यः स्वाहा "–इति । दिशो वै सर्वेषां देवानामायतनम् । तत् सर्वाभिरेवैतत् देवताभिभिषज्यति । यत् किंच विवृढं यज्ञस्य ॥ १० ॥

" चन्द्राय स्वाहा "–इति । चन्द्रो वै सर्वेषां देवानामात्मा । तत् सर्वाभिरेवैतत् देवताभिभिषज्यति । यत्किञ्च विवृढं यज्ञस्य ॥ ११ ॥

" नक्षत्रेभ्यः स्वाहा "–इति । नक्षत्राणि वै सर्वेषां देवानामायतनम् । तत् सर्वाभिरेवैतत् देवताभिभिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ १२ ॥

" अद्भ्यः स्वाहा "–इति । आपो वै सर्वेषां देवानामायतनम् । तत् सर्वाभिरेवैतत् देवताभिभिषज्यति । यत् किंच विवृढ यज्ञस्य ॥ १३ ॥

---

देवानामात्मा' स्वरूपभूत । तथा च मन्त्रान्तर " सूर्यऽआत्मा जगतस्तस्थुषश्च " ( मा स. । १३।४६ ) इति । गतमन्यत् ॥ ९ ॥

इय पृथिव्यादयस्त्रयो लोका तदधिष्ठातारा अग्निर्वायु सूर्यश्चेत्येते त्रयो देवा गतैर्मन्त्रैः प्रतिपादिता । अथ तेषु लोकेषु व्याप्य वर्तमानाना दिगादीना चनि सपादनमुत्तरैर्मन्त्रै क्रियते । तत्र "दिग्भ्य स्वाहा" इति मन्त्रस्य तात्पर्य व्याचष्टे–दिग्भ्यः स्वाहेति० यज्ञस्येति । प्राच्याद्या 'दिश 'खलु ' सर्वेषा देवानामायतन ' स्थानम् । प्राक्पश्चिमादिव्यवहारार्थमवस्थितत्वात् । अथवा इन्द्रादीना प्रागादिदिगीशत्वात् दिशा देवायतनत्वम् । गतमन्यत् ॥ १० ॥

चन्द्राय स्वाहेति यज्ञस्येति । 'चन्द्र ' सोमराज खलु 'सर्वेषा देवाना' 'आत्मा' स्वरूपभूत अमृतमयत्वेन तेषामोप्यत्वात् । तथा च मन्त्रान्तर " यमादित्याऽअंशुमाप्याययन्ति यमक्षितमक्षितय पिबन्ति " इति ॥ ११ ॥

अथान्य मन्त्रमनूद्य व्याचष्टे–नक्षत्रेभ्यः स्वाहेति० यज्ञस्येति । ' नक्षत्राणि ' तारका खलु ' सर्वेषा देवानामात्मा ' स्वरूपभूता तथा तद्गृहात्मकत्वात् । तथा च श्रूयते " देवगृहा वै नक्षत्राणि " इति । अन्य तु सुकृतवशेन देवत्व प्राप्ताना जनाना ज्योतींषि नक्षत्राणि इति वर्णयन्ति । तत्र श्रुतिमप्युदाहरन्ति–" सुकृता वा एतानि ज्योतींषि यन्नक्षत्राणि " ( तै स. ५ । ४ । १ । ३ ) इति वर्णयन्ति । तदानीं तज्ज्योतीरूपत्वात् नक्षत्राणा तदात्मत्वम् । गतमन्यत् ॥ १२ ॥

अथ समनन्तर मन्त्रमनूद्य व्याचष्टे–अद्भ्यः स्वाहेत्यापो० यज्ञस्येति । ' आप ' उदकं खलु ' सर्वेषा ' देवानामायतन ' निवासस्थानं तेषाममृतमयशरीरत्वात् । अमृतस्य चाब्विकारत्वात् । गतमन्यत् ॥ १३ ॥

व॒रु॑णाय॒ स्वाहेति । व॒रु॑णो॒ वै सर्वे॑षान्दे॒वाना॑मा॒त्मा तत्सर्वा॑भिरे॒वै-त॒द्दे॒वता॑भिर्भिषज्यति॒ यत्कि॑ञ्च॒ विवृ॑ढं य॒ज्ञस्य॑ ॥ १४ ॥

ना॒भ्यै॑ स्वाहा॑ पू॒ताय॒ स्वाहेति । ( त्यु ) अनि॑रुक्तमनि॑रुक्तो॒ वै प्र॒जाप॑तिः प्र॒जाप॑तिर्य॒ज्ञस्तत्प्र॒जाप॑तिमे॒वैतद्य॒ज्ञम्भि॑षज्यति ॥ १५ ॥

त्र॒यो॒द॒शै॒ताऽ आहु॑तयो भवन्ति । त्र॒यो॒द॒श॒ वै मा॒साः स॑म्वत्स॒रस्य॑ सम्व-त्स॒रः प्र॒जाप॑तिः प्र॒जाप॑तिर्य॒ज्ञस्तत्प्र॒जाप॑तिमे॒वैतद्य॒ज्ञम्भि॑षज्यति ॥१६॥

---

" वरुणाय स्वाहा "–इति । वरुणो वै सर्वेषां देवानामात्मा । तत् सर्वाभिरेवैतत् देवताभि-र्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ १४ ॥

" नाभ्यै स्वाहा पूताय स्वाहा "–( वा. सं ३९ । २ ) इत्यनिरुक्तम् । अनिरुक्तो वै प्रजापतिः । प्रजापतिर्यज्ञः । तत् प्रजापतिमेवैतद्यज्ञं भिषज्यति ॥ १५ ॥

त्रयोदशैता आहुतयो भवंति । त्रयोदश वै मासाः संवत्सरस्य । संवत्सरः प्रजापतिः । प्रजा-पतिर्यज्ञः । तत् प्रजापतिमेवैतत् यज्ञं भिषज्यति ॥ १६ ॥

---

अथान्य मन्त्रमनूद्य व्याचष्टे–वरुणाय स्वाहेति० यज्ञस्येति । वरुणः ' तु देवः दुर्वनिग्राहकत्वात् ' सर्वेषां देवानामात्मा ' स्वरूपभूतः । गतमन्यत् । यद्वा " पृथिव्यै स्वाहा " इत्यादयो मन्त्रा एव व्याख्येयाः । पृथिव्यन्तरिक्षद्युदिगाद्या " पृथिव्यै स्वाहा " इत्यादिमन्त्रव्याख्याने सर्वदेवायतनत्व प्रतिज्ञातं तदुपपादनं " अग्नये स्वाहा " इत्यादिमन्त्रव्याख्यानेन क्रियते अग्निवायुसूर्यचन्द्रनक्षत्रवरुणानां पृथिव्यधिष्ठातृत्वात् उक्तप्रकारेण इतरेषां सर्वेषां देवानां तत्तादात्म्यात् । अग्न्याद्यायतनानि पृथिव्यादीनि सर्वेषां देवानामायतनानि भवन्तीति । एवं च तैः सर्वैर्मन्त्रैः सर्वदेवतासंबद्धं होमं कुर्वन् ' सर्वाभिरेव देवताभिः ' विकलस्यांगस्य भैषज्यं कृतवान् भवतीत्यर्थः ॥ १४ ॥

अथान्यमन्त्रद्वयमनूद्य व्याचष्टे–नाभ्यै स्वाहा पूताय स्वाहेति० भिषज्यतीति । " नाभ्यै स्वाहा " " पूताय स्वाहा " इति मन्त्रयोः पूर्वमन्त्रेष्विव कश्चित्प्रसिद्धतरः अर्थो न प्रतीयते । अतः एतन्मन्त्रद्वयं अनिरुक्तं अविस्पष्टार्थम् । प्रजापतिश्च ' अनिरुक्तो वै ' सर्वजगदात्मकत्वात्, एकरूपत्वेन निर्वक्तुमशक्यः । अतः अनिरुक्तेन अनेन मन्त्रद्वयेन ' अनिरुक्तः ' प्रजापतिरुच्यते । स एव प्रजापतिर्यज्ञः ओश्रावयादिसप्तदशाक्षररूपेण यज्ञे अवस्थानात् । तत्तथा च ' एतत् ' एतेन मन्त्रद्वयेन प्राजापत्यात्मकमेव ' यज्ञं भिषज्यति ' चिकित्सति ॥ १५ ॥

इत्थ " पृथिव्यै स्वाहा " इति त्रयोदशमन्त्राणां भैषज्यहेतुत्वव्याख्यानेन प्रायश्चित्तविनियोगमात्रमुक्तम् । अथ तन्मन्त्रसाध्यहोमं विधाय स्तौति–त्रयोदशैता आहुतयो भवंति० भिषज्यतीति । ' एताः ' " पृथिव्यै स्वाहा " इत्यादिमन्त्रसाध्यास्त्रयोदशाज्याहुतीर्जुहोति । महावीरभेदनप्रायश्चित्तार्थं जुह्वादिरर्थः । ' संवत्सरस्य

---

१–अयं माध्यंदिनीयः पाठः ।

१–अयं तु काण्वीयः पाठः । " त्रयोदशैताऽ आहुतीर्जुहोति " इति ।

र्वाचे स्वाहेति । मुखमेवास्मिन्नेतद्दधाति प्राणाय स्वाहा प्राणाय स्वाहेति नासिकेऽएवास्मिन्नेतद्दधाति चक्षुषे स्वाहा चक्षुषे स्वाहेत्यक्षिणीऽएवास्मिन्नेतद्दधाति श्रोत्राय स्वाहा श्रोत्राय स्वाहेति कर्णावेवास्मिन्नेतद्दधाति ॥ १७ ॥

सप्तैता आहुतयो भवन्ति । सप्त वा ऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति पूर्णाहुतिमुत्तमाञ्जुहोति सर्वं वै पूर्णᳬ सर्वेणैवैतद्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १८ ॥

---

" वाचे स्वाहा "–इति । मुखमेवास्मिन्नेतद्दधाति । "प्राणाय स्वाहा प्राणाय स्वाहा"–इति । नासिके एवास्मिन्नेतद्दधाति । " चक्षुषे स्वाहा चक्षुषे स्वाहा "–इति । अक्षिणी एवास्मिन्नेतद्दधाति । " श्रोत्राय स्वाहा श्रोत्राय स्वाहा "–( वा. सं. ३९। २ ) इति । कर्णावेवास्मिन्नेतद् दधाति ॥ १७ ॥

सप्तैता आहुतयो भवंति । सप्त वा इमे शीर्षन्प्राणाः । तानेवास्मिन्नेतद्दधाति । पूर्णाहुतिमुत्तमां जुहोति । सर्वं वै पूर्णम् । सर्वेणैवैतद्भिषज्यति । यत् किंच विवृढं यज्ञस्य ॥ १८ ॥

---

त्रयोदश वै मासा ' इत्यस्य द्वादश, त्रयोदशोऽधिकमास । अत आहुतीनां त्रयोदशसंख्यासाम्येन त्रयोदशमासात्मकः संवत्सर एव तर्पितो भवति । स एव ' संवत्सर प्रजापति ' [illegible] सर्वमप्येवं [illegible] । एतत्रयोदशमितत्वाय [illegible] । स एव ' प्रजापतिर्यज्ञ ' इत्युक्तम् । तस्मात् [illegible] ' यज्ञ ' ' एतम् ' एतया त्रयोदशसंख्यया उक्तेन प्रकारेण ' भिषज्यति ' ॥ १६ ॥

अथाग्नौ [illegible] तन्मन्त्रान् क्रमेण व्याचष्टे–तत्र प्रथम मन्त्रमनूद्य, तदस्य प्रयोजनं दर्शयति–वाचे स्वाहेति मुखमेवास्मिन्नेतद्दधातीति । मंत्रे [illegible] मुखे अवस्थितस्य वागिन्द्रियस्याभिधानात् अस्मिन्महावीरे तदिन्द्रियविशिष्टं मुखमात्मीयमेव एतेन मंत्रेण ' दधाति ' स्थापयति । अथ द्वितीयतृतीयमंत्रौ अनूद्य व्याचष्टे–प्राणाय स्वाहा प्राणाय स्वाहेति नासिके एवास्मिन्नेतद्दधाति इति । प्राण प्राणस्यायाम सह वर्तमान प्राणेन्द्रिय तत् नासिकयोर्वर्तते । अविभक्तद्वयवर्ति [illegible] प्राणेन्द्रियविशिष्ट ' नासिके ' एवास्मिन् महावीरे स्थापितवान् भवति । अथ चतुर्थपञ्चमौ मंत्रौ अनूद्य व्याचष्टे–चक्षुषे स्वाहा चक्षुषे स्वाहेत्यक्षिणी एवास्मिन्नेतद्दधाति इति । अनेन मंत्रद्वयेन क्रमेण गोलकद्वयवर्तिचक्षुरिन्द्रियप्रतिपादकेन अस्मिन्महावीरे ' अक्षिणी ' चक्षुरिन्द्रियविशिष्टे अक्षिगोलके एव स्थापयति । अथ षष्ठसप्तमौ मंत्रौ अनूद्य व्याचष्टे–श्रोत्राय स्वाहा श्रोत्राय स्वाहेति कर्णावेवास्मिन्नेतद्दधाति इति । अनेन मंत्रद्वयेन कर्णच्छिद्रद्वयविशिष्टश्रोत्रेन्द्रियप्रतिपादकेन श्रोत्रेन्द्रियविशिष्टौ ' कर्णौ एव ' अस्मिन्महावीरे स्थापयति ॥ १७ ॥

अथ [illegible] सौति–सप्तैता आहुत० दधाति इति । ' एता ' ' वाचे

---

१–[illegible] चतुर्थकण्डिकायाम् । ( [illegible] ) " [illegible] " इति । २ । [illegible]

मनसः काममाकूतिमिति । मनसा वाऽइदꣳ सर्वमाप्तन्तन्मनसैवै-तद्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १९ ॥

वाचः सत्यमशीयेति । वाचा वाऽ इदꣳ सर्वमाप्तन्तद्वाचैवैतद्भिष-ज्यति यत्किञ्च विवृढं यज्ञस्य पशूनाꣳ रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहेत्याशिषमेवैतदाशास्ते ॥ २० ॥

( स्तेऽथ ) अथ तञ्चोपशयाञ्च पिष्ट्वा । मार्त्स्नया मृदा सꣳसृज्या-

"मनसः काममाकूतिम्"–इति । मनसा वा इदं सर्वमाप्तम् । तन्मनसैवैतद्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ १९ ॥

"वाचः सत्यमशीय"–इति । वाचा वा इदं सर्वमाप्तम् । तद्वाचैवैतत् भिषज्यति । यत्किंच विवृढं यज्ञस्य । "पशूनां रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा"–( वा. सं. ३९ । ४ ) इति । आशिषमेवैतदाशास्ते ॥ २० ॥

अथ तं चोपशयां च पिष्ट्वा, मार्त्स्नया मृदा संसृज्य, आवृता करोति । आवृता पचति । उत्सादनार्थम् । अथ य उपशयपोर्हेडः स्यात् । तेन प्रचरेत् ॥ २१ ॥

स्वाहा" इत्यादिमन्त्रसाध्याः सप्तसंख्याः आहुतीर्जुहोति । 'सप्त' खलु 'इमे, शीर्षन्' शीर्षण्'प्राणाः' इन्द्रियाणि । मुख, नासिके, चक्षुषी, श्रोत्रे चेति गोलकभेदात् तेषां सप्तत्वम् । अत. एतैर्होमैः 'तानेव' प्राणान् अस्मिन्महावीरे स्थापयति । पूर्णाहुतिमुत्तमां जुहोतीति । आज्यपूर्णया स्रुचा "मनस. काम-माकूतिम्" इति पूर्णाहुतिं जुहुयादित्यर्थ. । तदेतत् स्तौति–सर्वं वै पूर्ण० विवृढं यज्ञस्येति । एतत् प्रथमपूर्णाहुतिवाक्यशेषवत् व्याख्येयम् ॥ १८ ॥

अथ पूर्णाहुतिमन्त्रस्यास्य प्रथम पादमनूद्य व्याचष्टे–मनसः कामम० विवृढं यज्ञस्येति । अस्मिन्पादे 'मनसः' इति मन. प्रतिपाद्यते । तेन च 'मनसा' 'इद सर्वं' जगद् व्याप्तम् । न हि अविषय मनस. किंचिदस्ति । तत्तथा च सर्वव्यापकेन 'मनसैव' एतद्भिषज्यति'। 'यत्किंच' यत्किमपि अग-जात यज्ञसंबधि विकलमासीदित्यर्थः ॥ १९ ॥

अथ द्वितीय पादमनूद्य व्याचष्टे–वाचः सत्यमशीयेति० विवृढं यज्ञस्येति । "वचः सत्यमशीय" इत्यस्मिन्पादे वाक् प्रतिपाद्यते । तया च 'वाचा' वागिन्द्रियेण, अभिवदनव्यवहारद्वारा 'इद सर्वं' जगत् 'आप्त' व्याप्तम् । न हि शब्दस्याविषय किंचिद्वस्तु लोके दृश्यते । गतमन्यत् । अथोत्तरार्धमनूद्य तात्पर्यमाह–पशूनां रू० तदाशास्ते इति । गवादिपशूनां संबधि तद्रूप 'अन्नस्य' च यः 'रसः' यच्च 'यशः' कीर्तिः या च 'श्री.' संपत् तत्सर्वं 'मयि श्रयता' सेवताम् इत्यस्यार्थस्य प्रतिपादक-त्वात् अनेनार्थेन एतामाशिषमेव 'आशास्ते' आशासते ॥ २० ॥

एव महावीरस्य भेद-निमित्तप्रायश्चित्त कृत्वा पुनस्तस्य निर्माणमनुष्ठानप्रकार च दर्शयति–अथ

१–उखावत्सान्य कुर्यं ? का. श्री. सू. २६ । १४५ । उखावदित्यस्यार्थ कात्यायन –तद्योपशये पिष्ट्वा मृदा संसृज्य करो-त्यपचेति । का. श्रौ. सू. १ । २०८ । अग्निना अनक्त तूष्णीमिति यावत् ।

व्वृता करोत्याव्वृता पचत्युत्सादनार्थमुथ यऽ उपशयुयोर्द्दढः स्यात्तेन प्प्रचरेत् ॥ २१ ॥

( तस ) सम्वत्सरो वै प्रवुर्ग्यः सुर्व्वम्वै सम्वत्सरः सुर्व्वम्प्रवुर्ग्यः स यत्प्र-व्वृक्तस्तुद्वसन्तो युद्रुचितस्तुद्ग्रीष्मो युत्पिन्वितस्तुद्वर्षा यदा वै व्वर्षाः पिन्वन्तेऽथैनाः सुर्व्वे देवाः सुर्व्वाणि भूतान्युपजीवन्ति पिन्वन्ते ह वाऽ अस्मै व्वर्षा युऽ एवुमेतद्वेद ॥ २२ ॥

अथ प्रवर्ग्यस्तुतिः ।

संवत्सरो वै प्रवर्ग्यः। सर्वं वै संवत्सरः । सर्वं प्रवर्ग्यः । स यत् प्रवृक्तः, तद्वसंतः । यत् रुचितः, तत् ग्रीष्मः । यत् पिन्वितः, तद्वर्षाः । यदा वै वर्षाः पिन्वन्ते । अथैनाः सर्वे देवाः सर्वाणि भूतान्युपजीवंति । पिन्वन्ते ह वा अस्मै वर्षाः । य एवमेतद्वेद ॥ २२ ॥

त चोपशया च पिष्ट्वा० तेन प्रचरेदिति । ' अथ ' एव प्रायश्चित्तकरणानन्तर ' त च ' भिन्न महावीर ' उपशया च ' पुरा महावीरनिर्माणकाले या मृत् तदर्थकत्वेन स्थापिता ता च ' पिष्ट्वा ' चूर्णीकृत्य ' मार्त्स्नया मृदा ' घटशरावाद्युपादानभूता लौकिकी मृत् मृत्स्ना तत्सम्बन्धिन्या ' मृदा ' चूर्णीकृत ' संसृज्य ' मिश्रीकृत्य ' आवृता ' क्रियया ' करोति ' । येन प्रकारेण पूर्वं महावीर कृत तेनैव प्रकारेण त भिन्न महावीर पुन कुर्यादित्यर्थ । " आवृता पचति " इत्येतदप्येव योज्यम् । तन्निमित्त पुन तस्य करण मिति चेदुच्यते—' उत्सादनार्थ ' उद्वासनार्थम् । एव महावीर पुन कृत्वा अथानन्तर ' य ' महावीर उप-शयासमीपे शयान य प्रवर्गीय द्वितीयस्तृतीयो वा महावीर ' दृढ ' प्रचरणसमर्थो दृढावयव स्यात् ततो दृढेन महावीरेण भेदनात् ऊर्ध्वभाविना प्रवर्ग्येण ' प्रचरेत् ' ॥ २१ ॥

अथैन प्रवर्ग्य सवत्सरात्मना स्तौति—सवत्सरो वै प्रवर्ग्यः० न्युपजीवंतीति । सवत्सरात्मक खलु अय ' प्रवर्ग्य ' । स च सवत्सर ' सर्वं वै ' सर्ववस्त्वात्मक । कृत्स्नस्य जगत कालनिवर्त्यत्वात् । अथवा कलामुहूर्तादिसर्वकालावयवसमुदायात्मक खलु स सवत्सर । तदात्मकोऽय ' प्रवर्ग्य ' । कुत इत्यत आह—स यत्प्रवृक्त इत्यादि । ' स ' प्रवर्ग्य यदा ' प्रवृक्त ' पयस आसेचनेन प्रवृज्यते तदा ' वसन्त ' सवत्सरावयवभूतवसन्तात्मको भवति । यदा ' रुचित ' समिन्धनेन सदीप्तः तदा असौ प्रवर्ग्य ' ग्रीष्म ' ग्रीष्मर्त्वात्मको भवति । यदा स घर्म ' पिन्वित ' आहवनीये पिन्वनेन हुतो भवति । तदा ' वर्षा ' वर्षर्त्वा-त्मको भवति । ' अप्सु मनस्समानिकनासाणा बहुत्र च " (पा लि अ २९) इति यविकारेवचनात् एक-स्मिन्नपि ऋतौ वर्षा इति बहुवचनम् । 'यदा वै' यस्मिन् काले खलु 'वर्षा ' 'पिन्वते' वर्षर्तु सिचति वृष्टिम् । अथानन्तरमेव ' एना ' वर्षर्तुवा अप ' सर्वे देवा ' ' सर्वाणि ' चान्यानि पशुपक्षिमृगादीनि भूतजातानि ' उपजीवन्ति ' । पिबन्ति एवमेव पिन्वित घर्म सर्वे देवा उपजीवन्तीत्यर्थ । अथैतद्वेदितु फलमाह—

१-अपिशल वचन । का. धा सू. २६ । १४६ ।

( दे ) इमे वै लोकाः प्रवर्ग्यः । सर्व्वम्वाऽ इमे लोकाः सर्व्वम्प्रवर्ग्यः स यत्प्रवृक्तस्तदयं लोको यद्रुचितस्तदन्तरिक्षलोको यत्पिन्वितस्तदसौ लोको यदा वाऽ असौ लोकः पिन्वतेऽथैनᳪं सर्व्वे देवाः सर्व्वाणि भूतान्युपजीवन्ति पिन्वते ह वाऽ अस्माऽ असौ लोको यऽ एवमेतद्वेद॥२३॥

(दे) एता वै देवताः प्रवर्ग्यः।(ग्यॉऽग्नि) अग्निर्व्वायुरादित्यः सर्व्वम्वाऽएता देवताः सर्व्वम्प्रवर्ग्यः स यत्प्रवृक्तस्तदग्निर्य्यद्रुचितस्तद्वायुर्य्यत्पिन्वितस्तदसावादित्यो यदा वाऽ असावादित्यः पिन्वतेऽथैनᳪं सर्व्वे देवाः सर्व्वाणि भूतान्युपजीवन्ति पिन्वते ह वाऽ अस्माऽ असावादित्यो यऽ एवमेतद्वेद ॥ २४ ॥

---

इमे वै लोकाः प्रवर्ग्यः । सर्वं वा इमे लोकाः । सर्वं प्रवर्ग्यः । स यत् प्रवृक्तः, तदयं लोकः यद्रुचितः, तदन्तरिक्षलोकः । यत् पिन्वितः, तदसौ लोकः । यदा वा असौ लोकः पिन्वते । अथैनं सर्वे देवाः सर्वाणि भूतान्युपजीवंति । पिन्वते ह वा अस्मा असौ लोकः । य एवमेतद्वेद ॥ २३ ॥

एता वै देवताः प्रवर्ग्यः । अग्निर्वायुरादित्यः । सर्वं वा एता देवताः । सर्वं प्रवर्ग्यः । स यत् प्रवृक्तः, तदग्निः । यद्रुचितः, तद्वायुः । यत् पिन्वितः, तदसावादित्यः । यदा वा असावादित्यः पिन्वते । अथैनं सर्वं देवाः सर्वाणि भूतान्युपजीवंति । पिन्वते ह वा अस्मा असावादित्यः । य एवमेतद्वेद ॥ २४ ॥

---

पिन्वन्ते ह वा० मेतद्वेदेति । ' अस्मै ' वेदित्रे ' वर्षा पिन्वन्ते ' वर्षन्तु वृष्ट्युदकं सिंचति खलु । ' य ' एवमुक्तप्रकारेण धर्मस्य ' एतत् ' वर्षत्वात्मकत्वं ' वेद ' ॥ २२ ॥

अथैतं प्रवर्ग्यं लोकत्रयात्मना स्तौति—इमे वै लोकाः प्रवर्ग्यः सर्वं वा० जीवन्तीति । ' इमे ' पृथिव्यादय ' लोका ' खलु ' प्रवर्ग्य ' । कथं लोकत्रयस्य प्रवर्ग्यस्य च तादात्म्यमुच्यते ? इति ब्रूम । ' इमे ' पृथिव्यादय ' लोका ' ' सर्वं वै ' सम्पूर्णं सर्ववस्त्वाश्रयभूता इत्यर्थ । प्रवर्ग्यश्च ' सर्वं ' सर्वजगदात्मक । अत सर्वात्मकत्वसाम्यात् उभयोस्तादात्म्यमेव । अपि च—यद्यदा ' प्रवृक्त ' तत्तदा ' अयं लोक. ' पृथिव्यात्मको भवति । यद्यदा ' रुचित ' तदा अन्तरिक्षलोकात्मको भवति । यद्यदा ' पिन्वित ' तदा ' असौ ' द्युलोकात्मको भवति । प्रवृक्तरुचितपिन्वितशब्दानामर्था पूर्वमेवोक्ता । ' यदा ' खलु ' असौ ' द्युलोक ' पिन्वते ' स्वसवर्षिफलमुत्पादयति । अथानन्तर'एन' द्युलोकात्मकं प्रवर्ग्यं ' सर्वे देवा ' ' सर्वाणि ' च ' भूतान्युपजीवन्ति ' । अथैतद्वदितु फलमाह—पिन्वते ह वा० तद्वेदेति । पूर्ववत् योज्यम् ॥ २३ ॥

अथेमं प्रवर्ग्यं अग्निवाय्वादित्यात्मना स्तौति—एता वै देवताः प्रव० जीवन्तीति । अग्निर्वायुरादित्य इति पूर्वोक्तलोकत्रयाभिमानिन्यो या देवता । ' एता ' खलु ' देवता ' ' प्रवर्ग्य ' । एतद्देवतात्रयात्मक इत्यर्थ. । कुत. ? ' एता ' अग्न्यादिदेवता ' सर्वं वै ' स्वमहिम्ना सर्वजगदात्मिका । प्रवर्ग्यश्च सर्वम् । अत सार्वा-

यजमानो वै प्रवर्ग्यः । ( स्तु ) तस्यात्मा प्रजा पशवः सर्व्वम्वै यजमानः सर्व्वम्प्रवर्ग्यः स यत्प्रवृक्तस्तदात्मा यद्रुचितस्तत्प्रजा यत्पिन्वित- स्तत्पशवो यदा वै पशवः पिन्वन्तेऽथैनान्त्सर्व्वे देवाः सर्व्वाणि भूतान्युप जीवन्ति पिन्वन्ते ह वाऽअस्मै पशवो यऽएवमेतद्वेद ॥ २५ ॥

( दा ) अग्निहोत्रम्वै प्रवर्ग्यः । सर्व्वम्वाऽअग्निहोत्रᳯ सर्व्वम्प्रवर्ग्यः स यदधिश्रितन्तत्प्रवृक्तो यदुन्नीतन्तद्रुचितो यद्धुतन्तत्पिन्वितो यदा वाऽ अग्निहोत्रम्पिन्वतेऽथैनत्सर्व्वे देवाः सर्व्वाणि भूतान्युपजीवन्ति पिन्वते ह वाऽअस्माऽअग्निहोत्रं यऽएवमेतद्वेद ॥ २६ ॥

---

यजमानो वै प्रवर्ग्यः । तस्यात्मा प्रजा पशवः । सर्वं वै यजमानः । सर्वं प्रवर्ग्यः । स यत् प्रवृक्तः, तदात्मा । यद्रुचितः, तत् प्रजा । यत्पिन्वितः, तत्पशवः । यदा वै पशवः पिन्वंते । अथैनान् सर्वे देवाः सर्वाणि भूतान्युपजीवंति । पिन्वंते ह वा अस्मै पशवः । य एवमेतद्वेद ॥ २५ ॥

अग्निहोत्रं वै प्रवर्ग्यः । सर्वं वा अग्निहोत्रम् । सर्वं प्रवर्ग्यः । स यदधिश्रितं, तत् प्रवृक्तः । यदुन्नीतं, तद्रुचितः । यद्धुतं, तत्पिन्वितः । यदा वा अग्निहोत्रं पिन्वते । अथैनत् सर्वे देवाः सर्वाणि भूतान्युपजीवंति । पिन्वते ह वा अस्मा अग्निहोत्रम् । य एवमेतद्वेद ॥ २६ ॥

---

त्म्यन तादात्म्यम् । अपि च–' स ' घर्मो यदा ' प्रवृक्त ' तत्तदा ' अग्नि ' आत्मको भवति । यदा ' रुचित ' तत्तदा वाय्वात्मक । यदा ' पिन्वित ' तत्तदा असावादित्यात्मक' द्युलोकस्य सूर्य एव भवति । ' यदा ' खलु ' असौ ' आदित्यात्मक' प्रवर्ग्य ' पिन्वत ' । अथानन्तरमेवेत्यादि पूर्ववत् । अथैतद्वेदनफलमाह–पिन्वते ह वा० तद्वेदेति । गतमेतत् ॥ २४ ॥

अथैन प्रवर्ग्यं यजमानात्मना स्तौति–यजमानो वै प्रवर्ग्य० न्युपजीवन्तीति । यजमानात्मक खलु अय ' प्रवर्ग्य ' । ' तस्य ' च यजमानस्य ' आत्मा प्रजा पशव ' इति वस्तुत्रयमस्ति । तद्वस्तुत्रयात्मको ' यजमान ' ' सर्वं वै ' सपूर्ण खलु । प्रवर्ग्यश्च सर्वम् । अनयो सर्वत्वसाम्यात् तादात्म्यम् । अपि च–यदा ' स ' प्रवर्ग्य ' प्रवृक्त ' तत्तदा यजमानस्यात्मा भवति । यदा असौ ' रुचित ' तदा यजमानस्य प्रजात्मको भवति । यदा ' पिन्वित ' तदा प्रवर्ग्यो यजमानस्य पश्वात्मको भवति । ' यदा ' खलु प्रवर्ग्य- तादात्म्यमापन्ना ' पशव पिन्वन्ते ' पयो दुहन्ति । अथानन्तरमेव ' एनान्पशून् ' क्षीरायुपभोगद्वारेण ' सर्वे देवा ' इत्यादि गतम् । अथैतद्वेदनफलमाह–पिन्वन्ते ह वा० तद्वेद इति । पूर्ववत् व्याख्येयम् ॥ २५ ॥

अथम अग्निहोत्रात्मना स्तौति–अग्निहोत्रं वै प्रवर्ग्य० न्युपजीवन्तीति । अग्निहोत्रात्मक यत् कर्म साय- प्रात काल्योरनुष्ठेयम्, तदात्मक खलु असौ प्रवर्ग्य । सर्वदेवताप्रीतिकरत्वात् ' अग्निहोत्र सर्व ' सर्वात्मकम् । प्रवर्ग्यश्च यज्ञभागस्यार्थत्वात् ' सर्व ' सर्वावस्थात्मक' । अत उभयो सर्वत्वसाम्यात् तादात्म्यव्यपदेश । अपि च–यदा तु अग्निहोत्रार्थं पय पाकार्थं अग्नावधिश्रित भवति । तत्तदा ' स ' घर्म ' प्रवृक्त ' । यदा

दर्शपूर्णमासौ वै प्प्रवुर्ग्यः। सुर्व्वम्वै दर्शपूर्णमासौ सुर्व्वम्प्रवुर्ग्यः स युद्धिश्रितन्तत्प्रवृक्तो युदासन्नं तद्रुचितो युद्धुतं तत्पिन्वितो यदा वै दर्शपूर्णमासौ पिन्वेतेऽअथैनौ सुर्व्वे देवाः सुर्व्वाणि भूतान्युपजीवन्ति पिन्वेते ह वाऽअस्मै दर्शपूर्णमासौ युऽएवमेतद्वेद ॥ २७ ॥

चातुर्म्मास्यानि वै प्प्रवुर्ग्यः। सुर्व्वम्वै चातुर्म्मास्यानि सुर्व्वम्प्रवुर्ग्यः स युदधिश्रितन्तत्प्रवृक्तो युदासन्नन्तद्रुचितो युद्धुतन्तत्पिन्वितो यदा वै चातुर्म्मास्यानि पिन्वन्तेऽथैनानि सुर्व्वे देवाः सुर्व्वाणि भूतान्युपजीवन्ति पिन्वन्ते ह वाऽअस्मै चातुर्म्मास्यानि युऽएवमेतद्वेद ॥ २८ ॥

---

दर्शपूर्णमासौ वै प्रवर्ग्यः। सर्वं वै दर्शपूर्णमासौ। सर्वं प्रवर्ग्यः। स यदधिश्रितं, तत् प्रवृक्तः। यदासन्नं, तत् रुचितः। यद्धुतं, तत्पिन्वितः। यदा वै दर्शपूर्णमासौ पिन्वेते। अथैनौ सर्वे देवाः सर्वाणि भूतान्युपजीवंति। पिन्वेते ह वा अस्मै दर्शपूर्णमासौ। य एवमेतद्वेद ॥ २७ ॥

चातुर्मास्यानि वै प्रवर्ग्यः। सर्वं वै चातुर्मास्यानि। सर्वं प्रवर्ग्यः। स यदधिश्रित, तत् प्रवृक्तः।

---

स्रुचि 'उन्नीत' उन्नयनेन गृहीत भवति। तत्तदा असौ 'रुचित' भवति। यद्यदा तदग्निहोत्रार्थं पय 'हुत' भवति। तत्तदा असौ घर्म 'पिन्वित' सिक्तो भवति। अधिश्रयणोन्नयनहोमरूपेणाग्निहोत्रकर्मणोऽनुष्ठानेन सायप्रात कालयो प्रवृञ्जनरोचनपिन्वनात्मक प्रवर्ग्य एवानुष्ठितो भवतीत्यर्थ। एवमग्निहोत्रस्य प्रवर्ग्यात्मना स्तुतौ सत्या प्रवर्ग्यस्यापि अग्निहोत्रतादात्म्येन स्तुति सिद्धा भवति। सायप्रात कालयो यदग्निहोत्रमनुष्ठीयते असावेव घर्म इति। 'यदा' खलु एतदग्निहोत्रात्मक प्रवर्ग्यहवि 'पिन्वते' सिच्यते। अथानन्तरमेव 'एनत्' हवि 'सर्वे देवा' इत्यादि समान पूर्वेण। अथैतद्वेदितु फलमाह—पिन्वते ह वा० तद्वेदेति। 'य' खलु 'एव' उक्तप्रकारेण 'एतत' प्रवर्ग्यस्याग्निहोत्रात्मकत्व 'वद' जानाति 'अस्मै' तदग्निहोत्र 'पिन्वते' फल सिंचति प्रयच्छतीत्यर्थ ॥ २६ ॥

अथ दर्शपूर्णमासात्मना प्रवर्ग्यं स्तौति—दर्शपूर्णमासौ वै प्रव०न्युपजीवतीति। दर्शपूर्णमासाख्यौ यौ यागौ तदात्मक खलु अय 'प्रवर्ग्य'। तौ दर्शपूर्णमासयागौ 'सर्वं वै' सर्ववस्त्वात्मकौ। प्रवर्ग्यश्च 'सर्वं' सर्ववस्त्वात्मक। तत उभयो साम्यात् परस्परतादात्म्यम्। यद्यदा तद्दर्शपूर्णमासतन्त्रे हविरग्नावधिश्रित भवति तत्तदा स घर्म 'प्रवृक्त' भवति। अधिश्रयण प्रवृञ्जनस्थानीयमित्यर्थ। यद्यदा 'आसन्न' तद्धविर्वेद्यामासादित भवति तत्तदानीं प्रवर्ग्य 'रुचित' भवति। यद्यदा तद्धविर्हुतमग्नौ प्रक्षिप्त भवति तदानीमसौ 'पिन्वित' भवति। एतौ 'दर्शपूर्णमासौ' प्रवर्ग्यात्मकौ यतो भवत। अत एव प्रवर्ग्योऽपि दर्शपूर्णमासात्मक इत्ययमर्थोऽर्थादुपपादितो भवति। यदा च 'दर्शपूर्णमासौ' प्रवर्ग्यात्मकौ 'पिन्वते'। यदा स्वफलप्रदानाय [illegible]। [illegible]न्तर [illegible]नौ 'दर्शपूर्णमासौ' [illegible] फलमाह—पिन्वेते ह वा [illegible] पूर्ववद्योज्यम् ॥ २७ ॥

अथैत चातुर्मास्यात्मना स्तौति—चातुर्मास्यानि वै प्रव०न्युपजीवंतीति। चतुर्षु मासेषु क्रियत इति

पशुबन्धो वै प्रवर्ग्यः सर्वम्वै पशुबन्धः सर्वम्प्रवर्ग्यः स यदधिश्रितस्तत्प्रवृक्तो यदासन्नस्तद्रुचितो यद्धुतस्तत्पिन्वितो यदा वै पशुबन्धः पिन्वतेऽथैनꣳ सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वाऽ अस्मै पशुबन्धो यऽएवमेतद्वेद ॥ २९ ॥

सोमो वै प्रवर्ग्यः । सर्वम्वै सोमः सर्वम्प्रवर्ग्यः स यदभिषुतस्तत्प्रवृक्तो यदुन्नीतस्तद्रुचितो यद्धुतस्तत्पिन्वितो यदा वै सोमः पिन्वतेऽथैनꣳ सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वाऽ अस्मै सोमो यऽएवमेतद्वेद न ह वाऽ अस्याप्रवर्ग्येण केनचन यज्ञेनेष्टम्भवति यऽएवमेतद्वेद ॥ ३० ॥

---

यदासन्न, तत् रुचितः । यद्धुतं, तत् पिन्वितः । यदा वै चातुर्मास्यानि पिन्वन्ते । अथैनानि सर्वे देवाः सर्वाणि भूतान्युपजीवंति । पिन्वते ह वा अस्मै चातुर्मास्यानि । य एवमेतद्वेद ॥ २८ ॥

पशुबंधो वै प्रवर्ग्यः । सर्वं वै पशुबंधः । सर्वं प्रवर्ग्यः । स यदधिश्रितः, तत्प्रवृक्तः । यदासन्नः, तद् रुचितः । यद् हुतः, तत् पिन्वितः । यदा वै पशुबंधः पिन्वते । अथैनं सर्वे देवाः सर्वाणि भूतान्युपजीवंति । पिन्वते ह वा अस्मै पशुबंधः । य एवमेतत् वेद ॥ २९ ॥

सोमो वै प्रवर्ग्यः । सर्वं वै सोमः । सर्वं प्रवर्ग्यः । स यदभिषुतः, तत्प्रवृक्तः । यदुन्नीतः, तद् रुचितः । यद्धुतः, तत् पिन्वितः । यदा वै सोमः पिन्वते । अथैनं सर्वे देवाः सर्वाणि भूतान्युप-

---

वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानि चातुर्मास्यानि तदात्मकः खलु अयं 'प्रवर्ग्यः' । तानि च प्रवर्ग्यात्मकानि इति परस्परतादात्म्येन स्तुतिः । तानि च 'चातुर्मास्यानि' 'सर्वं वै' बहुयज्ञात्मकत्वात् सर्वात्मकानि । अन्यत्सर्वं पूर्ववद्योज्यम् । अथैतद्वेदितुः फलमाह–पिन्वते ह वा० तद्वेदेति । 'अस्मै' वेदित्रे 'चातुर्मास्यानि' कर्माणि वैश्वदेवादीनि 'पिन्वते ह वै' स्वफलं प्रयच्छन्ति । गतमन्यत् ॥ २८ ॥

अथैनं पशुबन्धात्मना स्तौति–पशुबंधो वै प्रव०न्युपजीवंतीति । पशुर्बध्यते यज्ञार्थे यस्मिन् कर्मविशेषे । असौ पशुबन्धाख्यः । तदात्मकः खलु अयं 'प्रवर्ग्यः' । प्रवर्ग्यश्च सः । इति परस्परतादात्म्येन स्तुतिः । स च 'पशुबन्धः' 'सर्वं वै' सम्पूर्णावयवत्वात् सर्वात्मकः । अतः सर्वत्वसाम्यात् उभयोस्तादात्म्यव्यपदेशः । तत्र यदा हविर्भूतपशुरधिश्रितः पाकार्थमग्नौ तदा स घर्मः 'प्रवृक्तः' । यदा 'आसन्नः' पाकानन्तरं वेद्यामासादितः पशुः तदा असौ घर्मः 'रुचितः' भवति । यदा 'हुतः' तदा असौ घर्मः 'पिन्वितः' पिन्वनेन सिक्तो भवति । अन्यत्सर्वं पूर्ववद्योज्यम् । अथैतद्वेदनफलमाह–पिन्वते ह वा० तद्वेदेति । गतमेतत् ॥ २९ ॥

अथेमं प्रवर्ग्यं सोमात्मना स्तौति–सोमो वै प्रव०न्युपजीवंतीति । यः अयं लताभूतो यागसाधनभूतः 'सोमः' तदात्मकः खलु अयं 'प्रवर्ग्यः' । कुत इति चेत् उच्यते–सर्वं वै सर्वमेव खलु वस्तु सोमः सकल-

(द्वा) अथैतद्धे । (द्वाऽआ) आयुरेतज्ज्योतिः प्रविशति यऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ ३१ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ १४–२–३ ॥ (३–२) ॥

इति द्वितीयप्रपाठकः समाप्तः ॥ १४–२ ॥

कंडिकासंख्या ॥ १२२ ॥

इति तृतीयोऽध्यायः समाप्तश्च ॥१४–३॥ कण्डिकासंख्या ॥ ६७ ॥

इति प्रथमं प्रवर्ग्यकाण्डं समाप्तम् ॥ १४–१ ॥

---

जीवति । पिन्वते ह वा अस्मै सोमः । य एवमेतद्वेद । न ह वा अस्याप्रवर्ग्येण केनचन यज्ञेनेष्टं भवति । य एवमेतद्वेद ॥ ३० ॥

अथ एतद्वै आयुः, एतज्ज्योतिः प्रविशति । य एतमनु वा ब्रूते भक्षयति वा । तस्य व्रतचर्या-या सृष्टौ ॥ ३१ ॥

इति सोमादिकर्मशेषाभिधायक प्रवर्ग्यकाण्डं समाप्तम् ॥

---

यागसाधनत्वात् । यदा आहुतिद्वारा सर्वस्य जगत उपकारणमत्वात् तस्य सदा मकत्वात् । अत एव प्रवर्ग्योऽपि 'सर्वम्' तस्मादुभयो सर्वं व्रसाम्यात् तादात्म्यन स्तुति । अपि च—यदा 'स' 'सोम' 'धनिषुत' अभिषवसंस्कारेण द्रवीकृत भवति तदा असौ 'प्रवृक्त' भवति । यदा तूष्णीं अभिषवानन्तर चमसेषु गृहीतो भवति तदा असौ प्रवर्ग्य 'रुचिर' भवति । यदा तु अग्नौ स सोम 'हुत' भवति तदा अयं 'पिन्वित' निरो भवति । एतदुक्तं भवति । सोमस्याभिषवोत्तरनहोमा प्रवृजनरोचनपिन्वनात्मका । अत एव एतानि प्रवृजना दीनि तदात्मकानि । अन्यत् पूर्ववदोच्यम् । अथैतद्वेदनफलमाह—पिन्वते ह वा० तद्वेदेति । एवमुक्तप्रकारेण 'य' खलु 'एतत्' प्रवर्ग्यस्य सोमात्मकत्व 'वेद' जानाति । 'अस्मै' जानत स 'सोम' 'पिन्वा' फलप्रदो भवति । इत्थ प्रवर्ग्यस्याग्निहोत्रादात्मकत्वमुक्त्वा तद्वेदितु फलमुक्तम् । अथ तस्याग्निहोत्रादीनामपि यज्ञ कार्यात्मकत्वमुक्तम् । तद्वेदनफलमाह—न ह वा अस्या० तद्वेदेति । 'य' एवमुक्तप्रकारेण अग्निहोत्रादिकर्मसु अभिषवणादौ प्रवृजनादिसंपादनात् प्रवर्ग्यात्मकत्वमुक्तम् । तद्वेद जानीयात् । 'अस्य' विदितु 'केनचन' केनापि अग्निहोत्रादिना 'यज्ञेन' 'अप्रवर्ग्येण' प्रवर्ग्यरहितेन यजु 'न इष्ट' भवति । सर्वमपि यज्ञु उक्त प्रकारेण प्रवर्ग्यस्य संपादनात् सप्रवर्ग्येणैव सत्रेण यज्ञजातेन इष्टवान् भवतीत्यर्थः ॥ ३०॥

एतद्ब्राह्मणाध्ययनतदर्थानुष्ठानयो कर्तु प्रागुक्तं प्रावदं पूर्ववदतिदिशति—अथैतद्वा आ० सृष्टाविति । अथेत्यारम्भे । यत प्रागुक्त प्रवर्ग्योऽत्र तथैतद्ब्राह्मणे स्तुतन । एतदुभयं आयुर्जीवन तद्द्भूतमित्यर्थ । अनलस्य प्रवाचरणेन रक्षा कार्या इति भाव । कुतोऽस्य रक्षणापेक्षेति तमाह—एतज्ज्योतिरिति । 'य' खलु पुमान् 'एत' प्रवर्ग्य 'अनुब्रूते' कर्मकाले अधीते वा । तस्य हुतशिष्ट हविर्भक्षयति वा । स एतज्ज्योति दुखो